'—उपदाहे' इति मैत्रेयः। न्यासेऽपि (3-1-138 सूत्रे)।

लेपकः-पिका, लेपकः-पिका, लिलिप्सकः-प्सिका, लेलिपकः-पिका ;
लेप्ता-त्री, लेपयिता-त्री, लिलिप्सिता-त्री, लेलिपिता-त्री ;
[1]लिम्पन्-न्ती-ती, लेपयन्-न्ती, लिलिप्सन्-न्ती ; —
इत्यादीनि रूपाणि सर्वाण्यपि तौदादिक**दिशति**वत् (841) बोध्यानि।
लिम्पः[2], निलिम्पाः[3] [देवाः], [4]प्रलिपः, लिपिः[5]-लिबिः
इमानि रूपाण्यधिकानीति विशेषः।

(1489) " **लिश अल्पीभावे** " (IV-दिवादिः-1179. अक.अनि. आत्म.)

'**लिश्यते** लिशतीत्येव**मल्पीभावे** गतौ क्रमात्॥' (श्लो. 165) इति **देवः**।
लेशकः-शिका, लेशकः-शिका, लिलिक्षकः-क्षिका, लेलिशकः-शिका ;
लेष्टा-ष्ट्री, लेशयिता-त्री, लिलिक्षिता-त्री, लेलिशिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि तौदादिक**दिशति**वत् (841) बोध्यानि। क्विपि-लिट्-लिड्-लिशौ-लिशः ; शानचि-लिश्यमानः[A] इति च विशेषः। लिक्षा, अलिक्षम्= क्षुद्रजन्तुविशेषः।

---

1. विकरणप्रत्यये शप्रत्यये परतः, 'शे **मुचादीनाम्**' (7-1-59) इति नुमागमे रूपमेवम्।
2. अनुपसर्गे **लिपेः**, 'अनुपसर्गात्—' (3-1-138) इति शप्रत्यये 'शे मुचादीनाम्' (7-1-59) इति नुमि रूपमेवम्। लिम्पतीति-**लिम्पः**।
3. नौ उपपदे धातोः '**नौ लिम्पेरिति** वक्तव्यम्' (वा. 3-1-138) इति शप्रत्यये रूपमेवं भवति। **निलिम्पा** नाम देवाः।
4. उपसर्गे उपपदे इगुपधलक्षणकप्रत्यय एव।
5. 'इगुपधात् किच्च' [द. उ. 1-48] इति इन्प्रत्ययः। 'दिवाविभा—' (3-2-21) इत्यत्र '**लिपिः लिबि**—' इति निर्देशात् अस्यैव पाक्षिको बकारः पकारस्य, तेन **लिबिः**, इत्यपि साधुरिति **धातुवृत्तिः**।

A. '.............शेषं व्यसृज्यत पदौघ**मलिश्यमानम्**॥' धा. का. 2-62.



(1490) " **लिश गतौ** " (VI-तुदादिः-1421. सक. अनि. पर.)

'लिश्यते **लिशती**त्येवमल्पीभावे **गतौ** क्रमात्॥' (श्लो. 165) इति **देवः**। [अ]
लेशकः-शिका, लेशकः-शिका, लिलिक्षकः-क्षिका, लेलिशकः-शिका ;
लेष्टा-लेष्ट्री, लेशयिता-त्री, लिलिक्षिता-त्री, लेलिशिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि तौदादिक**दिशति**वत् (841) ऊह्यानि।

(1491) " **लिह आस्वादने** " (II-अदादिः-1016. सक. अनि. उभ.)

लेहकः-हिका, लेहकः-हिका, [1]लिलिक्षकः-क्षिका, लेलिहकः-हिका ;
[2]लेढा-ढ्री, लेहयिता-त्री, लिलिक्षिता-त्री, लेलिहिता-त्री ;
लिहन्-ती, लेहयन्-न्ती, लिलिक्षन्-न्ती ; —
लेक्ष्यन्-न्ती-ती, लेहयिष्यन्-न्ती-ती, लिलिक्षिष्यन्-न्ती-ती ; —
लिहानः, लेह्यमानः, लिलिक्षमाणः, लेलिह्यमानः ;
लेक्ष्यमाणः, लेहयिष्यमाणः, लिलिक्षिष्यमाणः, लेलिहिष्यमाणः ;
लिट्-लिड्-लिहौ-लिहः ; — — —
[3]लीढम्-ढः-ढवान्, लेहितः-तम्, लिलिक्षितः, लेलिहितः-तवान् ;
[4]लेहः, [5]लेहनः, [6]मधुलेही,

---

1. सन्नन्ते 'हलन्ताच्च' (1-2-10) इति सनः कित्वात् न गुणः। धातुहकारस्य 'हो ढः' (8-2-31) इति ढत्वे, 'षढोः कः सि' (8-2-41) इति तस्य ककारे 'इण्कोः' (8-3-57) 'आदेशप्रत्यययोः' (8-3-59) इति प्रत्ययसकारस्य षकारे च रूपम्। एवमुपर्यपि यथासम्भवं ज्ञेयम्।
2. धातुहकारस्य ढत्वे, 'झषस्तथोः—' (8-2-40) इति धत्वे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन धकारस्य ढकारे, 'ढो ढे लोपः' (8-3-11) इति धातुस्थढकारस्य लोपे रूपमेवम्। एवमेव तुमुनादिषु प्रक्रिया ज्ञेया।
3. अत्रापि ढत्वधत्वष्टुत्वढलोपाः। प्रत्ययस्य कित्वाच्च प्रकृतेर्गुणः।
4. इगुपधलक्षणकप्रत्ययस्यापवादे 'श्याद्व्यध—' (3-1-141) इति णप्रत्यये गुणे च रूपमेवम्।
5. बाहुलकान्नन्द्यादित्वेन कर्तरि ल्युप्रत्ययेऽनादेशे च रूपमेवम्।
6. मधु लेढीति **मधुलेही**। 'सुप्यजातौ—' (3-2-78) इति णिनिः।

[अ] "**तुदादिश्चायं** ['—अल्पीभावे] **क्षीरस्वामिधनपालयोः**। 'लिश गतौ'। तुदादिः तयोरनुमतोऽयं पाठः। द्विष्पाठस्त्वेवमर्थभेदान्नूनम्। एवं तु '**लिश** गत्यल्पीभावयोः' इत्यनुक्तिर्वैचित्र्यार्था" इति **पुरुषकारोक्त**मिहानुसन्धेयम्।

[1]वहंलिहः-अभ्रंलिहः, [2]लेलिहानः, लेहः, लिलिक्षुः, लेलिहः ;
लेढव्यम्, लेहयितव्यम्, लिलिक्षितव्यम्, लेलिहितव्यम् ;
लेहनीयम्, लेहनीयम्, लिलिक्षणीयम्, लेलिहनीयम् ;
लेह्यम्, लेह्यम्, लिलिक्षिष्यम्, लेलिह्यम् ;
ईषल्लेहः-दुर्लेहः-सुलेहः ; — — —
लिह्यमानः, लेह्यमानः, लिलिक्षिष्यमाणः, लेलिह्यमानः ;
लेहः, मधुलेहः, लेहः, लिलिक्षः, लेलिहः ;
लेढुम्, लेहयितुम्, लिलिक्षितुम्, लेलिहितुम् ;
लीढिः, लेहना, लिलिक्षा, लेलिहा ;
लेहनम्, लेहनम्, लिलिक्षणम्, लेलिहनम् ;
लीढ्वा, लेहयित्वा, लिलिक्षित्वा, लेलिहित्वा ;
संलिह्य, संलेह्य, संलिलिक्ष्य, संलेलिह्य ;
लेहम् २, लीढ्वा २, } लेहम् २, लेहयित्वा २, } लिलिक्षम् २, लिलिक्षित्वा २, } लेलिहम् २ ; लेलिहित्वा २. }

(1492) " **ली श्लेषणे** " (IX-क्र्यादिः-1501. अक. अनि. पर.)

**प्वादिः, ल्वादिश्च ।**

' यौ द्रवीकरणेऽनात्वे लीनयेत् लाययेत् लयेत् ॥
लापयेल्लालयेदात्वे **श्लेषणे** लीयतेऽलिनात् ।' (श्लो. 17-18) इति देवः ।

---

1. वहं=स्कन्धं लेढीति **वहंलिहः**=वत्सः । अभ्रं लेढीति **अभ्रंलिहः**=वायुः सौधो वा । '**वहाभ्रे लिहः**' (3-2-32) इति खश् । 'कर्तरि शप्' (3-1-68) इति शप् । तस्य 'अदिप्रभृतिभ्यः—' (2-4-72) इति लुक् । खित्वात् 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति पूर्वपदस्य मुमागमः । प्रत्ययस्य शित्त्वेन सार्वधातुकत्वम् ; तेन 'सार्वधातुकमपित्' (1-2-4) इति ङिद्वद्भावान्न गुणः ।
2. यङन्तात् चानश्प्रत्यये रूपमेवम् । अन्यथा **लेलिह्यमान** इत्येव शानचि भवेत् ।



[1]लायकः-यिका, [2]लालकः-लिका, [3]लीनकः-निका, निलापकः-पिका, [4]लिलीषकः-षिका, [5]लेलीयकः-यिका ;
[6]लेता-लेत्री, लाता-त्री, लापयिता-लालयिता-त्री, लीनयिता-त्री, लिलीषिता-त्री, लेलीयिता-त्री ;
[7]लिनन्-ती, लापयन्, लालयन्, लीनयन्-न्ती, लिलीषन्-न्ती ; —
लास्यन्-लेस्यन्-न्ती-ती, लापयिष्यन्-लालयन्-लीनयन्-न्ती-ती, लिलीषिष्यन्-न्ती-न्ती ; —
— लापयमानः-लालयमानः-लीनयमानः, — लेलीयमानः ;
— [8]जटाभिर्लापयमानः, वर्त्तिकामुल्लापयमानः, बालमुल्लापयमानः ;
— लापयिष्यमाणः-लालयिष्यमाणः-लीनयिष्यमाणः, — लेलीयिष्यमाणः ;
लीः-लियौ-लियः ; — — —
[9]लीनम्-नः-नवान्, लापितः-लालितः-लीनितः, लिलीषितः, लेलीतः-तवान् ;

---

1. ण्वुलि, 'विभाषा **लीयतेः**' (6-1-51) इत्याकारविकल्पः—एज्विषये । आत्वपक्षे 'आतो युक्—' (7-3-33) इति युगागमे रूपमेवम् । आत्वाभावपक्षे वृद्धौ आयादेशे च **लायकः** इत्येव रूपमिति ज्ञेयम् । एवमुत्तरत्रापि ।
2. '**लीलो**र्नुग्लुकावन्यतरस्यां स्नेहविपातने' (7-3-39) इति ण्यन्ते लुगागमविकल्पः—स्नेहविपातने । स्नेहविपातनं नाम कठिनद्रव्यस्याग्नौ निष्टपनेन द्रवीकरणम् । एतद्भिन्नार्थे तु 'विभाषा **लीयतेः**' (6-1-51) इत्यात्वे 'अर्तिह्री—' (7-3-36) इति पुगागमे **लापकः** इत्यादीनि रूपाणि ।
3. अनेनैव सूत्रेण (7-3-39) पाक्षिके नुगागमे **लीनकः** इत्यादीनि रूपाणि ।
4. सन्नन्ते 'इको झल्' (1-2-9) इति सनः कित्त्वं सर्वत्र ज्ञेयम् ।
5. यङन्ते 'गुणो यङ्लुकोः' (7-4-82) इति गुणोऽभ्यासस्य ।
6. धातोरनिट्त्वात् इडागमो न । गुणः । एवं तव्यदादिष्वपि ज्ञेयम् ।
7. शतरि '**क्र्यादिभ्यः**—' (3-1-81) इति श्ना विकरणप्रत्ययः । '**प्वादीनां** ह्रस्वः' (7-3-80) इति धातोरीकारस्य ह्रस्वः । 'श्नाऽभ्यस्तयोः—' (6-4-112) इत्याकारलोपः ।
8. '**लियः** सम्माननशालीनीकरणयोश्च' (1-3-70) इति ण्यन्तात् अकर्त्रभिप्रायेऽपि आत्मनेपदमेव । सम्माननम्=पूजा । शालीनीकरणम्=न्यग्भावनम् । जटाभिः **आलापयमानः**=जटया हेतुना पूजां समधिगच्छन् इत्यर्थः । वर्तिकामुल्ला**पयमानः**=पक्षिविशेषं न्यक्कृत्येत्यर्थः । एतयोरुभयोरेवार्थयोस्तङ् । **बालकमुल्लापयमानः**, वञ्चयन्नित्यर्थः प्रलम्भनार्थेऽपीति वार्त्तिकात् (३४८३) ।
9. '**ल्वादिभ्यः**—' (8-2-44) इति निष्ठातकारस्य नकारः ।

[1]लयः, लापः-लालः-लीनः, लिलीषुः, लिलापयिषुः, लेल्यः-लेलियः ;
लेतव्यम्-लातव्यम्, लापयितव्यम्-लालयितव्यम्-लीनयितव्यम्, लिलीषितव्यम्, लेलीयितव्यम् ;
लयनीयम्-लानीयम्, लापनीयम्-लालनीयम्-लीननीयम्, लिलीषणीयम्, लेलीयनीयम् ;
[2]ईषल्लयः-दुर्लयः-सुलयः ; — — —
लीयमानः, लाप्यमानः-लाल्यमानः-लीन्यमानः, लिलीष्यमाणः, लेलीय्यमानः ;
लयः, लापः-लालः-लीनः, लिलीषः, लेलीयः ;
लातुम्-लेतुम्, लापयितुम्-लालयितुम्-लीनयितुम्, लेलीयितुम् ;
[3]लीनिः, लापना-लालना-लीनना, लिलीषा, लेलीया ;
लयनम्, लानम्, लापनम्-लालनम्-लीननम्, लिलीषणम्, लेलीयनम् ;
लीत्वा, लालयित्वा-लापयित्वा-लीनयित्वा, लिलीषित्वा, लेलीयित्वा ;
[4]विलाय-विलीय, विलाप्य-विलाल्य-विलीन्य, विलिलीष्य, विलेलीय ;
लायम् २ लीत्वा २, लापम् २-लालम् २-लीनम् २,
[5]जतुविलायं विलिल्ये, लापयित्वा २-लालयित्वा २-लीनयित्वा २,
लिलीषम् २, लिलीषित्वा २, लेलीयम् २ ; लेलीयित्वा २.

(1493) **" ली द्रवीकरणे "** (X-चुरादिः-1812. सक. अनि. उभ.)

**आधृषीयः।** तेन णिज्विकल्पः ।

' यौ द्रवीकरणेऽनात्वे लीनयेल्लाययेल्लयेत् ॥

---

1. पचाद्यचि रूपमेवम् । 'निमिमीलियां खल्चोरात्वं न' (वा. 6-1-51) इत्यत्र 'अच्' इत्यनेन पचाद्यचोऽपि ग्रहणमिति **पदमञ्जरी।**
2. अत्रापि खल्प्रत्यये आत्वं न ।
3. '**ऋल्वादिभ्यः—**' (वा. 3-3-94) इति क्तिनस्तकारस्य नकारः ।
4. 'विभाषा **लीयतेः**' (6-1-51) इति ल्यपि आत्वविकल्पः । आत्वपक्षे **विलाय** इति, आत्वाभावपक्षे **विलीय** इति च रूपद्वयम् ।
5. 'उपमाने कर्मणि च' (3-4-45) इति णमुल् । 'कषादिषु—' (3-4-46) इति यथाविध्यनुप्रयोगः ।



लापयेत् लालयेदात्वे श्लेषणे लीयतेऽलिनात् ।' (श्लो 17-18) इति **देवः** ।
लायकः-यिका, लिलाययिषकः-षिका, लायकः-यिका, लिलीषकः-षिका, लेलीयकः-यिका ;
लाययिता-त्री, लिलाययिषिता-त्री, लेता-त्री, लिलीषिता-त्री, लेलीयिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि ण्यन्तरूपाणि, ण्यन्तप्रकृतिकसन्नन्तरूपाणि च विना क्रैयादिक**प्लिनाति**वत् (1081) ऊह्यानि । ण्यन्ते-तत्प्रकृतिकसन्नन्ते च इमानि रूपाणि—लाययन्-न्ती, लिलाययिषन्-न्ती ; लाययिष्यन्-न्ती-ती-लिलाययिषिष्यन्-न्ती-ती ; लाययमानः, लिलाययिषमाणः, लाययिष्यमाणः, लिलाययिषिष्यमाणः ;
लाः- लायौ-लायः ; — — —
लायितम्-तः, लिलाययिषितम्-तः-तवान् ; लायः, लिलाययिषुः ; लाययितव्यम्, लिलाययिषितव्यम् ; लायनीयम्, लिलाययिषणीयम् ; लाय्यम्, लिलाययिष्यम् ;
ईषल्लायः-दुर्लायः-सुलायः; लाय्यमानः, लिलाययिष्यमाणः ; लायः, लिलाययिषः;
लाययितुम्, लिलाययिषितुम् ; लायना, लिलाययिषा ; लायनम्, लिलाययिषणम् ;
लाययित्वा, लिलाययिषित्वा ; प्रलाय्य, प्रलिलाययिष्य ; लायम्२-लाययित्वा २;
लिलाययिषम् २-लिलाययिषित्वा २. इति विशेषः ।

(1494) **" लीङ् श्लेषणे "** (IV-दिवादिः-1139. अक. अनि. आत्म.)

' लापयेल्लालयेदात्वे **श्लेषणे लीयते**ऽलिनात् ।' (श्लो. 18) इति **देवः** ।
लायकः-यिका, लालकः-लीनकः-निका, लापकः-पिका, लिलीषकः-षिका, लेलीयकः-यिका ;
लेता-त्री, लालयिता-लीनयिता-लापयिता-त्री, लिलीषिता-त्री, लेलीयिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि क्रैयादिक**लिनाति**वत् (1492) ज्ञेयानि ।
खल्प्रत्यये-ईषद्विलयः-दुर्विलयः-सुविलयः इति ।

(1495) **" लुजि हिंसाबलादाननिकेतनेषु "**

(X-चुरादिः-1567. सक. सेट्. उभ.)

**क्षीरस्वामिनैव** ' लुजि ' इति पठ्यते । **अन्ये** सर्वेऽपि मतान्तरत्वेनैव पठन्ति अयं पाठः **मा. धा. वृत्तौ** नाऽऽदृतः । **मैत्रेयादिभि**रपि न पठ्यते ।
लुञ्जकः-ञ्जिका, लुलुञ्जयिषकः-षिका, लुञ्जकः-ञ्जिका, लुलुञ्जिषकः-षिका,

लोलुञ्जक:-ञ्जिका; लुञ्जयिता-त्री, लुलुञ्जयिषिता-त्री, लुञ्जिता-त्री, लुलुञ्जिषिता-त्री, लोलुञ्जिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**चिन्तयति**वत् (523) बोध्यानि ।

(1496) " **लुजि भाषार्थः** " (X-चुरादिः-1579. अक. सेट्. उभ.)

**आस्वदीयः ।**

अर्थभेदार्थं पुनः पाठः । अन्यत् प्रयोजनं नेति ज्ञायते ।

**धातुकाव्ये** अयं न दृश्यते ।

लुञ्जक:-ञ्जिका, लुलुञ्जयिषक:-षिका, लुञ्जक:-ञ्जिका, लुलुञ्जिषक:-षिका, लोलुञ्जक:-ञ्जिका ;
लुञ्जयिता-त्री, लुलुञ्जयिषिता-त्री, लुञ्जिता-त्री, लुलुञ्जिषिता-त्री, लोलुञ्जिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**चिन्तयति**वत् (523) ऊह्यानि ।

(1497) " **लुट विलोटने** " (I-भ्वादिः. 314. सक. सेट्. पर.)

' णौ लोटयति भाषार्थे लुटचेल्लोटति लोटने ॥ '
लोटते प्रतिघातेऽर्थे स्तेये लुण्टति लुण्टयेत् ।' (श्लो. 73-74) इति **देवः** ।
लोटक:-टिका, लोटक:-टिका, लुलुटिषक:-लुलोटिषक:-षिका, लोलुटक:-टिका ; लुटिता-त्री, लोटयिता-त्री, लुलुटिषिता-लुलोटिषिता-त्री, लोलुटिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुकति**वत् (197) ऊह्यानि । " **लुड**— इति टवर्गतृतीयान्तः इति **कौशिककाश्यपनन्दिद्रमिडाः** " इति **मा. धा. वृत्तौ** । '—**विलोडने**' इति **दुर्गः** । 'लुट—' इत्यत्र '**लुल**— इति **अन्ये**' इति **धा. का. व्याख्याने** (2-1) । " भूवादिसूत्रे (1-3-1) **सुधाकरः**- '**लुल**—' इति लान्तोऽपि दृश्यते, 'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्-भुजाकारबृहत्तरङ्गम्' शि. व. (3-72) इति । डलयोरेकत्वस्मरणमिति वा प्रतिविधेयम् " इति **मा. धा. वृत्तौ**. इत्युक्तमत्र स्मरणीयम् । [1]लोलमानः[A] ।

---

1. 'ताच्छील्यवयोवचनशक्तिषु **चानश्**' (3-2-29) इति ताच्छील्ये चानश्प्रत्यये रूपमेवम् ।

A. 'आमूलाद्रिरभितो वलिवीचीर्**लोलमान**विततालुलिहस्तैः ।' शि. व. 10-59.



(1498) " **लुट प्रतीघाते** " (I-भ्वादिः-749. सक. सेट्. आत्म.)

'**लोटते प्रतिघाते**ऽर्थे स्तेये लुण्टति लुण्टयेत् ।' (श्लो. 74) इति **देवः** ।
अयं पाठो **देवमैत्रेयादीनाम्** । **क्षीरस्वामी** तु द्वितीयान्तं पठित्वा '**लुट**' इत्येके, इति वदति ।
लोटक:-टिका, लोटक:-टिका, लुलुटिषक:-लुलोटिषक:-षिका, लोलुटक:-टिका ; लुटिता-त्री, लोटयिता-त्री, लुलुटिषिता-लुलोटिषिता-त्री, लोलुटिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुकति**वत् (197) ऊह्यानि ।

(1499) " **लुट विलोडने** " (IV-दिवादिः-1222. सक. सेट्. पर.)

'—**विलोटने**' इति **क्षीरस्वामी** । '**लुठ**—' इति द्वितीयान्तः पठितः **सि. कौमुद्याम्** । **धातुकाव्ये**ऽपि (2-66) एवमेव । शतरि-लुठ्यन् इति अस्य प्रयोगोऽपि दृश्यते ।
' णौ लोटयति भाषार्थे, **लुट्ये**ल्लोटति लोटने ॥ ' (श्लो. 73) इति **देवः** ।
लोटक:-टिका, लोटक:-टिका, लुलुटिषक:-लुलोटिषक:-षिका, लोलुटक:-टिका ; लोटिता-त्री, लोटयिता-त्री, लुलुटिषिता-लुलोटिषिता-त्री, लोलुटिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि दैवादिक**गुध्यति**वत् (405) ऊह्यानि ।

(1500) " **लुट संश्लेषणे** " (VI-तुदादिः-1381. सक. सेट्. पर.)

**[कुटादिः ।**

'**लुठ**—' इति **धा. का. व्याख्याने** (2-81), '**लुड इत्येके**' इति च तत्रोपात्तम् । **क्षीरतरङ्गिण्यां** धातुरयं न पठितः । अपि तु 'पुट संश्लेषणे' इत्यत्र '**लुट** विलोडने इति **दुर्गः**' इत्युपात्तम् । तत्र टिप्पण्यां " **कातन्त्र-धातुपाठे** '**लुट संश्लेषणे**' इति पाठः, **काशकृत्स्ने लुठ**—" इत्येवं दृश्यते ।
' णौ लोटयति भाषार्थे लुट्येत् लोटति लोटने ॥ ' (श्लो. 73) इति **देवः** ।
लोटक:-टिका, लोटक:-टिका, लुलुटिषक:-षिका, लोलुटक:-टिका ;
लुटिता-त्री, लोटयिता-त्री, लुलुटिषिता-त्री, लोलुटिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि तौदादिक**कुटति**वत् (204) बोध्यानि ।

(1501) "**लुट भाषार्थः**" (X-चुरादिः-1755. सक. सेट्. उभ.) -
[आस्वदीय। ।

'**णौ लोटयति भाषार्थे** लुट्येल्लोटति लोटने ॥' (श्लो. 73) इति **देवः** ।
लोटकः-टिका, लुलोटयिषकः-षिका ; लोटयिता-त्री, लुलोटयिषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कोटयति**वत् (205) बोध्यानि ।

(1502) "**लुटि स्तेये**" (I-भ्वादिः-328. सक. सेट्. पर.)

'लोटते प्रतिघातेऽर्थे **स्तेये लुण्टति** लुण्टयेत् ।' (श्लो. 74) इति **देवः** ।
'**लुठि—**' इत्येके इति **तरङ्गिण्याम्** । किन्तु **पुरुषकारे**, 'लुण्ठेति **क्षीरस्वामी**' इति उद्धृतम् । **शाकटायनस्तु** तृतीयान्तं (लुडि) पपाठ । इति **मा. धा.** वृत्तिः । **धातुकाव्ये**ऽपि (2-66) एवमेव ।
लुण्टकः-ण्टिका, लुण्टकः-ण्टिका, लुलुण्टिषकः-षिका, लोलुण्टकः-ण्टिका ;
लुण्टिता-त्री, लुण्टयिता-त्री, लुलुण्टिषिता-त्री, लोलुण्टिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कुण्टति**वत् (209) ज्ञेयानि ।
[1]लुण्टाकः[A]-लुण्टाकी ।

(1503) "**लुठ उपघाते**" (I-भ्वादिः-337. सक. सेट्. पर.)

'श्लेषालस्योप**घातेषु** प्रतिघाते क्रमाल्लुठेत् ।
लुण्ठेत्, **लोठति** लोठेत किन्तु गत्यां च लुण्ठति ॥' (श्लो. 78) इति **देवः** ।
"अत्र **मैत्रेयः** '**उठेत्यप्येके**' इति । [लुड इत्येके इति च ।] **धनपाल-शाकटायनौ** रुठ लुठेत्येव पेठतुः । **क्षीरस्वामी** तु **उठिं** पठित्वा 'रुठ लुठ इत्यपि **दौर्गाः**' इत्याह" इति **मा. धा. वृत्तिः** ।
लोठकः-ठिका, लोठकः-ठिका, लुलुठिषकः-लुलोठिषकः-षिका, लोलुठकः-ठिका ;
लोठिता-त्री, लोठयिता-त्री, लुलुठिषिता-लुलोठिषिता-त्री, लोलुठिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुकति**वत् (197) ऊह्यानि ।

1. तच्छीलादिषु कर्तृषु 'जल्पभिक्षकुट्टलुण्ट—' (3-2-155) इति षाकन्प्रत्यये रूपमेवम् । षित्त्वात् स्त्रियां ङीष्प्रत्यये लुण्टाकी इति ।

A. **क्षीरतरङ्गिण्याम्** (भ्वादौ) उद्धृतत्वात् अत्र उपात्तम् । 'जल्पभिक्षकुट्टलुण्ट—' (3-2-155) इत्यत्र **न्यासपदमञ्जर्योः** '**लुण्ट** स्तेये चौरादिकः' इत्युक्तत्वात् अत्र पाठः न समीचीनः इति ज्ञायते ।



(1504) "**लुठ प्रतीघाते**" (I-भ्वादिः-749. सक. सेट्. आत्म.)
**क्षीरस्वामी** त्वेवं पठित्वा '**लुट इत्येके**' इत्याह ।
'श्लेषालस्योपघातेषु **प्रतिघाते** क्रमाल्लुठेत् ।
लुण्ठेत्, लोठति लोठेत किन्तु गत्यां च लुण्ठति ॥' (श्लो. 78) इति **देवः** ।
लोठकः-ठिका, लोठकः-ठिका, लुलुठिषकः-लुलोठिषकः-षिका, लोलुठकः-ठिका ;
लोठिता-त्री, लोठयिता-त्री, लुलुठिषिता-लुलोठिषिता-त्री, लोलुठिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुकति**वत् (197) बोध्यानि । कर्तरि क्तप्रत्यये [1]लुठितम्-लोठितम्[A] इति ।

(1505) "**लुठि आलस्ये प्रतिघाते च**"
(I-भ्वादिः-343. सक. सेट्. पर.)

'श्लेषालस्योपघातेषु प्रतिघाते क्रमाल्लुठेत् ।
**लुण्ठेत्**, लोठति लोठेत किन्तु गत्यां च लुण्ठति ॥' (श्लो. 78) इति **देवः** ।
अत्र **क्षीरतरङ्गिण्यां** '**रुठि** आलस्ये **गति**प्रतिघाते च' इत्येव दृश्यते ।
अन्यत्र सर्वेषु कोशेषु '**लुठि—**' इत्येव दृश्यते ।
लुण्ठकः-ण्ठिका, लुण्ठकः-ण्ठिका, लुलुण्ठिषकः-षिका, लोलुण्ठकः-ण्ठिका ;
लुण्ठिता-त्री, लुण्ठयिता-त्री, लुलुण्ठिषिता-त्री, लोलुण्ठिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि भौवादिक**कुण्ठति**वत् (209) ऊह्यानि ।

(1506) "**लुठि गतौ**" (I-भ्वादिः-346. सक. सेट्. पर.)
'…………**गत्यां च लुण्ठति** ॥' (श्लो. 78) इति **देवः** ।
लुण्ठकः-ण्ठिका, लुण्ठकः-ण्ठिका, लुलुण्ठिषकः-षिका, लोलुण्ठकः-ण्ठिका ;
लुण्ठिता-त्री, लुण्ठयिता-त्री, लुलुण्ठिषिता-त्री, लोलुण्ठिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि ।

1. 'उदुपधात्—' (1-2-21) इति निष्ठायां किर्त्वविकल्पेन रूपद्वयं भवति ।

A. 'श्रिया समग्रं युति तं मदेनेव **प्रलोठितम्** ॥' भ. का. 7-104.

(1507) " **लुण्ठ स्तेये** " (X-चुरादिः-1563. सक. सेट्. उभ.)

'............**स्तेये** लुण्टति **लुण्टयेत्** ।' (श्लो. 74) इति **देवः** । **धातुकाव्ये** (3-16) ' —**अनादरे च द्रुमे** ' इत्युपात्तम् । 'लुण्ठ लुण्ट' इति टवर्गप्रथमान्तः, द्वितीयान्त इति चात्र मतद्वयम् । 'लुण्ड' इत्यपि **शाकटायनः** । **पुरुषकारे** **टान्तपाठ** एव साधुः, ठान्तोऽप्रामाणिक इति साग्रहं **क्षीरस्वामि**मतनिरासपूर्वकं प्रतिपादितम् । **माधव**-प्रभृतयः ठान्तपाठमेव **न्यासा**दिग्रन्थसंवादपुरस्सरं स्थापयामासुः । 'जल्पभिक्ष-कुट्टलुण्ट—' (3-2-155) इत्यत्र **सूत्रकारैः** टान्तोऽथ वा ठान्तः पठितोऽयं धातुरित्यत्र नियामकं किमपि न दृश्यते । **उभये**ऽपि स्वस्वमतानुसारेण टान्तं ठान्तं च सूत्रेऽपि पठन्ति । ईदृशस्थलेषु ' प्रयोग एव भगवान् तान् व्यवस्थापयेत् पथि ' इत्युक्तदिशा शिष्टप्रयोगस्योभयथाऽप्युपलम्भाद् वयं तूष्णीकाः ।

लुण्ठकः-ण्ठिका, लुलुण्ठयिषकः-षिका, लोलुण्ठकः-ण्ठिका ; लुण्ठयिता-त्री, लुलुण्ठयिषिता-त्री, लोलुण्ठिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक-**कुस्मयति**वत् (236) बोध्यानि । [1]लुण्ठाकः-ठाकी, लुण्टाकः-[A]टाकी ।

(1508) " **लुथि हिंसासंक्लेश[न]योः** "

(I-भ्वादिः-45. सक. सेट्. पर.)

लुन्थकः-न्थिका, लुन्थकः-न्थिका, लुलुन्थिषकः-षिका, लोलुन्थकः-न्थिका ; लुन्थिता-त्री, लुन्थयिता-त्री, लुलुन्थिषिता-त्री, लोलुन्थिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुन्थति**वत् (220) बोध्यानि ।

(1509) " **लु[ञ्च]न्च अपनयने** "

(I-भ्वादिः-187. सक. सेट्. पर.) [अ]

---

1. तच्छीलादिषु कर्तृषु 'जल्पभिक्षकुट्टलुण्ठ[ट]—' (3-2-155) इति षाकन्प्रत्यये रूपमेवम् । षित्वात् स्त्रियां ङीषि **लुण्ठाकी** इति रूपम् ।

A. 'त्रिभुवनतमो**लुण्टाकी**नामहो मिहिरत्विषा......... ।' अनर्घराघवे 2-77.

[अ] "**केचिदमुमुदितं** पठन्ति, तदनार्षम् ; राजदन्तादिषु (2-2-31) '**मृष्टलुञ्चितम्**' इति पाठात्" इति **मा. धा. वृत्तिः** । अयं भावः—उदित्त्वेन क्त्वायामिड्विकल्पनात् 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधः स्यात् इति !



लुञ्चकः-ञ्चिका, लुञ्चकः-ञ्चिका, लुलुञ्चिषकः-षिका, लोलुचकः-चिका ; लुञ्चिता-त्री, लुञ्चयिता-त्री, लुलुञ्चिषिता-त्री, लोलुचिता-त्री ; [A]लुञ्चन्-न्ती, लुञ्चयन्-न्ती, लुलुञ्चिषन्-न्ती ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक-**कुञ्चति**वत् (222) ज्ञेयानि । लुञ्चितम्, [1]लुञ्चित्वा-लुचित्वा, इमानि रूपाण्यधिकानीति विशेषः । क्विपि-लुक्-लुञ्चौ-लुञ्चः ; ण्यन्तात् तु लुन्-लुञ्चौ-लुञ्चः; इति विशेषः ।

(1510) " **लुप विमोहने** "

(IV-दिवादिः-1237. सक. सेट्. पर.)

लोपकः-पिका, लोपकः-पिका, लुलुपिषकः-लुलोपिषकः-षिका, लोलुपकः-पिका; लुपिता-त्री, लोपयिता-त्री, लुलुपिषिता-लुलोपिषिता-त्री, लोलुपिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि दैवादिक**कुप्यति**वत् (224) ज्ञेयानि ।

(1511) " **लुप्लृ छेदने** "

(VI-तुदादिः-1431. सक. अनि. उभ.) **मुचादिः** ।

लोपकः-पिका, लोपकः-पिका, लुलुप्सकः-प्सिका, लोलुपकः-पिका ; लोप्ता-प्त्री, लोपयिता-त्री, लुलुप्सिता-त्री, लोलुपिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि तौदादिक**मुञ्चति**वत् (1275) ज्ञेयानि । शतरि-[2]लुम्पन्-न्ती, यङन्तात् शानचि-लोलुप्यमानः,[3] णिनिप्रत्यये [B]भयलोपी इति च अस्य धातोः विशेषः ।

---

1. क्त्वायाम् 'वञ्चिलुञ्च्यृतश्च' (1-2-24) इति कित्त्वविकल्पनात् पक्षे नलोपे च रूपद्वयम् इति ज्ञेयम् ।

2. '**तुदादिभ्यः** शः' (3-1-77) इति विकरणप्रत्यये शे 'शे **मुचादीनाम्**' (7-1-59) इति नुमि च **लुम्पन्** इति रूपम् । एवं शानजन्तेऽपि प्रक्रिया ज्ञेया ।

3. '**लुपसदचर—**' (3-1-24) इति भावगर्हायां यङि रूपमेवम् । भावगर्हा धात्वर्थगर्हा । न तु क्रियासमभिहारे यङ् इति ज्ञेयम् ।

A. 'चुकोच यत्लोरकुञ्चिताङ्गमुन्मुदः क्रौञ्चोऽपि **लुञ्चन्** हृदि सम्यगार्ततताम् ॥' धा. का. 1-25.

B. '........ गोपानां **भयलोपि**वाग्भिरबलाविघ्नानुलेपं वहन् ।' धा. का. 2-85.

(1512) " **लुबि अर्दने** " (I-भ्वादि:-427. सक. सेट्. पर.)

'लुम्बयेत् तुम्बयेदर्दे **शपि लुम्बति** तुम्बति ॥' (श्लो. 139) इति **देवः** ।
**क्षीरतरङ्गिण्या**मयं धातुः न दृश्यते ।

लुम्बकः-म्बिका, लुम्बकः-लुम्बिका, लुलुम्बिषकः-षिका, लोलुम्बकः-म्बिका ;
लुम्बिता-त्री, लुम्बयिता-त्री, लुलुम्बिषिता-त्री, लोलुम्बिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुण्ठति**वत् (209) ऊह्यानि । कर्मणि क्तप्रत्यये [A]परिलुम्बितः इति ।

(1513) " **लुबि अदर्शने** " (X-चुरादि:-1657. अक. सेट्. उभ.)

'**लुम्बयेद्** तुम्बयेदर्दे शपि लुम्बति तुम्बति ॥' (श्लो. 139) इति **देवः** ।
**क्षीरतरङ्गिण्यां** '—अर्दने' इत्युक्तम् । **देवमैत्रेयौ** 'अर्दने' इत्येव पठतः । चुरादिपाठादेव इदित्करणात् लुम्बयति-लुम्बति इति सिद्धेः **अर्दने**ऽर्थे भ्वादौ पाठोऽस्य व्यर्थः स्यात् । इह [चुरादौ] **अदर्शने**ऽर्थे तु अर्थभेदात् सोऽपि [भ्वादौ पाठः] सार्थकः स्यात् । अत एव '**अदर्शने**' इत्येव समञ्जसमिति भाति ।

लुम्बकः-म्बिका, लुलुम्बयिषकः-षिका, लुम्बकः-म्बिका, लुलुम्बिषकः-षिका,
लोलुम्बकः-म्बिका ;
लुम्बयिता-त्री, लुलुम्बयिषिता-त्री, लुम्बिता-त्री, लुलुम्बिषिता-त्री, लोलुम्बिता-त्री ;
इत्यादीनि रूपाणि भाषार्थकचौरादिक**कुंशयति**वत् (232) ऊह्यानि । कर्मणि क्तप्रत्यये [B]लुम्बितम्-तः इति ।

(1514) " **लुभ गार्ध्ये** " (IV-दिवादि:-1238. सक. सेट्. पर.)

'भूवादेरन्तःकृतत्वात् **लोभते** इति भवति इति **आत्रेयः**' इति **मा. धा. वृत्ति**रिहानुसन्धेया । '**गार्ध्यम्**=आकाङ्क्षा' इति च तत्र **वृत्तिः** ।
'**गार्ध्ये लुभ्यति** मोहार्थे तुदादेर्लुभतीति **शे** ।' (श्लो. 141) इति **देवः** ।

---

A. '......... दिक्कुम्बितेऽर्के **परिलुम्बिताम्बुजे** ॥' धा. का. 1-55.

B. 'किं कुम्ब्यते सदसि **लुम्बित**वैभवोऽहम्.........।' धा. का. 3-29.



लोभकः-भिका, लोभकः-भिका, [1]लुलुभिषकः-लुलोभिषकः-षिका,
लोलुभकः-भिका ;
[2]लोभिता-लोब्धा-ब्धी, लोभयिता-त्री, लुलुभिषिता-लुलोभिषिता-त्री, लोलुभिता-त्री ;
लुभ्यन्-न्ती, लोभयन्-न्ती, लुलुभिषन्-लुलोभिषन्-न्ती ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**कुप्यति**वत् (224) ज्ञेयानि । निष्ठायाम्-[3]लुब्धम्-लुब्धः-लुब्धवान् ; क्त्वायां-[4]लुभित्वा-लोभित्वा-लुब्ध्वा, इति च अस्य धातोः विशेषः ।

(1515) " **लुभ विमोहने** " (VI-तुदादि:-1305. सक. सेट्. पर.)

'**विमोहनम्**=व्याकुलीकरणम्' इति **क्षीरस्वामी** ।
'गार्ध्ये लुभ्यति **मोहार्थे तुदादेर्लुभतीति शे** ।' (श्लो. 141) इति **देवः** ।
लोभकः-भिका, लोभकः-भिका, लुलुभिषकः-लुलोभिषकः-षिका, लोलुभकः-भिका;
लोभिता-त्री, लोब्धा-ब्धी; लोभयिता-त्री, लुलुभिषिता-लुलोभिषिता-त्री,
लोलुभिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि दैवादिक**कुप्यति**वत् (224) ऊह्यानि । निष्ठायाम्-[A]विलुभितः [[5]विलुभिताः केशाः], शतरि-लुभन्, क्त्वायां [B]लुभित्वा-लोभित्वा, इमानि रूपाणि अस्य धातोः विशेषः ।[C] लोभनीयम् ।

---

1. 'रलो व्युपधात्—' (1-2-26) इति सेटः क्त्वासनोः कित्त्वविकल्पः । तेन सन्नन्ते सर्वत्र क्त्वाप्रत्ययेऽपि रूपद्वयं बोध्यम् ।
2. तृचि 'तीषसह**लुभ**—' (7-2-48) इति तादेरार्धधातुकस्य इड्विकल्पनात् रूपद्वयमिति ज्ञेयम् ।
3. 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधः । तेन एकमेव रूपम् ।
4. क्त्वायाम् 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः । 'तीषसह**लुभ**–' (7-2-48) इत्यादिना इड्विकल्पः । तेन रूपत्रयमिति ज्ञेयम् ।
5. '**लुभो** विमोहने' (7-2-54) इति निष्ठायामिडागमो भवति । **विलुभिताः**=केशाः । **विलुभितः**=सीमन्तः । अन्यत्र **लुब्धो** वृषलः, शीतेन पीडित इत्यर्थः ।

A. 'दधत् **विलुभितं** वातैः केसरं वह्निपिङ्गलम् ॥' भ. का. 9-40.

B. '**लुभो** विमोहने' त्विट् स्यात् वा कित्त्वं रल इत्यपि ।
**लोभित्वा** वा **लुभित्वा** वा केशान्नृत्यति (?) बालिका ॥' इति **प्र. सर्वस्वम्** ।

C. 'दिव्याप्रिनीलोचन**लोभनीयाः** मृजान्वयाः स्नेहमिव स्रवन्तीः ।'
भ. का. 2-13.

(1516) " **लूञ् छेदने** " (IX-क्र्यादिः-1483. सक. सेट्. उभ.)

**प्वादिः, ल्वादिश्च ।**

लावकः-विका, लावकः-विका, लुलूषकः-षिका, लोलूयकः-यिका ;
लविता-त्री, लावयिता-त्री, लुलूषिता-त्री, लोलूयिता-त्री ;
लुनन्-ती, लावयन्-न्ती, लुलूषन्-न्ती ; —
लविष्यन्-न्ती-ती, लावयिष्यन्-न्ती-ती, लुलूषिष्यन्-न्ती-ती ; —
लुनानः, लावयमानः, लुलूषमाणः, लोलूयमानः ;
लविष्यमाणः, लावयिष्यमाणः, लुलूषिष्यमाणः, लोलूयिष्यमाणः ;
कंसलूः-ल्वौ-ल्वः ; — — —

[A]विपक्षलावः,[1] [2]सकृल्लूः, [3]लुलुवुषः पश्य, लुलविवान्, [4]शत्रुलावो व्रजति, [B]लोलूया[5], [6]लवकः,[C] [7]लूत्वा, [8]लूनः, [9]लूनिः, [10]अभिलावः,[D] [11]खड्गलावं

1. ' कर्मण्यण् ' (3-2-1) इत्यण्प्रत्ययः ।
2. ' क्विप् च ' (3-2-76) इति सोपपदात् कर्तरि क्विप् ।
3. कर्तरि क्वसुप्रत्ययः । **काशिकायां** (6-4-22) प्रत्युदाहृतत्वात् भाषायामपि धातोरस्मात् क्वसुरिति ज्ञेयम् । अत्र ' न शसदद–' (6-4-126) इत्यादिना एत्वाभ्यासलोपौ न ।
4. क्रियार्थक्रियायामुपपदे ' अण् कर्मणि च ' (3-3-12) इति भविष्यत्यर्थेऽण्प्रत्ययः ।
5. यङन्तात् ' अ प्रत्ययात् ' (3-3-102) इत्यकारप्रत्ययः । स्त्रियां टाप् भवति ।
6. ' प्रुसृल्वः समभिहारे वुन् ' (3-1-149) इति कर्तरि वुन्प्रत्ययः । समभिहारो नाम (लक्षणया) साधुकारित्वम् ; अतश्च यः सकृदपि सुष्ठु करोति स उच्यते **लवक** इति ।
7. ' श्र्युकः किति ' (7-2-11) इतीण्निषेधः । एवमेव क्तक्तिन्प्रभृतिष्वपि इण्निषेधो बोध्यः ।
8. ' **ल्वादिभ्यः** ' (8-2-44) इति निष्ठातकारस्य नकारः ।
9. ' ॠल्वादिभ्यः क्तिन् निष्ठावद् वक्तव्यः ' (वा. 3-3-108) इति तकारस्य नकारः ।
10. ' निरभ्योः पूल्वोः ' (3-3-28) इति अभिपूर्वकात् भावे घञ् । अप्प्रत्ययापवादः ।
11. ' हिंसार्थानां च समानकर्मकाणाम् ' (3-4-48) इति तृतीयान्त उपपदे णमुल् ।

A. ' **विपक्षलावस्य** निजस्य शत्रोः अह्नाय भूत्वा **लवको** बहूनि ।' वा. वि. 2-39.
B. ' तस्याः सासद्यमानाया **लोलूयावान्** रघूत्तमः ।' भ. का. 4-31.
C. ' **लवकौ** शत्रुशक्तीनामृष्यमूकमगच्छताम् ॥' भ. का. 6-86.
D. ' **वनाभिलावान्** कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥' भ. का. 3-77.



(रिपुं मारयति) खड्गेन लावं वा, [1]लवित्रम्[A] [2]लवः, [3]लवणः,[B] लिलावयिषुः, लिलावयिषा, [4]लवाणकम्, [5]लुवा, [6]लोम, [7]लोत्रम्, इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक**पुनाति**वत् (1035) ज्ञेयानि ।

(1517) " **लूष भूषायाम्** " (I-भ्वादिः-677. सक. सेट्. पर.)

अयं धातुः **सि. कौमुद्यां** स्वतन्त्रेण पठितः । **मा. धा. वृत्तौ** ' मूष स्तेये ' इत्यत्र ' लूष—' इति **सुधाकर** इत्युक्तम् । **क्षीरतरङ्गिण्यां** तु ' **लूषोऽपीति दुर्गः** ' इति दृश्यते ।

लूषकः-षिका, लूषकः-षिका, लुलूषिषकः-षिका, लोलूषकः-षिका ;
लूषिता-त्री, लूषयिता-त्री, लुलूषिषिता-त्री, लोलूषिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**चूषति**वत् (552) बोध्यानि । [8]लूषा ।

(1518) " **लूष हिंसायाम्** " (X-चुरादिः-1610. सक. सेट्. उभ.)

लूषकः-षिका, लुलूषयिषकः-षिका ; लूषयिता-त्री, लुलूषयिषिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि, एवंरीत्या चौरादिक**कूटयति**वत् (240) ऊह्यानि ।
णिनिप्रत्यये विमतलूषी[C] इति ।

1. ' अर्तिलूधू—' (3-2-184) इति करणे इत्रप्रत्ययः । **केचित्तु लुवित्र**मिति रूपमाहुः । तन्मते गुणाभावश्चिन्त्यः । **कल्पसूत्र**प्रयोगास्तु छान्दसत्वेन साधवः ।
2. ' ॠदोरप् ' (3-3-57) इति अप्प्रत्ययः । घञोऽपवादः ।
3. नन्द्यादित्वात् शुद्धादपि धातोः कर्तरि ल्युप्रत्यये, तत्रैव (3-1-134) गणे पाठात् णत्वमिति ज्ञेयम् । **लवणः**—एतन्नामकोऽसुरः । **लवणम्** इति तु अविवक्षित-प्रकृतिप्रत्ययार्थः शब्दः रसविशेषे रूढो लुडन्तः ।
4. ' आणको लूधू—' (द. उ. 3-27) इति आणकप्रत्ययः । **लवाणकम्**=दात्रम् ।
5. औणादिके (द. उ. 6-51) कनिन्प्रत्यये रूपमेवम् ।
6. औणादिके (द. उ. 6-79) मनिन्प्रत्यये लकारस्य रत्वं विकल्पेन निपात्यते ; **लो(रो)म**=केशाः ।
   ' रुहे रुचेश्च रौतेश्च रुदिरुध्यो रुषेरपि ।
   षण्णामेव च धातूनां **रोम**शब्दं निपातयेत् ॥'
   इति (क्वाचित्कः) **श्वेतवनवासि**ग्रन्थः ।
7. औणादिके [द. उ. 8-90] त्रप्रत्यये रूपमेवम् ; छन्दसि विषये । लुनाति लूयते वा **लोत्रम्**=शरीरम् ।
8. ' गुरोश्च हलः ' (3-3-103) इत्यकारप्रत्यये रूपमेवम् ।

A. ' वयं शत्रु**लवित्रे**षोर्दूता रामस्य भूपतेः ॥' भ. का. 7-87.
B. ' दुर्जयो **लवणः** शूली विशूलः प्रार्थ्यतामिति ॥' रघुवंशे 15-5.
C. ' संपालयेद् **विमतलू**ष्यपशुल्बभूमा.................. ॥' धा. का. 3-22.

(1519) " लेपृ गतौ " (I-भ्वादिः-373. सक. सेट्. आत्म.)

" **मैत्रेयस्तु** ' लेपृ सेवने, प्लेवृ गतौ ' इत्याह " इति **मा. धा. वृत्तौ** उक्तम् ।

लेपकः-पिका, लेपकः-पिका, लिलेपिषकः-षिका, लेलेपकः-पिका ;

लेपिता-त्री, लेपयिता-त्री, लिलेपिषिता-त्री, लेलेपिता-त्री ;

इत्यादीनि रूपाणि सर्वाणि विशेषरूपाणि विना भौवादिक**केपति**वत् (261) उह्यानि । अस्य धातोः आत्मनेपदित्वात् शानचि लेपमानः इति ।

(1520) " **लोकृ दर्शने** " (I-भ्वादिः-76. सक. सेट्. आत्म.)

'**दर्शने लोकते लोके**र्भाषार्थे णौ तु लोकयेत् ॥' (श्लो. 40) इति **देवः** ।

लोककः-किका, लोककः-किका, लुलोकिषकः-षिका, लोलोककः-किका ;

लोकिता-त्री, लोकयिता-त्री, लुलोकिषिता-त्री, लोलोकिता-त्री ;

लोकन्-न्ती, लोकयन्-न्ती, लुलोकिषन्-न्ती ; —

लोकिष्यन्-न्ती-ती, लोकयिष्यन्-न्ती-ती, लुलोकिषिष्यन्-न्ती-ती ; —

लोकमानः, लोकयमानः, लुलोकिषमाणः, लोलोक्यमानः ;

लोकिष्यमाणः, लोकयिष्यमाणः, लुलोकिषिष्यमाणः, लोलोकिष्यमाणः ;

लोक्-लोग्-लोकौ-लोकः ; — — —

लोकितम्-तः, लोकितः, लुलोकिषितः, लोलोकितः-तवान् ;

लोकः, आलोकः, अवलोकः, [1]उलूकः, लोकनः, विलोकः, प्रलोकी, भयलोकी, लोकः, लुलोकिषुः, लोलुकः ;

लोकितव्यम्, लोकयितव्यम्, लुलोकिषितव्यम्, लोलोकितव्यम् ;

लोकनीयम्, लोकनीयम्, लुलोकिषणीयम्, लोलोकनीयम् ;

लोक्यम्, लोक्यम्, लुलोकिष्यम्, लोलोक्यम् ;

ईषल्लोकः-दुर्लोकः-सुलोकः ; — — —

लोक्यमानः, लोक्यमानः, लुलोकिष्यमाणः, लोलोक्यमानः ;

लोकः, लोकः, लुलोकिषः, लोलोकः ;

---

1. 'उलति नेत्राभ्यां दहति उलूकः । ऊर्ध्वालोकनादिति **निरुक्तम्** ' इति **अमरटीकायां क्षीरस्वामिना** उक्तम् । **द. उ. वृत्तौ** तु (3-46) 'उत्क्रम्य दृष्टिविषयमालोकयतीति **उलूकः** कौशिकः ' इत्येवं दृश्यते । अत्रा**होज्ज्वलदत्तः**— ' **सर्वस्वे तु** ऊर्ध्वौ कर्णावस्येति पृषोदरादित्वात् **उलूक** इत्यपि साधितम् ' इति ।



लोकितुम्, लोकयितुम्, लुलोकिषितुम्, लोलोकितुम् ;

लोका, लोकना, लुलोकिषा, लोलोका ;

लोकनम्, आलोकनम्-[A]अवलोकनम्, लोकनम्, लुलोकिषणम्, लोलोकनम् ;

लोकित्वा, लोकयित्वा, लुलोकिषित्वा, लोलोकित्वा ;

[B]आलोक्य, आलोक्य, आलुलोकिष्य, आलोलोक्य ;

लोकम् २, लोकित्वा २, } लोकम् २, लोकयित्वा २, } लुलोकिषम् २, लुलोकिषित्वा २, } लोलोकम् २ ; लोलोकित्वा २. }

(1521) " **लोकृ भाषार्थः** "

(X-चुरादिः-1777. अक. सेट्. उभ.) **आस्वदीयः** ।

' दर्शने लोकते लोके**र्भाषार्थे णौ तु लोकयेत्** ॥' (श्लो. 40) इति **देवः** ।

'**—भाषार्थः** ' इति **क्षीरस्वामी** ।

**आस्वदीय**त्वात् णिज्विकल्पः । शुद्ध-ण्यन्त-सन्नन्त-यङन्तरूपाणि सर्वाणि पूर्वोक्तभौवादिक**लोकति**वत् (1520) उह्यानि ।

लोककः-किका, लुलोकयिषकः-षिका ; लोकयिता-त्री, लुलोकयिषिता-त्री; [1]लोकन्-न्ती, लुलोकयिषन्-न्ती ; लोकयिष्यन्-न्ती-ती, लुलोकयिषिष्यन्-न्ती-ती; लोकयमानः, लुलोकयिषमाणः, लोकयिष्यमाणः, लुलोकयिषिष्यमाणः ; लोक्-लोकौ-लोकः ; लोकितः, लुलोकयिषितः-तम्-तवान् ;

लोकः, लुलोकयिषुः ; लोकयितव्यम्, लुलोकयिषितव्यम् ; लोकनीयम्, लुलोकयिषणीयम् ; लोक्यम्, लुलोकयिष्यम् ; लोक्यमानः, लुलोकयिष्यमाणः ;

ईषल्लुलोकयिषः-दुर्लुलोकयिषः-सुलुलोकयिषः ; — —

लोकः, लुलोकयिषः ; लोकितुम्, लुलोकयिषितुम् ; लोकना, लुलोकयिषा ; लोकनम्, लुलोकयिषणम् ; लोकयित्वा, लुलोकयिषित्वा ; विलोक्य, विलुलोकयिष्य ;

लोकम् २-लोकयित्वा २ ; लुलोकयिषम् २-लुलोकयिषित्वा २ ; } इति ण्यन्ते तत्प्रकृतिकसन्नन्ते च रूपाणीति विशेषः ।

---

1. **आस्वदीयत्वात्** णिजभावपक्षे शतरि परस्मैपदमेव ।

A. ' अक्लिन्दनीयान् क्षुधितात्मनो जनान् प्रशीकते यः करुणा**वलोकनैः** ।' धा.का. 1-11.

B. ' **आलोक्य** प्रियतममंशुके विनीवौ यत्तस्थे नमितमुखेन्दु मानवत्या । ' शि. व. 9-84.

(1522) "**लोचृ दर्शने**" (I-भ्वादिः-164. सक. सेट्. आत्म.)

'णौ लोचयति भाषार्थे **दर्शने शपि लोचते** ॥' (श्लो. 46) इति **देवः** ।

लोचकः-चिका, लोचकः-चिका, लुलोचिषकः-षिका, लोलोचकः-चिका ;
लोचिता-त्री, लोचयिता-त्री, लुलोचिषिता-त्री, लोलोचिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**लोकति**वत् (1520) बोध्यानि । 'लोचकः—स्त्रीशिरोवस्त्रम् शिरस्त्रञ्च' इति **क्षीरतरङ्गिण्याम्** । आलोचितः, लोचनम्, आलोचनम्; ल्युटि-[A]लोचनम् ।

(1523) "**लोचृ भाषार्थः**" (X-चुरादिः-1778. सक. सेट्. उभ.)

**आस्वदीयः** । तेन णिज्विकल्पः ।

'**णौ लोचयति भाषार्थे** दर्शने शपि लोचते ॥' (श्लो. 46) इति **देवः** ।
लोचकः-चिका, लुलोचयिषकः-षिकः, लोचकः-चिका, लुलोचिषकः-षिका, लोलोचकः-चिका ; इत्यादीनि रूपाणि सर्वाणि [ण्यन्तप्रकृतिकसन्नन्तं विना] भौवादिकदर्शनार्थक**लोकति**वत् (1520) ऊह्यानि । ण्यन्तप्रकृतिकसन्नन्ते तु भाषार्थक**लोकयति**वत् (1521) ऊह्यानि ।

(1524) "**लोडृ उन्मादे**" (I-भ्वादिः-357. अक. सेट्. पर.)

'**लौडृ**—' इति **क्षीरस्वामी** ।

लोडकः-डिका, लोडकः-डिका, लुलोडिषकः-षिका, लोलोडकः-डिका,
लोडिता-त्री, लोडयिता-त्री, लुलोडिषिता-त्री, लोलोडिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**खोरति**वत् (363) ज्ञेयानि । निष्ठायाम्-[B]आलोडितम्-तः-तवान् इति ।

(1525) "**लोल चलने**" (I-भ्वादिः-....अक. सेट्. पर.)

लोलकः-लिका, लोलकः-लिका, लुलोलिषकः-षिका, लोलोलकः-लिका ;
लोलिता-त्री, लोलयिता-त्री, लुलोलिषिता-त्री, लोलोलिता-त्री ;
लोलन्[C]-न्ती, लोलयन्-न्ती, लुलोलिषन्-न्ती ; —

A. '**सुलोचना** यत्र शचीसमप्रभा............... ॥' धा. का. 1. 24.
B. 'श्यामारुणैर्वारणदानतोयैर**लोडिताः** काञ्चनभूपरागाः ।' शि. व. 3-27.
C. 'आश्लिष्टभूमिं रसितारमुच्चै**र्लोलद्**भुजाकारबृहत्तरङ्गम् ।' शि. व. 3. 72.



लोलिष्यन्-न्ती-ती, लोलयिष्यन्-न्ती-ती, लुलोलिषिष्यन्-न्ती-ती ; —
[1]लोलमानः,[A] लोलयमानः, लुलोलिषमाणः ; —
इत्यादीनि रूपाणि सर्वाणि भौवादिक**खोरति**वत् (363) ज्ञेयानि ।

(1526) "**लोष्ट संघाते**" (I-भ्वादिः-258. सक. सेट्. आत्म.)

लोष्टकः-ष्टिका, लोष्टकः-ष्टिका, लुलोष्टिषकः-षिका, लोलोष्टकः-ष्टिका ;
लोष्टिता-त्री, लोष्टयिता-त्री, लुलोष्टिषिता-त्री, लोलोष्टिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**गोष्टति**वत् (434) ज्ञेयानि । **लोष्टः**= मृत्पिण्डः ।

(1527) "**वकि कौटिल्ये**" (I-भ्वादिः-88. अक. सेट्. आत्म.)

वङ्ककः-ङ्किका, वङ्ककः-ङ्किका, विवङ्किषकः-षिका, वावङ्ककः-ङ्किका ;
वङ्किता-त्री, वङ्कयिता-त्री, विवङ्किषिता-त्री, वावङ्किता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कङ्कति**वत् (140) बोध्यानि । [B]वङ्कितम्-तः, ल्युटि-[2]प्रवङ्कनम् । औणादिके [1-35] क्रिन्प्रत्यये वङ्क्रिः इति रूपम् । वङ्क्रिः-शरीराङ्गम्, शल्यम् च ।

(1528) "**वकि गत्यर्थः**" (I-भ्वादिः-95. सक. सेट्. आत्म.)

**क्षीरस्वामी** असुं धातुं पठति । अर्थभेदः पुनःपाठे प्रयोजनम् इति ज्ञायते ।
वङ्ककः-ङ्किका, वङ्ककः-ङ्किका, विवङ्किषकः-षिका, वावङ्ककः-ङ्किका ;

1. "'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति चानश्प्रत्ययः । न तु शानच्; **लोलतेः** परस्मैपदित्वात् । अत एव '**लोलमानादयश्चानशि**' इति **वामनः**" (5-2-8) इति **माघव्याख्याने** (10-59) उपात्तत्वात्, शतरि प्रयोगे दृष्टत्वाच्च '**लोल**—' इति कश्चन धातुः पूर्वं दृष्ट इति **केचित्** । '**लोलद्**-भुजाकारबृहत्तरङ्गम्' (माघः 3-72) 'श्रीराजीवाक्षवक्षस्स्थलनिलयरमाहस्तवास्तव्य-**लोल**ल्लीलाब्जात् निस्सरन्ती मधुरमधुझरी—'(विश्वगुणादर्शचम्पूः श्लो 1) इत्यादयः प्रयोगाः शत्रन्ता इहानुसन्धेयाः ।
2. अत्र 'कृत्यचः' (8-4-29) इति णत्वम् 'इजादेः सनुमः' (8-4-32) इति नियमान्न भवति ।

A. 'आमृशद्भिरभितो वलिवीची**र्लोलमान**विततागुलिहस्तैः ।' शि. व. 10-59.
B. 'फलाङ्कितान् **वङ्कित**नलिमङ्किनान् वनप्रदेशाननुरुकाककोकिलान् ।' धा. का. 1-13.

वङ्कता-त्री, वङ्कयिता-त्री, विवङ्किषिता-त्री, वावङ्किता-त्री ;
इत्यादीनि रूपाणि सर्वाणि भौवादिकगत्यर्थक**कङ्कति**वत् (140) ऊह्यानि ।

(1529) " **वक्ष रोषे** " (I-भ्वादिः-663. अक. सेट्. पर.)

'**—संघाते**' इति **क्षीरस्वामी** । '**—रोषसंहत्योः**' इति **वोपदेवः** ।
'**—पालने**' इति पठित्वा **वक्षते** इति आत्मनेपदिनः इति **काशकृत्स्नः** ।
इतः पूर्वं भ्वादौ '—रोषे' (परस्मैपदिनः) इति च तत्र पठ्यते ।
वक्षकः-क्षिका, वक्षकः-क्षिका, विवक्षिषकः-षिका, वावक्षकः-क्षिका ;
वक्षिता-त्री, वक्षयिता-त्री, विवक्षिषिता-त्री, वावक्षिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि भौवादिक**तक्षति**वत् (691) बोध्यानि । असुन्-प्रत्यये—वक्षः इति ।

(1530) " **वख गत्यर्थः** " (I-भ्वादिः-130. सक. सेट्. पर.)

वाखकः-खिका, वाखकः-खिका, विवखिषकः-षिका, वावखकः-खिका ;
वखिता-त्री, वखयिता त्री, विवखिषिता-त्री, वावखिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**रखति**वत् (141) ऊह्यानि ।

(1531) " **वखि गत्यर्थः** " (I-भ्वादिः-131. सक. सेट्. पर.)

वङ्खकः-ङ्खिका, वङ्खकः-ङ्खिका, विवङ्खिषकः-षिका, वावङ्खकः-ङ्खिका ;
वङ्खिता-त्री, वङ्खयिता-त्री, विवङ्खिषिता-त्री, वावङ्खिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि भौवादिक**रखति**वत् (141) ज्ञेयानि ।
[1]प्रवङ्खनम्-ल्युटि एवं रूपमिति विशेषः ।

(1532) " **वगि गत्यर्थः** " (I-भ्वादिः-147. सक. सेट्. पर.)

" वङ्गिः गतिवैकल्ये रूढः ; वङ्गति, वङ्गः " इति **क्षीरतरङ्गिण्याम्** ।
वङ्गकः-ङ्गिका, वङ्गकः-ङ्गिका, विवङ्गिषकः-षिका, वावङ्गकः-ङ्गिका ;
वङ्गिता-त्री, वङ्गयिता-त्री, विवङ्गिषिता-त्री, वावङ्गिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कङ्कति**वत् (140) ऊह्यानि ।
अस्य धातोः परस्मैपदित्वात् शुद्धे शानच्प्रत्ययो न भवति ।

1. 'इजादेः सनुमः' (8-4-32) इति नियमान्न णत्वम् ।



ण्यन्ते—वङ्गयमानः इति । [1]वङ्गः । वङ्गरिः-भूषणभेदः । वङ्गितः ।

(1533) " **वघि गत्याक्षेपे** " (I-भ्वादिः-110. सक. सेट्. आत्म.)

" **आक्षेपो**-निन्दा, **गतौ** गमनारम्भे चेति **स्वामी** " इति **मा. धा. वृत्तिः** ।
'गत्याक्षेपो वेगगतिः गमनारम्भो वा' इति **क्षीरस्वामी** ।
वङ्घकः-ङ्घिका, वङ्घकः-ङ्घिका, विवङ्घिषकः-षिका, वावङ्घकः-ङ्घिका ;
वङ्घिता-त्री, वङ्घयिता-त्री, विवङ्घिषिता-त्री, वावङ्घिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कङ्कति**वत् (140) बोध्यानि ।
शानचि-[A]वङ्घमानः इति ज्ञेयम् ।

(1534) " **वच परिभाषणे** " (II-अदादिः-1063. सक. अनिट्. पर.)

'**वक्तीति भाषणे** वा णौ वाचयेत् वचतीति वा ।' (श्लो. 51) इति **देवः** ।
'**—भाषणे**' इति **क्षीरस्वामि-मैत्रेय-चन्द्र-शाकटायन-हेमचन्द्रादयः** ।
'**पारायणिकै**र्नाधीतोऽयम्' इति **तरङ्गिण्या**मुक्तम् ।
वाचकः-चिका, वाचकः-चिका, विवक्षकः-क्षिका, वावचकः-चिका ;
वक्ता-वक्त्री, वाचयिता-त्री, विवक्षिता-त्री, वावचिता-त्री ;
वचन्-ती, वाचयन्-न्ती, विवक्षन्-न्ती ; —
वक्ष्यन्-न्ती-ती, वाचयिष्यन्-न्ती-ती, विवक्षिष्यन्-न्ती-ती ; —
— वाचयमानः, वाचयिष्यमाणः, विवक्षमाणः, विवक्षिष्यमाणः ; —
इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**ब्रूञ्**धातुवत् (1132) ज्ञेयानि ।

(1535) " **वच परिभाषणे** "

(X-चुरादिः-1843. सक. सेट्. उभ.) [अ]

'**—सन्देशने च**' इति **कातन्त्र-हेरम्बादयः** । [आधृषीयः ।

1. वञ्चतीति **वङ्गः**=जनपदः । 'हलश्च' (3-3-121) इति संज्ञायामधिकरणे घञ्प्रत्यये रूपमेवम् ।

A. '**प्रवङ्घमान**स्य च तस्य सत्वरं विमङ्घनस्याधिकराधितात्मनः ।' धा. का. 1-16

[अ] णिजभावपक्षे शतरि **वचन्** इत्यस्य प्रयोगो दृश्यते (धा. का. 3-52)।
'**—भाषणे**' इति **क्षीरस्वामिमैत्रेयादयः**। "**पचिं वचिम्**' (7-2-10- व्याघ्रभूतिकारिका) इति पाठादनिट्त्वम् । '**पारायणिकैः** धातुरयं नाधीयते' इति **मा. धा. वृत्तिः** ।

'वक्तीति भाषणे वा णौ वाचयेत् वचतीति वा ।' (श्लो. 51) इति **देवः** ।

वाचकः-चिका, विवाचयिषकः-षिका, वाचकः-चिका, विवक्षकः-क्षिका, वावचकः-चिका ;

वाचयिता-त्री, विवाचयिषिता-त्री, वक्ता-वक्त्री, विवक्षिता-त्री, वावचिता-त्री ;

इत्यादीनि रूपाणि सर्वाणि ण्यन्तप्रकृतिकसन्नन्तं विना पूर्वोक्त**वचति**वत् (1534) ऊह्यानि । आधृषीयत्वाद् णिज्विकल्पः । णिच्पक्षे इमानि रूपाणि —

वाचयन्-न्ती, विवाचयिषन्-न्ती ; वाचयिष्यन्-न्ती-ती, विवाचयिषिष्यन्-न्ती-ती ;

वाचयमानः, विवाचयिषमाणः ; वाचयिष्यमाणः ; विवाचयिषिष्यमाणः ;

विवाचयिट्-ड्-यिषौ-यिषः ; वाचितम्-तः, विवाचयिषितम्-तः-तवान् ; वाचः, विवाचयिषुः ; वाचयितव्यम् ; विवाचयिषितव्यम् ; वाचनीयम् , विवाचयिषणीयम् ;

वाच्यम् , विवाचयिष्यम् , ईषद्विवाचयिषः - दुर्विवाचयिषः - सुविवाचयिषः ;

वाच्यमानः, विवाचयिष्यमाणः ; वाचः, विवाचयिषः ; वाचयितुम्, विवाचयिषितुम् ; वाचना, विवाचयिषा ; वाचनम्, विवाचयिषणम् ; वाचयित्वा, विवाचयिषित्वा ; प्रवाच्य, प्रविवाचयिष्य, वाचम् २, वाचयित्वा २ ; विवाचयिषम् २, विवाचयिषित्वा २. इति विशेषः ।

(1536) " **वज गतौ** " (I-भ्वादिः-252. सक. सेट्. पर.)

'—गतौ **वजति** वाजयेत् ।' (श्लो. 58) इति **देवः** ।

वाजकः-जिका, वाजकः-जिका, विवजिषकः-षिका, वावजकः-जिका ;

वजिता-त्री, वाजयिता-त्री, विवजिषिता-त्री, वावजिता-त्री ;

इत्यादीनि रूपाणि सर्वाण्यपि भौवादिकबन्धनार्थक**कचति**वत् (144) बोध्यानि । [1]वाज्यम् , शतरि-वजन् इति च विशेषः ।

(1537) " **वज मार्गसंस्कारगत्योः** "

(X-चुरादिः-1617. सक. सेट्. उभ.)

'........गतौ वजति **वाचयेत्** ।' (श्लो. 58) इति **देवः** ।

1. ण्यति प्रत्यये 'अजिव्रज्योश्च' (7-3-60) इत्यत्र चकारात् अत्रापि कुत्वं नेति **माधवः** । वस्तुतस्तु 'चजोः—' (7-3-52) इत्यत्र 'निष्ठायामनिट इति वक्तव्यम्' (वा. 7-3-52) इति वार्तिकेन विषयविभागस्य कृतत्वेन यथोत्तरं मुनीनां प्रामाण्यात् अत्र प्रकृतस्थले कुत्वप्रसक्तिरेव नेति **भाष्यादिसम्मतः** पन्थाः ।



'व्रज—' इति **मा. धा. वृत्तिः**, **चन्द्रो**ऽपि । **क्षीरस्वामी** तु **वजि** पठित्वा **मार्ग**ेति द्वितीयं धातुमाह । 'मार्गगतौ संस्कारगतौ **च**' **इत्येके** । 'वज' '**मार्ग**' द्वौ धातू इति **सि. कौमुद्याम्** । एवमेव **पुरुषकारे**ऽपि (**देव**श्लोके 58) । '**वज** मार्गणसंस्कारे' इति **दुर्गः** । '—गतौ संस्कृतौ **च**' इति **वोपदेवः** ।

वाजकः-जिका, विवाजयिषकः-षिका ; वाजयिता-त्री, विवाजयिषिता-त्री ;

इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**काणयति**वत् (159) ऊह्यानि । ण्यति-[A]अवाज्यम् इति ।

(1538) " **वट वेष्टने** " (I-भ्वादिः-300. सक. सेट्. पर.)

" णावदन्ताद्वटेर्ग्रन्थे वटयेद् **वेष्टने वटेत्** ॥' (श्लो. 77) इति **देवः** ।

'**वटे**त्यपि बहुषु कोशेषु दृश्यते' इति **पुरुषकारः** (श्लो. 77) ।

वाटकः-टिका, वाटकः-टिका, विवटिषकः-षिका, वावटकः-टिका ;

वटिता-त्री, वाटयिता-त्री, विवटिषिता-त्री, वावटिता-त्री ;

इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कटति**वत् (148) ज्ञेयानि ।

वटः, [1]वटिः, वटकः-वटका, वटकिनी, वटिभः, वाटः-वाटी, [2]वटुः, इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1539) " **वट परिभाषणे** " (I-भ्वादिः-779. सक. सेट्. पर.) **घटादिः** ।

'—**अवयवे**' इति **काशकृत्स्नः** ।

वाटकः-टिका, वटकः-टिका, विवटिषकः-षिका, वावटकः-टिका ;

वटिता-त्री, वटयिता-त्री, विवटिषिता-त्री, वावटिता-त्री ;

वटन्-न्ती, वटयन्-न्ती, विवटिषन्-न्ती ; —

इत्यादिकानि रूपाणि ण्यन्तं विना सर्वाण्यपि भौवादिक**खति**वत् (142) ऊह्यानि । अस्य धातोः घटादिपाठात् ण्यन्ते परं '**घटादयो** मितः' (गणसूत्रं भ्वादौ) इति मित्त्वे 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वे वटयन्-वटयिष्यन्-न्ती-ती,

1. औणादिके (द. उ. 1-46) इन्प्रत्यये रूपमेवम् । **वटिः**=तन्तुः ।
2. औणादिके उप्रत्यये रूपमेवम् । **वटुः**=ब्रह्मचारी, समर्थश्च ।

A. 'इत्यादिवादिषु जनेषु विमोटितारिः पापप्रपण्डिपदपांसुरवाज्यधामा ।' धा.का. 3-23.

वटयमानः, वटयिष्यमाणः, इत्यादिकानि ह्रस्वघटितानि रूपाणि भौवादिक-**कखति**वत् (141) बोध्यानि । णमुलि-[1]वटम् २-वाटम् २, वटयित्वा २. इति विशेषः ।

(1540) "**वट ग्रन्थे**" (X-चुरादिः-1858. सक. सेट्. उभ.) **अदन्तः**।

'णावदन्ताद्वटेर्ग्रन्थे **वटयेद्** वेष्टने वटेत् ॥' (श्लो. 77) इति **देवः** ।

'—**वेष्टे भागे च**' इति **वोपदेवः** । '—**वेष्टने इत्येके**' इति **धा. का. व्याख्याने** (3-54) । '—**वेष्टने**' इति **क्षीरस्वामी** इति **मा. धा. वृत्तौ** उक्तम् । **क्षीरतरङ्गिण्यां** तु "वट **ग्रन्थे** । ग्रन्थो=**वेष्टनम्**" इत्येव दृश्यते ।

[2]वटकः-टिका; विवटयिषकः-षिका ; वटयिता-त्री, विवटयिषिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**कलयति**वत् (176) ऊह्यानि । ल्युटि वटनम् ।

(1541) "**वट विभाजने**" (X-चुरादिः-1919. सक. सेट्. उभ.)

**मा. धातुवृत्ति, सि. कौमुद्याद्य**नुसारेण अयं पाठो लिखितः । [**अदन्तः** ।

'णावदन्ताद्वटेर्ग्रन्थे **वटयेद्** वेष्टने वटेत् ॥' (श्लो. 77) इति **देवः** ।

अत्र **क्षीरस्वामिना** '**वटि** विभाजने' इत्येव उक्तम् । किंच तत्र "(भ्वादौ) **नन्दिमते** वण्टति" इति दृश्यते । **मैत्रेयो**ऽपि एवमेव इति **मा. धा. वृत्ति-**दर्शनाज्ज्ञायते । **सि. कौमुद्यां** तु 'वट—' इति पठित्वा **वटि**—' **इत्येके**' इति । वटेः पुनःपाठोऽर्थभेदात् इति ज्ञेयम् । अयं धातुः कथाद्यन्तर्गणः इति **शाकटायन**मतम् ।

वटकः-टिका, विवटयिषकःषिका ; वटयिता-त्री, विवटयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाणि चौरादिक**कलयति**वत् (176) ज्ञेयानि । शतरि—वटयन् । **इदित्पाठ**पक्षे-वण्टकः-ण्टिका, विवण्टयिषकः-षिका ; वण्टयिता-त्री, विवण्टयिषिता-त्री ; इत्यादीनि रूपाणि ऊह्यानि । [3]वण्टापयकः-यिका, इति अस्य धातोः विशेषः । इदित्त्वाण्णिज्विकल्पः इत्यपि ज्ञेयम् ।

---

1. '**च्चिण्णमुलोः**—' (6-4-93) इति णौ परतः विकल्पेन दीर्घः । तेन रूपद्वयम् ।
2. अदन्तपाठसामर्थ्यात् अत्र सर्वत्र अल्लोपस्य स्थानिवत्त्वात् उपधावृद्धिः न भवति ।
3. '**कथादि**पातिस्फायो पुग्लुग्वत्वम्' इति **शाकटायन**सूत्रात् कथादीनां धातूनां णौ परतः पुगागमे, वृद्धौ च एवं रूपम् । इति **माधवः** (चुरादौ लजधातुप्रकरणे) ।



(1542) "**वटि विभाजने**" (X-चुरादिः-1586. सक. सेट्. उभ.)

इदित्त्वात् णिज्विकल्पः । **क्षीरस्वामी** '**वडि**—' इति पठित्वा '**टान्त इत्येके**' इत्युक्तवान् । [1]भ्वादौ 'वटि विभाजने' इत्यत्र 'चुरादौ (10-43) **वण्टयति**' इति **क्षीरस्वामिना** उक्तत्वात् '**वटि**' इति प्रथमान्तमेवेति तस्याभिप्रायो ज्ञायते । 'वडीति **शाकटायनः**' इति. **मा. धा. वृत्तौ** ।

'**वण्टयेद् वण्टती**त्येते णिशपोः स्तां विभाजने ।' (श्लो. 77) इति **देवः** ।

'वण्टापयेत् इति तु **शाकटायनः**' इति **पुरुषकारः** ।

वण्टकः-ण्टिका, विवण्टयिषकः-षिका, वण्टकः-ण्टिका, विवण्टिषकः-षिका, वावण्टकः-ण्टिका; वण्टयिता-त्री, विवण्टयिषिता-त्री, वण्टिता-त्री, विवण्टिषिता-त्री, वावण्टिता-त्री ; वण्टयन्-न्ती, विवण्टयिषन्-न्ती, वण्टन्-न्ती, विवण्टिषन्-न्ती ; इत्यादिकानि रूपाणि सर्वाणि ण्यन्तात् सन्नन्तं विना भौवादिक**कण्ठति**वत् (149) ज्ञेयानि । ण्यन्तात् सनि तु सर्वाणि रूपाणि चौरादिकशोकार्थक**कण्ठयति**वत् (150) बोध्यानि । तृतीयान्तमिति (**वडि**) पक्षे वण्डकः, विवण्डयिषकः ; वण्डयिता-त्री, विवण्डयिषिता-त्री ; इत्येवमूह्यम् ।

(1543) "**वठ स्थौल्ये**" (I-भ्वादिः-331. अक. सेट्. पर.)

'वण्ठते त्वेकचर्यायां **स्थौल्ये शपि वठे**दिति ।' (श्लो. 83) इति **देवः** ।

वाठकः-ठिका, वाठकः-ठिका, विवठिषकः-षिका, वावठकः-ठिका ; वठिता-त्री, वाठयिता-त्री, विवठिषिता-त्री, वावठिता-त्री ; वठन्-न्ती ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कठति**वत् (148) ज्ञेयानि ।

(1544) "**वठि एकचर्यायाम्**" (I-भ्वादिः-262. सक. सेट्. आत्म.)

'**वण्ठते त्वेकचर्यायां** स्थौल्ये शपि वठेदिति ।' (श्लो. 83) इति **देवः** ।

'एकस्य चर्या=**एकचर्या**=सहायत्वेनागमनम्' इति **क्षीरतरङ्गिण्याम्** ।

'—असहायगमनम्' इति **धा. का. व्याख्यायाम्** (1-35) । **बालमनोरमाया**मपि एवमेव ।

---

1. **क्षीरतरङ्गिण्यां** भ्वादौ '**वटि** विभाजने' इति दृश्यते । अन्यत्र कोशेषु भ्वादौ न दृश्यते ।

वण्ठकः-ण्ठिका, वण्ठकः-ण्ठिका, विवण्ठिषकः-षिका, वावण्ठकः-ण्ठिका ;
वण्ठिता-त्री, वण्ठयिता-त्री, विवण्ठिषिता-त्री, वावण्ठिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कण्ठति**वत् (149) ऊह्यानि । घञि वण्ठः=' **वण्ठ**रण्डाकल्पः ' इति **महाभाष्यं** (3-3-20) '—मृतभार्य ' इति **नागोजिभट्टो** व्याचख्यौ । '—दत्तद्रव्यो योद्धा ' इति **क्षीरस्वामी** । क्विपि-प्रवन्-प्रवण्ठौ-प्रवण्ठः इति ।

(1545) " **वडि विभाजने** " (I-भ्वादिः-271. सक. सेट्. आत्म.)

' **विभाजनम्**=भागीकरणम्, चर्माभावश्च । 'चुरादौ [1]वण्डयति' इति **क्षीरस्वामी** । चर्माभावो नाम शिपिविष्टता (छिन्नमता)—**वागीशः** ।
'—**वेष्टने** ' इति **मैत्रेयः** । " **नन्दी तु वटि** विभाजने, वडि वेष्टने इति भङ्ग्या पठति " इति **क्षीरस्वामि**वचनमिहानुसन्धेयम् । " **काशकृत्स्न**-धातुपाठकन्नडटीकायां ' **वडि वेष्टने** ' इति पाठः । वाहीक (पञ्जाब्) देशीय-भाषायां विभाजनार्थिका ' वण्डना ' क्रिया प्रयुज्यते । तेन ' **विभाजने** ' इत्यप्यर्थः प्रामाणिक एव " इति तत्र **टिप्पण्या**मुक्तं **युधिष्ठिरमीमांसकेन** ।
वण्डकः-ण्डिका, वण्डकः-ण्डिका, विवण्डिषकः-षिका, वावण्डकः-ण्डिका ;
वण्डिता-त्री, वण्डयिता-त्री, विवण्डिषिता-त्री, वावण्डिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कम्पति**वत् (166) ज्ञेयानि । **धा. का.** व्याख्यायाम् (1-36) ' **वेष्टनेऽपीत्येके** ' इत्युक्तम् ।

(1546) " **वण शब्दार्थः** " (I-भ्वादिः-446. अक. सेट्. पर.)

' व्रण— ' इति **धा. का. व्याख्यायाम्** (1-58.) ।
वाणकः-णिका, वाणकः-णिका, विवणिषकः-षिका, वंवणकः-णिका ;
वणिता-त्री, वाणयिता-त्री, विवणिषिता-त्री, वंवणिता-त्री ;

---

1. **'वडि विभाजने'** इति (चुरादौ) पठित्वा, 'टान्त इत्येके' इति **क्षीरतरङ्गिण्यां** दृश्यते । **शाकटायनस्तु** [वडि] इत्येवमेव ।



इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**क्रणति**वत् (157) ज्ञेयानि । उद्वणः, उल्बणः, [1]वाणः, [2]बाणः, वाणी[3], [4]वाणिः, अन्तर्वाणिः वाणिनी[5], इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1547) " **वद व्यक्तायां वाचि** " (I-भ्वादिः-1009. सक. सेट्. पर.)

**यजादिः** ।

' **व्यक्तवाचि वदेद्वा** णौ वादयेद् वदते वदेत् । ' (श्लो. 109) इति **देवः** ।
वादकः-दिका, वादकः-परिवादकः-दिका, विवदिषकः-षिका, वावदकः-दिका ;
वदिता-त्री, वादयिता-त्री, विवदिषिता-त्री, वावदिता-त्री ;
वदन्-न्ती,[A] [B]वादयन्-न्ती, विवदिषन्-न्ती ; —
वदिष्यन्-न्ती-ती, वादयिष्यन्-न्ती-ती, विवदिषिष्यन्-न्ती-ती ; —

---

1. ' हलश्च ' (3-3-121) इति संज्ञायां घञ्प्रत्यये रूपमेवम् ।

2. ' बणत्यस्मिन ज्या इति- **बाणः** ' इति **क्षीरतरङ्गिण्या**मुपात्तत्वात् **केचित्** अस्य ' **वण** ' इत्यस्य ' **बण** ' इति अभिप्रयन्ति इति ज्ञायते ।

3. ' इञ् वपादिभ्यः ' (वा. 3-3-108) इति इञन्तात् ' सर्वतोऽक्तिन्नर्थादित्**येके** ' (ग. सू. 4-1-45) इति ङीन् भवति इति **मा. धा. वृत्तिः** । वस्तुतस्तु ' कृदिकारादक्तिनः ' (गणसूत्रम् 4-1-45) इति ङीष्प्रत्ययेऽपि रूपमेवम् । '—गीर्वाक् **वाणी** सरस्वती ' **इत्यमरः** ।

4. ' इण् अजादिभ्यः ' (वा. 3-3-108) इति भावे इण्प्रत्यये **वाणिः** इति । **वाणिः**=वाक् इत्**यमरः** । ' वाणिः स्याद् दूतिभारत्यो**र्वाणिः** मूल्ये बलाहके ' इति **विश्वः** । ' बलीवर्दपङ्क्तिरिव समाधुर्या **वाणी** मनोहरति 'इति **दमयन्ती**-श्लेषाद्दीर्घान्तोऽपि **वाणी**शब्दः ।

5. अवश्यं वणतीति व्युत्पत्त्यां ' आवश्यकाधमर्ण्ययोर्णिनिः ' (3-3-170) इति आवश्यकार्थे णिनिप्रत्यये तदन्तात् ङीपि रूपमेवम् । **वाणिनी**=विदग्धस्त्री ।

A. ' मृषोयं **प्रवदन्तीं** तां सत्यवचो रघूत्तमः ।' भ. का. 5 60.

B. '........शैलस्य दर्दुरपुटानिव **वादयन्तः** ।' शि. व. 5. 9.

शास्त्रे [1]वदमानः,[A] कर्मकरान् उपवदमानः, [2]न्यायम् अपवदमानः, क्षेत्रे विवद-मानः, [3]विप्रवदन्तः-विप्रवदमाना वा मौहूर्तिकाः वैद्याः वा, कुलभार्यामुपवदमानः, [4]अनुवदमानः कठः कालापस्य, [5]सम्प्रवदमानः, गेहे विवदमानः, वादयमानः, [6]अभिवादयमानो गुरुं देवदत्तं देवदत्तेन वा, [7]वादयमानो वीणाम्, विप्रविवदिषमाणः, वावद्यमानः;

शास्त्रे वदिष्यमाणः, वादयिष्यमाणः, विवदिषिष्यमाणः, वावदिष्यमाणः;

[8]उदितम्-[B]तः-तवान्, वादितः, विवदिषितः, वावदितः-तवान्;

मधुरोद्-मधुरोदौ-मधुरोदः; — — —

---

1. अत्र 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु **वदः**' (1-3-47) इति **वदते**स्तङ्। औत्सर्गिकस्य परस्मैपदस्यापवादः। अत्र भासनम्=दीप्तिः। शास्त्रे **वदमानः**, दीप्यमानः सन् पदार्थान् व्यक्तीकरोतीत्यर्थः। उपसम्भाषणम्=उपसान्त्वनम्। कर्मकरान् **उपवदमानः** उपसान्त्वयन् इत्यर्थः। ज्ञानम्=सम्यक् अवबोधः। **वदमान**श्चार्वी लोकायते इत्युदाहरणम्। सम्यग्वक्तुं जानातीत्यर्थः। यत्नः=उत्साहः। क्षेत्रे **वदमानः**। क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः। विमतिः=नानामतिः। गेहे **विवदमानः**। विमतिपतिताः विचित्रं भाषन्ते इत्यर्थः। उपमन्त्रणम्=रहसि उपच्छन्दनम्। कुलभार्या**मुपवदमानः**। उपच्छन्दयतीत्यर्थः।
2. '**अपाद् वदः**' (1-3-73) इति तङ्। न्यायापवादेन धनाद्यार्जनं करोति इत्यर्थः।
3. 'विभाषा विप्रलापे' (1-3-50) इति व्यक्तवाचां समुच्चारणेऽपि **वदते**स्तङ्विकल्पः।
4. 'अनोरकर्मकात्' (1-3-49) इति तङ्। एतदपि व्यक्तवाग्विषयकमेव।
5. 'व्यक्तवाचां समुच्चारणे' (1-3-48) इति तङ्। व्यक्तवाचो मनुष्याः। तेन 'वरतनु **संप्रवदन्ति** कुक्कुटाः' इत्यत्र न तङ्।
6. '**अभिवादि**दृशोः—' (वा. 1-4-53) इति वचनात् आत्मनेपदे प्रयोज्यस्य पाक्षिकं कर्मत्वम्।
7. 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृति**वद**–' (1-3-89) इति परस्मैपदनिषेधः। 'अणावकर्मकात्–' (1-3-88) इत्यस्यापवादोऽयम्।
8. निष्ठायाम्, 'वचिस्वपियजादीनाम्-' (6-1-15) इति सम्प्रसारणम्। तेन पूर्वरूपम्।

A. 'मासे सुतं वैजननेऽथ सूतम् आदाय शौरिः **वदमान**मद्यौत्।' वा. वि. 2-14.

B. 'सकलैः सकलैः परितः करुणै**रुदितैः** रुदितैरिव खं निचितम्॥' भ. का. 10. 4.



वदः,[1] अवादी, [2]वदावदः, [3]वावदूकः, प्रवावदूकः, [4]कद्वदः[A], [5]साधुवादी, [6]परिवादिनी, [7]प्रियंवदः-प्रियंवदा[B], वशंवदः[C], [8]प्रवादी, [9]ब्रह्मवादी, [10]परि-वादकः, वादः, विवदिषुः, वावदः;

वदितव्यम्, वादयितव्यम्, विवदिषितव्यम्, वावदितव्यम्;

वदनीयम्, वादनीयम्, विवदिषणीयम्, वावदनीयम्;

[11]अवद्यम्, [12]ब्रह्मोद्यम्-ब्रह्मवद्यम्, [13]मृषोद्यम्, सत्यवद्यः[D], अनृतोद्यम्,

---

1. 'याचिव्याहृसंव्याहृव्रजवद्वसां प्रतिषिद्धानाम्' (ग. सू. 3-1-134) इति नञि उपपदे ग्रह्यादित्वात् कर्तरि णिनिः।
2. 'चरिचलिपति**वदीनां** द्वित्वम् अचि आक् च अभ्यासस्य' (वा. 6-1-12) इति वचनेन पचाद्यचि द्वित्वम्, अभ्यासस्य आक् च भवतः।
3. 'कुर्वादिभ्यो ण्यः' (4-1-151) इत्यत्र **वावदूक**शब्दपाठात् **वदते**रपि यङन्तात् ऊकप्रत्ययः इति **माधवाचार्याः**। एवं **प्रवावदूकादयो**ऽपि शब्दा बोध्याः।
4. पचाद्यचि 'रथ**वद**योश्च' (6-3-102) इति **वद्**शब्दे परे कोः कत् आदेशः।
5. अताच्छील्येऽपि 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः।
6. 'सुप्यजातौ णिनिः—' (3-2-78) इति णिनिः। तद्धर्मेऽयं प्रत्ययः। 'सप्तभिः **परिवादिनी**' इति वीणाविशेषः।
7. 'प्रियवशे **वदः** खच्' (3-2-38) इति खच्। खित्त्वात् **मुम्**।
8. तच्छीलादिषु कर्तृषु 'प्रे लपसृद्रुमथ**वद**वसः' (3-2-145) इति घिनुण्प्रत्ययः।
9. 'ब्रह्मणि **वदः**' (वा. 3-2-78) इति णिनिप्रत्ययः। अताच्छीलिकोऽयम्।
10. तच्छीलादिषु कर्तृषु 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट**परिवादि**—' (3-2-146) इत्यादिना वुञ्प्रत्ययः।
11. गर्ह्यमित्यर्थे '**अवद्य**पण्यवर्याः—' (3-1-101) इत्यनेन **वदते**र्नञ्युपपदे यत् निपात्यते। अन्यत्र **अनुद्यम्** इत्येव। अत्र नञ्युपपदे **वदतेः** क्यप्। कित्त्वात् सम्प्रसारणम्।
12. '**वदः** सुपि क्यप् च' (3-1-106) इति अनुपसर्गे सुपि उपपदे क्यब्विकल्पः। पक्षे यत्। क्यपि **ब्रह्मोद्यम्**। यति **ब्रह्मवद्यम्**।
13. अत्र 'राजसूयसूर्य**मृषोद्य**—' (3-1-114) इति निपातनात् नित्यं क्यप्।

A. 'येन जातं प्रियापाये **कद्वदं** हंसकोकिलम्।' भ. का. 6-76.

B. 'अनुक्ता प्रार्थयांचक्रे प्रियाकर्तुं **प्रियंवदा**।' भ. का. 4-19.

C. 'सौमित्रे मामुपायंस्थाः कम्रामिच्छु**र्वशंवदाम्**।' भ. का. 4.20.

D. '**अनृतोद्यं** न तत्रास्ति **सत्यवद्यं** ब्रवीम्यहम्।' भ. का. 6-55.

[1]वाद्यम्-प्रवाद्यम्, वाद्यम्, विवदिष्यम्, वावद्यम्;
उद्यमानः, वाद्यमानः, विवदिष्यमाणः, वावद्यमानः;
ईषद्वदः-दुर्वदः-सुवदः; — — —

| | | | |
|---|---|---|---|
| वादः, | वादः, | विवदिषः, | वावदः; |
| वदितुम्, | वादयितुम्, | विवदिषितुम्, | वावदितुम्; |
| [2]उदितिः, उत्तिः, | वादना, | विवदिषा, | वावदा; |
| वदनम्, | वादनम्, | विवदिषणम्, | वावदनम्; |
| [3]उदित्वा[A], | वादयित्वा, | विवदिषित्वा, | वावदित्वा; |
| प्रोद्य, [4]अच्छोद्य, | अनुवाद्य, | प्रविवदिष्य, | प्रवावद्य; |
| वादम् २, उदित्वा २, | वादम् २, वादयित्वा २, | विवदिषम् २, विवदिषित्वा २, | वावदम् २; वावदित्वा २; |

[5]वादिः, [6]वदान्यः,[B] [7]वादित्रम्, [8]वत्सः

---

1. '**वदः** सुपि—' (3-1-106) इत्यत्र 'सुपि' इत्युक्तत्वात् सोपसर्गात्, निरुपसृष्टाच्च ण्यदेव। तेन **वाद्यम्, प्रवाद्यम्** इति सिद्ध्यतः।
2. स्त्रियां क्तिनि 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति वचनादिटि **उदितिः**। **क्षीरस्वामी** तु **उत्तिः** इतीडागमाभावपक्षे मुख्यं रूपं साधयित्वा 'इडपीष्यते **उदितिः**' इत्याह।
3. 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' (1-2-7) इति सेटः क्त्वायाः कित्त्वात् सम्प्रसारणम्।
4. 'अच्छ गत्यर्थ**वदेषु**' (1-4-69) इति अच्छशब्दस्य गतिसंज्ञा। तेन 'कुगतिप्रादयः' (2-2-18) इति समासे ल्यप्। कित्त्वात् प्रसारणम्।
5. 'वसिवपि**वदि**—' [द. उ. 1-53] इतीञ्प्रत्ययः। वदति तस्यामिति **वादिः** वीणा।
6. '**वदे**रान्यः' [द. उ. 8-9] इत्यान्यप्रत्ययः। **वदान्यो** दाता।
7. 'भू**वादि**—' [द. उ. 8-91] इति णिजन्तात् णित्रन्प्रत्ययः। वाद्यते इति **वादित्रम्** मृदङ्गपणवादिकम्।
8. 'वृतृ**वदि**—' [द. उ. 9-21] इति सप्रत्ययः। 'तितुत्रस—' (7-2-9) इतीण्निषेधः। **वत्सः**=कुमारः, गोबालश्च।

A. '**उदित्वा**ऽलं चिरं यत्नात् सैका धात्रा विनिर्मिता॥' भ. का. 7.86.

B. '**वदान्यो** नान्योऽस्ति त्रिजगति समो रुद्रनृपतेः....।' प्रतापरुद्रीयं, ना. प्र. 16 श्लो.



(1548) "**वद सन्देशवचने**" (X-चुरादिः-1842. सक. सेट्. उभ.)।

**आधृषीयः**। तेन णिज्विकल्पः।

'—**भाषणे**' इति **हेमचन्द्र-जैन-कातन्त्रादयः**। '—**वाक्सन्देशयोः**' इति **वोपदेवः**। '—वचने च' इति **द्रुमे** इति **धा. का.** (3-51)।

'व्यक्तवाचि वदेद्वा णौ वादयेद् वदते वदेत्।' (श्लो. 109) इति **देवः**।

अयं धातुः **आत्मनेपदी** इति **शाकटायनः** इति **मा. धा. वृत्तिः**।

वादकः-दिका, विवादयिषकः-षिका; वादकः-दिका, विवदिषकः-षिका, वावदकः-दिका; वादयिता-त्री, विवादयिषिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि ण्यन्तात् सन्नन्तं विना पूर्वलिखितभौवादिक**वदति**वत् (1547) ऊह्यानि।

ण्यन्तात् सन्नन्ते इमानि रूपाणीति ज्ञेयम्—

विवादयिषिता-त्री, विवादयिषन्-न्ती, विवादयिषिष्यन्-न्ती-ती, विवादयिषमाणः, विवादयिषिष्यमाणः, विवादयिट्-यिषौ-यिषः; विवादयिषितम्-तः-तवान्; विवादयिषुः, विवादयिषितव्यम्, विवादयिषणीयम्, विवादयिष्यम्, ईषद्विवादयिषः-दुर्विवादयिषः-सुविवादयिषः; विवादयिष्यमाणः, विवादयिषः, विवादयिषितुम्, विवादयिषा, विवादयिषणम्, विवादयिषित्वा, प्रविवादयिष्य, विवादयिषम् २, विवादयिषित्वा २ इति।

(1549) "**वदि अभिवादनस्तुत्योः**" (I-भ्वादिः 11. सक. सेट्. आत्म.)

'प्रणतिपूर्वमाशिषो वाचनम्=**अभिवादनम्**' इति **मा. धा. वृत्तिः**।

'—**नतिमात्रं** वाऽभिवादनम्' इति **धा. का. व्याख्यायाम्** (1-3)।

'—**नुत्यभिवादयोः**' इति **वोपदेवः**।

वन्दकः-न्दिका, वन्दकः-न्दिका, विवन्दिषकः-षिका, वावन्दकः-न्दिका; वन्दिता-त्री, वन्दयिता-त्री, विवन्दिषिता-त्री, वावन्दिता-त्री;

— वन्दयन्-न्ती, वन्दयिष्यन्-न्ती-ती; —

वन्दमानः, वन्दयमानः, विवन्दिषमाणः, वावन्द्यमानः;

इत्यादिकानि रूपाणि सर्वाण्यपि प्रातिस्विकरूपाणि विना भौवादिक**कन्दति**वत्

(163) ऊह्यानि । [1]वन्दारुः,[A] [2]वन्दी, वन्दनः, [3]वन्दना, [4]वन्दा, [5]वन्दथः, [6]वन्द्रः, [7]वन्दाकः, इमानि रूपाण्यधिकान्यत्रेति विशेषः । सन्नन्तात् उप्रत्यये-विवन्दिषुः[B] इति ।

(1550) " **वन शब्दे** " (I-भ्वादिः-462. अक. सेट्. पर.)

'—संभक्तिशब्दयोः' इति **वोपदेवः** ।

'**याचने वनुते, शब्दे संभक्तौ च वनेदिति** ॥' (श्लो. 124) इति **देवः** ।

वानकः-निका, वानकः-निका, विवनिषकः-षिका, वंवनकः-निका ;
वनिता-त्री, वानयिता-त्री, विवनिषिता-त्री, वंवनिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कणति**वत् (157) ज्ञेयानि ।
अचि-वनम्, वन्या, [8]वनिः-वनी, वन्यम्, ल्यपि-[9]प्रवत्य, [10]वन्तिः,-[11]वतिः,

---

1. तच्छीलादिषु कर्तृषु '**शृवन्द्योरारुः**' (3.2.173) इति आरुप्रत्यये रूपम् ।
2. णिनिप्रत्यये एवं रूपम् । अचि तु वन्दी इति **तरङ्गिण्याम्** । 'वन्यते याच्यते **वन्दी**=हठाहृता स्त्री' इत्य**मरटीकायां क्षीरस्वामी** ।
3. '**घट्टिवन्दिविदिभ्यः** उपसंख्यानम्' (वा.3.3.107) इति स्त्रियां युच्प्रत्यये रूपमेवम् ।
4. बाहुलकात् स्त्रियां संज्ञायामकारप्रत्यये रूपमेवम् । **वन्दा**=वृक्षरुहा ।
5. 'शीङ्शपिरुगमि**वन्दि**—' (द. उ. 6-38). इत्यथप्रत्यये रूपम् । वन्दते वन्द्यते वा **वन्दथः**=स्तोता, स्तुत्यश्च ।
6. औणादिके (द. उ. 8-31) रक्प्रत्यये **वन्द्रः**=हेतुः, कामो वा ।
7. औणादिके (द. उ. 3-31) आकप्रत्यये रूपमेवम् । **वन्दाकः**=कामवृक्षः इति **स्वामी** । '**वन्दाक**श्चीवरभिक्षुः' इति **हेमचन्द्रः** ।
8. 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति स्त्रियां वा ङीष् भवति । तेन रूपद्वयमिति बोध्यम् ।
9. 'वा ल्यपि' (6-4-38) इत्यनेन अनुदात्तोपदेशादीनां विधीयमानोऽनुनासिक-लोपविकल्पः, व्यवस्थितविभाषाविज्ञानात् नान्तेषु नित्यः । तेन **प्रवत्य** इत्येकमेव रूपम्, नित्यत्वात् ।
10. क्तिचि, '**न क्तिचि** दीर्घश्च' (6-4-39) इति दीर्घानुनासिकलोपयोर्निषेधः ।
11. क्तिनि—'तितुत्र—' (7-2-9) इत्यादिना इण्निषेधात् 'अनुदात्तोपदेश-**वनति**—' (6-4-37) इत्यनुनासिकलोपे रूपमेवम् ।

A. '**वन्दारु**बृन्दारकवन्दिबृन्दमन्दारमालामकरन्दबिन्दून् ।' (अनर्घ. 6-83) ।
B. '**औहिष्ट** तान् वीतविरुद्धबुद्धीन् **विवन्दिषून्** दाशरथिः स्ववर्ग्यान् ॥'
भ. का. 3-48,



[1]ब्रह्मवनं त्वा क्षत्रवनिम्, [2]वनिष्ठुः इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1551) " **वन संभक्तौ** " (I-भ्वादिः-463 सक. सेट्. पर.)

'........संभक्तौ च **वनेदिति** ॥' (श्लो. 124) इति **देवः** ।

'—**भक्तौ** । भक्तिः भजनम्' इति **क्षीरस्वामी** ।

'वनेरर्थभेदात् पुनः पाठः' इति **मैत्रेयरक्षितः** ।

वानकः-निका, वानकः-निका, विवनिषकः-षिका, वंवनकः-निका ;
वनिता-त्री, वानयिता-त्री, विवनिषिता-त्री, वंवनिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कणति**वत् (157) बोध्यानि । [3]वानरः ।

(1551-A) " **वन श्रद्धोपहिंसनयोः** " (X-चुरादिः-सक. सेट्. उभ.)

'**चान्द्रपारायणमतेनायं** पाठ इति **क्षीरस्वामी, हेमचन्द्रश्च** इति' **पा. धा. समीक्षायाम्** । 'तनु' इत्यत्र चुरादौ **तरङ्गिण्यामे**तत्पाठो दृश्यते । अस्य धातोः सर्वाण्यपि रूपाणि चौरादिक**काणयति**वत् (159) ऊह्यानि ।

(1552) " **वनु च नोच्यते** " (I-भ्वादिः-803. सक. सेट्. पर.) **घटादिः** ।

'**च**' कारात् हिंसायामपि । 'वनु **स्मरणे**' इति **काशकृत्स्नः** । '—**व्यापृतौ**' इति **वोपदेवः** । अस्यायमर्थः इति विशिष्य नोच्यते ; क्रियासामान्यार्थवाचित्वात् । '**अनेकार्थत्वादित्यन्ये**' इति **सि. कौमुदी** । "यदि तानादिकस्यैवाऽत्रानुवादः स्यात्, तर्हि तनादिगणे 'वनु' इति कृतेन उदित्करणेनैव 'उदितो वा' (7-2-56) इत्याद्युदित्कार्यस्य सिद्धेरिह गणे पुनः

---

1. 'छन्दसि **वन**सनरक्षिमथाम्' (3-2-27) इति कर्मण्युपपदे छन्दसि विषये ब्रह्म वनति, क्षत्रं वनतीत्यर्थविवक्षायाम्, इन्प्रत्यये रूपमेवम् ।
2. 'ऋतन्यञ्जि**वनि**–' (द. उ. 10-12) इत्यादिना इष्ठुच्प्रत्यये रूपमेवम् । '**वनिष्ठुः**=अपानं मांसविशेषश्च' इति **मा. धा. वृत्तिः** । **दशपाद्युणादिवृत्तौ** तु (10-12) 'ऋतन्यञ्जि' इत्यत्र इष्णुच्प्रत्यये **वनिष्णुः इत्युक्तम्** । अपानोपरि-स्थानमित्यर्थः ।
3. **वन**शब्दात् वने भव इत्यर्थे 'तत्र **भवः**' (4-3-53) इति अण्प्रत्यये **वान** इति सिद्धम् । तत औणादिके (द. उ. 10-12) रक्प्रत्यये **वानर** इति रूपम् । वा=किंचित् नरो वा **वानरः** ।

उदित्करणमनर्थकं स्यात् । अतस्तानादिकस्य नात्रानुवादः ; किं तु अपूर्व एवायं **वनु**धातुः " इति **बालमनोरमाया**मुक्तम् । " उदित्करणसामर्थ्यादयमन्यो धातुः, न तानादिकस्यायमनुवादः । क्रियासामान्ये मित्त्वमात्रार्थे ह्यनुवादे तानादिक एवानुवाद्यः, न पुनः शब्दार्थः सम्भक्त्यर्थो वा " इति **मा. धा. वृत्तिः** इहानुसन्धेया । '**धनपाल**स्तु वनोतिमेव प्रस्तुत्याह—" **वनुं घटादिषु** पठन्ति **द्रमिडाः** । तेषां (नित्यं) मित्संज्ञा । वनयति । **आर्या**स्तु विभाषा मित्त्वमिच्छन्ति । तेषां वानयति " इति **पुरुषकारः** (श्लो. 125) ।

' याचने वनुते शब्दे संभक्तौ च वनेदिति ॥ ' (श्लो. 124) इति **देवः** ।

वानकः-निका, वनकः-[1]वानकः-निका, विवनिषकः-षिका, वंवनकः-निका ;
वनिता-त्री, वनयिता-वानयिता-त्री, विवनिषिता-त्री, वंवनिता-त्री ;
निष्ठायाम्-वान्तम् , क्त्वायाम्-वत्वा-[2]वनित्वा ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**चनति**वत् (494) ज्ञेयानि । अनुपसृष्टे वनयन्-वानयन् इति मित्त्वविकल्पेन रूपद्वयं भवति । उपसृष्टे तु प्रवनयन् इत्येव ।

(1553) " **वनु याचने** " (VIII-तनादिः-1470. सक. सेट्. आत्म.)

' **याचने वनुते**, शब्दे संभक्तौ च वनेदिति ॥ ' (श्लो. 124) इति **देवः** ।

**चान्द्रा**स्तु इमं परस्मैपदिनमाहुः । ' उभयपदी ' इति **कातन्त्र-शाकटायन-हेमचन्द्रादयः** ।

वानकः-निका, वानकः-[3][वनकः] निका, विवनिषकः-षिका, वंवनकः-निका ;
वनिता-त्री, वानयिता-त्री, विवनिषिता-त्री, वंवनिता-त्री ;

---

1. ' ग्लास्नावनुवमां च ' (गणसूत्रं भ्वादिः) इत्यनेनानुपसृष्टस्य धातोः मित्त्वं विकल्पेन भवति । मित्त्वपक्षे ' मितां ह्रस्वः ' (6-4-92) इति उपधाह्रस्वः । तेन सर्वत्र णिजन्ते रूपद्वयमिति ज्ञेयम् ।
2. अस्य धातोः उदित्त्वात् ' उदितो वा ' (7-2-56) इति क्त्वायामिड्विकल्पनात् रूपद्वयमिति बोध्यम् । इडभावपक्षे ' अनुदात्तोपदेश**वनति**— ' (6-4-37) इत्यनुनासिकलोपः ।
3. ' ग्लास्नावनुवमां च ' (ग. सू. भ्वादिः) इति अनुपसृष्टानां मित्त्वविकल्पे " ' **वनु** च नोच्यते ' इति घटादिकस्यास्य च ग्रहः-**इत्येके** " इति **मा. धा. वृत्ता**वुक्तत्वात् पक्षे रूपमेवमिति ज्ञेयम् । **अन्ये** ' अनन्तरस्य विधिः— ' (परि-62) इति न्यायेन घटादिकस्यैव इति वदन्ति ।



इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**मन्यति**वत् (1217) ज्ञेयानि ।
[1]वतम्-तः-तवान् , [2]वनीयकः-वनीपकः, [3]वतिः, [4]वन्तिः, [5]प्रवत्य, [6]वनित्वा-वत्वा, [7]वण्डः, [8]वठरः, [9]वनिष्णुः, इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्तीति बोध्यम् ।

(1554) " **वन्चु गत्यर्थः** " (I-भ्वादिः-189. सक. सेट्. पर.)

' **वञ्चतीति गता**वर्थे वञ्चयेत प्रलम्भने ॥ ' (श्लो. 48) इति **देवः** ।

वञ्चकः-ञ्चिका, वञ्चकः-ञ्चिका, विवञ्चिषकः-षिका, [10]वनीवचकः-चिका ;
वञ्चिता-त्री, वञ्चयिता-त्री, विवञ्चिषिता-त्री, वनीवचिता-त्री ;
वञ्चन्-न्ती, वञ्चयन्-न्ती, विवञ्चिषन्-न्ती ; —
वञ्चिष्यन्-न्ती-ती, वञ्चयिष्यन्-न्ती-ती, विवञ्चिषिष्यन्-न्ती-ती ; —
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**ध्वंसति**वत् (942) ऊह्यानि ।

---

1. निष्ठायाम् ' अनुदात्तोपदेश**वनति**तनोत्यादीनाम्— ' (6-4-37) इत्यनुनासिकलोपे रूपमेवम् ।
2. वनी=याच्ञा, तामिच्छतीति क्यजन्तात् ण्वुलि-**वनीयकः** इति रूपम् । ' **वनीयको** याचनको मार्गणो याचकार्थिनौ ' इत्य**मरः** । **वनीयकः**=अर्थिपर्यायः । **अन्ये वनीपकः** इति **पकारान्तं** पठन्ति । तेषां वनीं पातीति **वनीपः**, ततः संज्ञायां कन्प्रत्यये रूपमेवम् ।
3. क्तिनि अनुनासिकलोपे रूपमेवम् ।
4. क्तिचि—' न क्तिचि दीर्घश्च ' (6-4-39) इति दीर्घानुनासिकलोपनिषेधे रूपमेवम् ।
5. ल्यपि ' वा ल्यपि ' (6-4-38) इति अनुदात्तोपदेशादीनां विधीयमानोऽनुनासिकलोपविकल्पो, व्यवस्थितविभाषाश्रयणात् नान्तेषु नित्यः, तेन रूपमेवम् ।
6. ' उदितो वा ' (7-2-56) इति क्त्वायामिड्विकल्पो भवति । इट्पक्षे **वनित्वा**, इडभावपक्षे अनुनासिकलोपे **वत्वा** इति रूपद्वयं बोध्यम् ।
7. औणादिके (द. उ. 5-7) डप्रत्यये **वण्डः** इति रूपम् । अल्पशेष इत्यर्थः ।
8. ' **वनि**मनिभ्यां— ' (द. उ. 8-99) इत्वरप्रत्यये ठकारे चान्तादेशे रूपमेवम् । वनति वनुते वा **वठरः**=बृहद्व्रीही, मूर्खश्च ।
9. ' ऋतन्य्यञ्जिवनु— ' (द. उ. 10-12) इत्यादिना इष्णुच्प्रत्यये रूपमेवम् । **वनिष्णुः**=अपानोपरिस्थानम् इत्यर्थः ।
10. यङन्ते सर्वत्र ' नीग्वञ्चुस्रंसु— ' (7-4-84) इत्यादिना अभ्यासस्य नीगागमे उपधानकारस्य लोपे च रूपमेवम् ।

[माणवकं] [1]वञ्चयमानः, [2]वक्तः-वक्तवान्, [3]वञ्च्यं वञ्चन्ति वणिजः, [4]वचित्वा-[A]वञ्चित्वा-वक्त्वा, [5]वङ्क्रिः, [6]आवक्रम्[B], इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1555) "**वन्चु प्रलम्भने**" (X-चुरादिः-1704. सक. सेट्. आत्म.)

**प्रलम्भनम्**=मिथ्याफलाख्यानम् । **आकुस्मीयः** ।

'............**वञ्चयेत प्रलम्भने** ॥' (श्लो. 48) इति **देवः** ।

**उदित्**करणात् णिज्विकल्पः । '—**वञ्चने**' इति **वोपदेवः** ।

वञ्चकः-ञ्चिका, विवञ्चयिषकः-षिका, वञ्चकः-ञ्चिका, विवञ्चिषकः-षिका, वनीवचकः-चिका ;

वञ्चयिता-त्री, विवञ्चयिषिता-त्री, वञ्चिता-त्री, विवञ्चिषिता-त्री, वनीवचिता-त्री ;

इत्यादीनि रूपाणि सर्वाण्यपि ण्यन्तं तत्प्रकृतिकसन्नन्तं च विना भौवादिक-**ध्वंसति**वत् (942) ऊह्यानि ।

---

1. ण्यन्ते '**गृधिवञ्च्योः** प्रलम्भने' (1-3-69) इति अकर्त्रभिप्रायेऽपि प्रलम्भनार्थे तङेव । **प्रलम्भनम्**=मिथ्याफलाख्यानम् । अन्यत्र उभयमपि भवति ।
2. उदित्त्वेन क्त्वायामिड्विकल्पात् 'यस्य विभाषा' (7-2-15) इति निष्ठाया-मिण्निषेधे, उपधानकारलोपे च रूपमेवम् ।
3. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यति 'चजोः कु घिण्ण्यतोः' (7-3-52) इति इति प्राप्तं कुत्वं '**वञ्चेर्गतौ**' (7-3-63) इति गत्यर्थे निषिध्यते । अत्र गच्छन्ती-त्यर्थः । अन्यत्र **वङ्क्यं** काष्ठम् । अत्र कुत्वं भवति । कुटिलमित्यर्थः ।
4. '**वञ्चि**लुञ्च्यृतश्च' (1-2-24) इति सेटः क्त्वाप्रत्ययस्य कित्त्वविकल्पनात् पक्षे नलोपे **वञ्चित्वा-वचित्वा** इति । उदित्त्वेन 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पात् इडभावपक्षे **वक्त्वा** इति । आहत्य क्त्वाप्रत्यये रूपत्रयं बोध्यम् ।
5. औणादिके (द. उ. 1-35) क्रिन्प्रत्यये, निपातनात् नलोपाभावः कुत्वं च भवतः । तेन रूपमेवम् । **वङ्क्रिः**=शल्यं, शरीराङ्गं च ।
6. 'स्फायितञ्चिवञ्चि—' (द. उ. 8-31) इत्यादिना रक्प्रत्यये रूपम् । **वक्रम्**=कुटिलमित्यर्थः ।

A. '**वञ्चित्वा**ऽप्यम्बरं दूरं स्वस्मिन् तिष्ठन्तमात्मनि ।' भ. का. 7-106.

B. '**आवक्र**चञ्चूपुटतञ्चदारवत्ववञ्चत्खगमुक्तशिखैर्लताग्रुमैः ।' धा. का. 1-26.



ऊह्यानि । णिजन्तात्, तत्प्रकृतिकसन्नन्ताच्च रूपाणि सर्वाणि चौरादिक-**गन्धयति**वत् (375) ज्ञेयानि । णिजभावपक्षे सन्नन्तात् उप्रत्यये—विवञ्चिषुः[A] इति ।

(1556) "**[डु] वप् बीजसन्ताने**"

(I-भ्वादिः-1003. सक. अनि. उभ.) **यजादिः** ।

"**बीजसन्तानः**=क्षेत्रे बीजविकिरणम् । अयं **गर्भाधाने**ऽपि दृश्यते । यथा—'मा वः क्षेत्रे परबीजा [नि] न्यवाप्सुः' (**आप-धर्मसूत्रे**-2-6-13-6) इति । **छेदने**ऽपि दृश्यते, 'केशान्वपति' इति" इति **मा. धा. वृत्तिः** ।

'—बीजतन्तुसन्ताने' इति **कातन्त्रः** । **द. उ. वृत्ता**वपि (9. 39) एवमेव ।

'—**छेदने**' इति **केचित्** । '—**मुण्डबीजोप्त्योः**' इति **वोपदेवः** ।

'निपूर्वात् पितृक्रियार्थता' इति **धा. का. व्याख्यायाम्** (2. 42) । 'बीज-तन्तुसन्ताने, वपने, धर्षणे, तन्तुनिर्माणे च' इति **काशकृत्स्नः** ।

प्रणिवापकः-पिका, वापकः-पिका, [1]विवप्सकः-प्सिका, वावपकः-पिका ;

प्रणिवप्ता-वप्त्री, प्रणिवापयिता-त्री, विवप्सिता-त्री, वावपिता-त्री ;

[2]प्रणिवपन्-आवपन्[B]-न्ती, वापयन्-न्ती, विवप्सन्-न्ती ; —

वप्स्यन्-न्ती-ती, वापयिष्यन्-न्ती-ती, विवप्सिष्यन्-न्ती-ती ; —

वपमानः, वापयमानः, विवप्समानः, वावप्यमानः ;

वप्स्यमानः, वापयिष्यमाणः, विवप्सिष्यमाणः, वावपिष्यमाणः ;

[3]यवोप्-यवोब्-यवोपौ-यवोपः ; — —

[4]उप्तम्-[C]उप्तः-उप्तवान्, वापितः, विवप्सितः, वावपितः-तवान् ;

---

1. 'एकाच उपदेशे—' (7-2-10) इति धातोरनिट्त्वम् । सन्नन्ते अभ्यासस्येकारः ।
2. 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपति—' (8-4-17) इत्या-दिना उपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशे रूपमेवम् । एवं तव्य-अनीयर्-ल्युटादिप्रत्ययेष्वपि प्रक्रिया ज्ञेया ।
3. यवान् वपतीत्यर्थः । '**वपादे**स्तु **यवोब्** विश्वोट् दोषवीश्च पटोत् तुकि ।' इति **प्रक्रियासर्वस्वे** ।
4. निष्ठायां यजादित्वात् 'वचिस्वपि–' (6-1-15) इति संप्रसारणे रूपमेवम् । एवं यक्क्त्वाक्तिन्नादिष्वपि ।

A. 'रामसंघुषितं नैतन्मृगस्यैव **विवञ्चिषोः** ।' भ. का. 5-55.

B. 'तरीषु तत्रत्यमफल्गु भाण्डं सांयात्रिकान् **आवपतो**ऽभ्यनन्दत् ॥' शि. व. 3.76.

C. 'तस्योल्लसत्काञ्चनकुण्डलाग्र**प्रत्युप्त**गारुत्मतरत्नभासा ।' शि. व, 3.5.

वपः, वपनः[1], प्रवापी[2], निवापी, धान्यवापी, वापः, [A]विवप्सुः, वावपः ;

प्रणिवप्तव्यम्, वापयितव्यम्, विवप्सितव्यम्, वावपितव्यम् ;

प्रणिवपनीयम्, वापनीयम्, विवप्सनीयम्, वावपनीयम् ;

[3]वाप्यम्, वाप्यम्, विवप्स्यम्, वावप्यम् ;

ईषद्वपः-दुर्वपः-सुवपः ; — — —

उप्यमानः, वाप्यमानः, विवप्स्यमानः, वावप्यमानः ;

वापः, [4]उप्त्रिमम्,[B] वापः, विवप्सः, वावपः ;

वप्तुम्, वापयितुम्, विवप्सितुम्, वावपितुम् ;

उप्तिः, [5]वपा, वापना, विवप्सा, वावपा ;

प्रणिवपनम्, वापनम्, विवप्सनम्, वावपनम् ;

उप्त्वा, वापयित्वा, विवप्सित्वा, वावपित्वा ;

प्रवोप्य, प्रवाप्य, प्रविवप्स्य, प्रवावप्य ;

वापम् २ } वापम् २ } विवप्सम् २ } वावपम् २ ; }
उप्त्वा २ } वापयित्वा २ } विवप्सित्वा २ } वावपित्वा २ ; }

[6]वप्रिः, वापिः[7],

---

1. नन्द्यादिषु (3-1-134) पाठात् कर्तरि ल्युप्रत्ययः इति **केचित्**।
2. 'रक्षश्रु**वपीनाम्**' (वा. 3-1-134) इति ग्रहादिपाठाण्णिनिप्रत्ययः।
3. 'आसुयु**वपि**—' (3-1-126) इति ण्यत्प्रत्ययः। 'पोरदुपधात्' (3-1-98) इति यतोऽपवादः।
4. 'ड्वितः क्त्रिः' (3-3-88) इति क्त्रिप्रत्यये, 'क्त्रेर्मम्नित्यम्' (4-4-20) इति नित्यं मप्प्रत्यये च रूपमेवम्।
5. भिदादि (3-3-104) पाठात् स्त्रियां अङि रूपमेवम्। **वपा=नाभेः** श्वेतं मांसम्।
6. 'वङ्क्रयादयश्च' (द. उ. 1-35) इति क्रिन्प्रत्यये रूपम्। **वप्रिः=क्षेत्रम्**।
7. '**वसिवपि**वदि—' (द. उ. 1-53) इति इञ्प्रत्यये वृद्धौ च रूपमेवम्। वपति अस्यामिति **वापिः**=पुष्करिणी। कृतसोपानकः कूपः।

A. 'आतिथ्यमेभ्यः परिनिर्**विवप्सोः** कल्पद्रुमा योगबलेन फेलुः।' भ. का. 3.42.
B. 'असंस्कृत्रिमसंख्यानाव**नुप्त्रिम**फलाशिनौ।' भ. का. 4.37.



[1]वप्रः[A], [2]वपुः.

(1557) "**वभ्र गत्यर्थः**" (I-भ्वादिः-557. सक. सेट्. पर.)

'—**गतौ**—चलने' इति **काशकृत्स्नः**।

वभ्रकः-भ्रिका, वभ्रकः-भ्रिका, विवभ्रिषकः-[3]विवब्भ्रिषकः-षिका, वावभ्रकः-भ्रिका ;
वभ्रिता-त्री, वभ्रयिता-त्री, विवभ्रिषिता-विवब्भ्रिषिता-त्री, वावभ्रिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कर्बति**वत् (173) ऊह्यानि। शतरि वभ्रन्-न्ती इति। वभ्रः=विवादः।

(1558) "**टु वम उद्गिरणे**" (I-भ्वादिः-849. सक. सेट्. पर.)

'उद्गिरणे=वमने' इति **काशकृत्स्नः**। **ज्वलादिः, मिच्च**।
'**उद्गिरणम्**=अन्तर्गतस्य मुखेन निःसारणम्' इति **मा. धा. वृत्तिः**।
'—भुक्तस्योर्ध्वगतिः' इति **क्षीरस्वामी**। '**उदित्** इति **काशकृत्स्न**पाठः' इति **तरङ्गिण्याम्**। प्रकृतकाशकृत्स्नधातुपाठे तु 'डु **वम**—' इत्येव दृश्यते।
'**काश्यपादीना**मपि उदित्पाठः' इति **मा. धा. वृत्तिः**।

[4]वामकः-मिका, वामकः-मिका, [5]वमकः-मिका, विवमिषकः-षिका,
वंवमकः-मिका ;

---

1. 'वृधि**वपि**भ्यां रन्' (द. उ. 8-45) इति रन्प्रत्यये रूपमेवम्। उप्यतेऽस्मिन् बीजमिति **वप्रम्**=क्षेत्रम्, प्राकारजातिर्वा। '**वप्रो**ऽस्त्री सानुमानयोः' इति **कोशः**।
2. 'अर्त्तिपृ**वपि**यजि—' (द. उ. 9-39) इति उसिप्रत्ययः। उप्यते प्राक्कर्मभिरिति **वपुः**=शरीरं, तेजश्च।
3. सनि 'अनचि च' (8-4-47) इति भकारस्य पक्षे द्विर्वचने 'झलां जश् झशि' (8-4-53) इति पूर्वस्य जश्त्वे च रूपमेवम्। एवं सन्नन्ते सर्वत्र रूपद्वयं बोध्यम्।
4. 'नोदात्तोपदेशस्य मान्तस्य—' (7-3-34) इत्यादिना वृद्धिनिषेधे प्राप्ते 'अनाचमिकमि**वमीनाम्**—' (वा. 7-3-34) इति **वार्त्तिकात्** वृद्धिनिषेधो न। तेन ण्वुलि **वामकः** इति रूपम्।
5. 'ग्लास्नावनु**वमाम्**—' (ग. सू. भ्वादिः) इति अनुपसृष्टस्य धातोः मित्त्वं विकल्पेन भवति। ततः '**मितां** ह्रस्वः' (6-4-92) इति ह्रस्वः, तेन ण्यन्ते सर्वत्र रूपद्वयं बोध्यम्।

A. '………… …तीव्रं महाव्रतमिवात्र चरन्ति **वप्राः**॥' शि. व. 4.58.

वमिता-त्री, वामयिता-वमयिता-त्री, विवमिषिता-त्री, वंवमिता-त्री ;
वमन्-न्ती, वामयन्-वमयन्-न्ती, विवमिषन्-न्ती ; —
वमिष्यन्-न्ती-ती, वामयिष्यन्-न्ती-ती, विवमिषिष्यन्-न्ती-ती ; —
— वामयमानः-वमयमानः, — वंवम्यमानः, वंवमिष्यमाणः ;
वमितम्-तः-तवान्, [1]वान्तम्-वान्तः-वान्तवान्, वमितः, विवमिषितः, वंवमितः-तवान् ;
वमः-[2]वामः, [3]वमी, [4]वमथुः[A], वामः-वमः वामी, [5]वामनः, विवमिषुः, वंवमः ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**चनति**वत् (494) ऊह्यानि । [6]वम्यम्, वान्तिः, [7]वमित्वा-वान्त्वा इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1559) " **वय गतौ** " (I-भ्वादिः-475. सक. सेट्. आत्म.)

वायकः-यिका, वायकः-यिका, विवयिषकः-षिका, वावयकः-यिका ;
वयिता-त्री, वाययिता-त्री, विवयिषिता-त्री, वावयिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**चयति**वत् (502) बोध्यानि । शानचि-

---

1. 'आदितश्च' (7-2-16) इति **च**कारस्यानुक्तसमुच्चयार्थकत्वात् निष्ठायामनिट्त्वम् इति **काशिकादौ** । " 'धारानिपातैः सह किन्तु वान्तः चन्द्रोऽयमित्यार्ततरं रसासे' इति **पाणिनिः** " इति **प्रक्रियासर्वस्वटीकायाम्** (पु. 26)। '**वम्**जप्-व्याश्वसो निष्ठायाः इड् वा इति **केचित्**' इत्युक्त्वा **वमितः-वान्तः** इति' **प्रक्रियाकौमुदी** ।
2. कर्तरि 'ज्वलितिकसन्तेभ्यो णः' (3-1-140) इति विकल्पेन णप्रत्ययः । अचोऽपवादः । तेन रूपद्वयम् ।
3. 'जिदृक्षिविश्रीण्**वम**—' (3-2-157) इत्यादिना तच्छीलादिषु कर्तृषु इनिप्रत्यये रूपमेवम् ।
4. भावादौ ट्वितो धातोः 'ट्वितोऽथुच्' (3-3-89) इति अथुच्प्रत्यये रूपमेवम् । 'पुमांस्तु **वमथुः** समाः' इत्य**मरः** ।
5. वृद्धिपक्षे ण्यन्तात् नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः । **वामनः**=लघुपरिमाणः विष्णोरवतारः ।
6. 'पोरदुपधात्' (3-1-98) इति यत्प्रत्यये रूपम् । ण्यतोऽपवादः ।
7. उदित्पक्षे क्त्वायाम् 'उदितो वा' (7-2-56) इति इड्विकल्पः । इडभावपक्षे 'अनुनासिकस्य—'(6-4-15) इति दीर्घे **वान्त्वा** इति रूपम । तेन रूपद्वयं बोध्यम् ।

A. '**सरक्तं वमथुं** केचिद् भ्राजथुं न च केचन ॥' भ. का. 4-43.



वयमानः, [1]वयनः, [2]वयटः, [3]वायसः, [4]वयः, इमानि रूपाण्यधिकान्यत्रेति विशेषः । वयी=स्त्री, वायिः=सगोत्रः, वायः=व्यर्थः, वायम्=मुखम् ।

(1560) " **वर ईप्सायाम्** " (X-चुरादिः-1853. सक. सेट्. उभ.)

**कथादिः, अदन्तश्च ।**

[5]वरकः-रिका, विवरयिषकः-षिका, वरयिता-त्री, विवरयिषिता-त्री ;
वरयन्-न्ती, विवरयिषन्-न्ती, वरयिष्यन्-न्ती-ती, विवरयिषिष्यन्-न्ती-ती ;
क्विपि-वः-वरौ-वरः, ल्यपि-[6]संवरय्य, संविवरयिष्य इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**कलयति**वत् (176) ज्ञेयानि ।

(1561) " **वर्च दीप्तौ** " (I-भ्वादिः-162. अक. सेट्. आत्म.)

वर्चकः-र्चिका, वर्चकः-र्चिका, विवर्चिषकः-षिका, वावर्चकः-र्चिका ;
वर्चिता-त्री, वर्चयिता-त्री, विवर्चिषिता-त्री, वावर्चिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**चर्चति**वत् (505) ऊह्यानि । अस्य धातोः आत्मनेपदित्वात् शानचि-[A]वर्चमानः, क्विपि-[7]अवावर्क्-वर्चौ-वर्चः, सुवर्ची, सुवर्चिका, सुवर्चला, वर्चस्कम्, ब्रह्मवर्चसम्-हस्तिवर्चसम्, ण्यति-[8]वर्च्यम्, [9]वर्चा, [10]वर्चः इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्तीति बोध्यम् ।

---

1. तच्छीलादिषु कर्तृषु 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच्प्रत्ययः ।
2. 'शकादिभ्योऽटन्' (द. उ. 5-2) इत्यटन्प्रत्यये रूपमेवम् । **वयटः**=रसः ।
3. '**वयो** णित्' [द. उ. 9-46] इति असच्प्रत्यये णित्संज्ञके च रूपमेवम् । णित्त्वात् उपधावृद्धिः । **वायसः**=काकः ।
4. औणादिके [द. उ. 9-49] असुन्प्रत्यये रूपमेवम् । वयते गच्छति तदाशु इति **वयः**=शरीरावस्था । पक्षी इति **केचित्** ।
5. अत्र सर्वत्र अल्लोपस्य स्थानिवत्त्वात् उपधावृद्धिर्न भवति ।
6. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशे रूपमेवम् ।
7. 'रात् सस्य' (8-2-24) इति नियमात् न संयोगान्तलोपः ।
8. ण्यति 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वं न भवति । 'न क्वादेः' (7-3-59) इत्यत्र 'क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात्' इति **वार्तिकम्** । ये क्वादयोऽन्ये वा निष्ठायामनिटस्तेषां कुत्वम्, ये तु सेटस्तेषां नेति संग्रहार्थः । तेनात्र कुत्वं नेति ज्ञेयम् ।
9. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः । क्तिनोऽपवादः ।
10. औणादिके [द. उ. 9-49] असुन्प्रत्यये रूपमेवम् । **वर्चः**=आशुतेजसी इत्यर्थः ।

A. 'सुमङ्घिताः शिङ्घितपुष्पसौरभा य**द्वर्चमानाः** पशुपाः प्रसेचिरे ॥' धा. का. 1.22.

(1562) " **वर्ण प्रेरणे** " (X-चुरादिः-1551. सक. सेट्. उभ.)

'**मैत्रेय** एवमुक्तवान्' इति **मा. धा. वृत्तिः**। **क्षीरस्वामी** तु '—**वर्णने**' इत्याह। **सि. कौमुद्या**मपि '—प्रेरणे' इति पठित्वा, 'वर्णने इत्ये**के**' इति दृश्यते।

वर्णकः-र्णिका, विवर्णयिषकः-षिका; वर्णयिता-त्री, विवर्णयिषिता-त्री;
इत्यादीनि रूपाणि सर्वाण्यपि चौरादिकचू**र्णयति**वत् (559) बोध्यानि। वर्णं गृह्णाति इत्यर्थे वर्णयति—'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म**वर्ण**—' (3-1-25) इति णिच्।

(1563) " **वर्ण वर्णक्रियाविस्तारगुणवचनेषु** "

(X-चुरादिः-1938. सक. सेट्. उभ.) **अदन्तः**।

**वर्णक्रिया**=वर्णनं, वर्णकरणं वा। कथां वर्णयति, सुवर्णं वर्णयति, विस्तृणातीत्यर्थः। **विस्तारे**—वर्णनेयम्। **गुणवचनं**=स्तुतिः, शुक्लाद्युक्तिर्वा। राजानमुपवर्णयति। '—**रागे विस्तारे प्रशंसायां च**' इति **काशकृत्स्नः**।

वर्णकः-र्णिका, विवर्णयिषकः-षिका; वर्णयिता-त्री, विवर्णयिषिता-त्री;
इत्यादीनि रूपाणि सर्वाणि भेदनार्थकचौरादिक**कर्णयति**वत्- (170) ज्ञेयानि।

(1564) " **वर्ध छेदनपूरणयोः** " (X-चुरादिः-1655. सक. सेट्. उभ.)

'छेदने पूरणे चार्थे वर्धः **वर्धयतीति** णौ ॥' (श्लो. 123.) इति **देवः**।
**काशकृत्स्नेन** '**वृधु वर्धने**' इति पठित्वा **वर्धकिः** – तक्षकः इत्युक्तम्। तत्र **टिप्पण्यां** तु '**प्राङ् नाभिवर्धनात्** पुंसः' इति **मनु**(2. 29.)वचने छेदनार्थ एव दृश्यते। **वर्धकि**प्रयोगेऽपि स एवार्थोऽभिप्रेतः। अतः **काशकृत्स्न**पाठे लेखकप्रमादात् भ्रष्टपाठः स्यात्, यद्वा **वर्धन**शब्दस्य **छेदन** एवात्रार्थो ग्रहीतव्यः' इत्येवमुक्तम्।

वर्धकः-र्धिका, विवर्धयिषकः-षिका, वर्धयिता-त्री, विवर्धयिषिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्चयति**वत् (507) ऊह्यानि।

(1565) " **वर्फ गतौ** " (I-भ्वादिः-412A. सक. सेट्. पर.)

" **क्षीरस्वामिचन्द्रकातन्त्रहेरम्बादयः** 'वर्फ—' इति पठन्ति। **मैत्रेयसायणजैनकाशकृत्स्नशाकटायनप्रभृतयः** न पठन्ति " इति **पा. धा.**



**समीक्षा**। **क्षीरतरङ्गिण्याम्** '**वर्फ**—' इति पठित्वा '**हिंसार्थे कण्ठः** पठति' इत्युक्तम्। '**वफ**—' इति **काशकृत्स्नः**। '**पर्प**—' इति **सायणः**।

वर्फकः-र्फिका, वर्फकः-र्फिका, विवर्फिषकः-षिका, वावर्फकः-र्फिका;
वर्फिता-त्री, वर्फयिता-त्री, विवर्फिषिता-त्री, वावर्फिता-त्री;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कर्बति**वत् (173) ज्ञेयानि।

(1566) " **वर्ष स्नेहने** " (I-भ्वादिः-613. अक. सेट्. आत्म.)

'…………**स्नेहे** तु **वर्षते** ॥' (श्लो. 176) इति **देवः**।
'**वर्ष**—' इति **क्षीरस्वामी**। **चन्द्रकाशकृत्स्नकातन्त्रहेरम्बवोपदेवादयः** न पठन्ति। **शाकटायनदेवमैत्रेयसायणभट्टोजिदीक्षितादयः** 'वर्ष स्नेहने' इत्यभ्युपगच्छन्ति। **स्नेहनं**=स्निग्धीभावः। '**पर्ष वर्ष**' इति पृथक्त्वेन **मैत्रेयः** पठति।

वर्षकः-र्षिका, वर्षकः-र्षिका, विवर्षिषकः-षिका, वावर्षकः-र्षिका;
वर्षिता-त्री, वर्षयिता-त्री, विवर्षिषिता-त्री, वावर्षिता-त्री;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कर्बति**वत् (173) ज्ञेयानि। अवावर्ट्-[1]अवावर्ड्-वर्षौ-वर्षः, [2]प्रियवर्षी, धनवर्षी, निष्ठायाम्-वर्षितम्-तः-तवान्, इमानि रूपाणि विशेषेण भवन्ति।

(1567) " **वर्ह परिभाषणहिंसाच्छादनेषु** "

(I-भ्वादिः-640. सक. सेट्. आत्म.)

'—**परिभाषणहिंसादानेषु**' इति **क्षीरस्वामिमैत्रेयद्रुमसायणादयः**। '—**प्राधान्य**परिभाषण....दानेषु' इति **कातन्त्रे**। **चन्द्रकाशकृत्स्नौ** न पठतः। " अत्र **धनपालमैत्रेयौ** परिभाषणादावोष्ठ्यादित्वम्, वृद्धौ दन्त्योष्ठ्यादित्वं चाहतुः। 'छादयत्यनेनेति वर्हः घञ्' इति वदन् **शाकटायनो**ऽप्यत्रैवानुकूलः। यथा **वयं** तथा **स्वामी**।" इति **मा. धा. वृत्तिः**।
'**परिभाषण**मत्र वञ्चनवादः' इति **धा. का. व्याख्या** (1-81)।

---

1. क्विपि, 'रात् सस्य' (8-2-24) इति नियमात् न संयोगान्तलोपः।
2. ताच्छीलिके णिनिप्रत्यये रूपमेवम्।

वर्हकः-र्हिका, वर्हकः-र्हिका, विवर्हिषकः-षिका, वावर्हकः-र्हिका ;
वर्हिता-त्री, वर्हयिता-त्री, विवर्हिषिता-त्री, वावर्हिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**गर्हति**वत् (385) बोध्यानि। युचि-[1]वर्हणः, [2]वर्हा इति विशेषः।

(1567-A) " **वर्ह भासार्थः** " (X-चुरादिः-1843. सक. सेट्. उभ.)

इति **क्षीरस्वामिशाकटायनौ** इति **पाणिनीयधातुपाठसमीक्षाया**मुपात्तम्। प्रकृत**क्षीरतरङ्गिण्यां** तु '**वर्ह**' इत्येव दृश्यते। रूपाणि यथासम्भवं बोध्यानि।

(1568) " **वल संवरणसंचरणयोः** "

(I-भ्वादिः-491. सक. सेट्. आत्म.) **घटादिः**।

'—**संवरणे**' इत्येव **क्षीरतरङ्गिणी**। '—**संवृतौ**' इति **जैनेन्द्रे**। '—**चलने** संवरणे च' इति **कातन्त्रः**। '—**स्मृतौ**' इति **वोपदेवः**। '—**संवरणे**—प्रसारे' इति **काशकृत्स्नः**। इतः पूर्वं भ्वादौ '**वल निष्पत्तौ**—फलितभावे' इति च पठितम्। अन्यत्र कोशेषु अस्य पाठो न दृश्यते। 'वलतेरात्मनेपदमनित्यम्' इति **वामनालंकारे** (5-2-3)।

वालकः-लिका, [3]वलकः-वालकः-लिका, विवलिषकः-षिका, वावलकः-लिका ;
वलिता-त्री, वालयिता-त्री, विवलिषिता-त्री, वावलिता-त्री ;
— वालयन्-न्ती, वालयिष्यन्-न्ती-ती ; —
वलमानः, वालयमानः, विवलिषमाणः, वावल्यमानः ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**फलति**वत् (174) बोध्यानि। शतरि वलन्-[4]न्ती।

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युचि रूपमेवम्।
2. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः। क्तिनोऽपवादः।
3. 'दलि**वलि**......'इति घटादिषु **भोज**सम्मतः पाठः। 'घटादयो मितः' (ग. सू. भ्वादिः) इति मित्त्वात् 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाह्रस्वः। तेन **वलकः** इत्यादिकानि रूपाणि। ण्यन्ते सर्वत्र एवं ह्रस्वघटितरूपाणि ऊह्यानि।
4. 'अनुदात्तेत्त्वं तङोऽनित्यत्वात् शतरि **वलन्**' इति **धा. का. व्याख्यायाम्** (1-63)।



[1]वालः-वारः-वालिः, वलिः-[2]वली, वलिनः, [3]वलीकम्, वलिभः, वलभी, [4]वालाकिः, [5]वल्मीकम्, वलिः, [6]वल्कः, [7]वलाका—वलाकी, [8]वल्लूकम्, [9]वलयम् ; इत्यादिकानि रूपाण्यधिकान्यत्रेति विशेषः।

(1569) " **वल्क परिभाषणे** " (X-चुरादिः-1571. सक. सेट्. उभ.)

'**श्वल्क**' इति **मैत्रेयादयः**। '—**भाषणे**' इति **चन्द्रजैनकाशकृत्स्नकातन्त्रादयः**।

वल्ककः-ल्किका, विवल्कयिषकः-षिका ; वल्कयिता-त्री, विवल्कयिषिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**चर्चयति**वत् (507) बोध्यानि। निष्ठायां वल्कितं-तः-तवान् इति। [A]**वल्कलम्**=वृक्षत्वक्।

(1569-A) " **वल्क दर्शने** " (X-चुरादिः-1916. सक. सेट्. उभ.)

सर्वाण्यपि रूपाणि **चर्चयति**वत् (507) ऊह्यानि। **क्षीरस्वामिमाधवादयः** न पठन्ति।

---

1. संज्ञायाम् 'हलश्च' (3-3-121) इति करणे घञ्प्रत्यये रूपमेवम्। '**वालमूल**—' (वा. 8-2-18) इत्यादिना पक्षे **रः**। तेन रूपद्वयं बोध्यम्। **वालः**=केशः, पुच्छम् च। **वालिः**=देवेन्द्रस्य पुत्रः।
2. इन्नन्तात् 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति वा ङीष्।
3. वलति आवृणोतीत्यर्थे 'अलीकादयश्च' (द. उ. 3-43) इति ईकन्प्रत्ययः। '**वलीक**नीध्रे पटलप्रान्ते' **इत्यमरः**।
4. वलाकाया अपत्यमित्यर्थे 'बाह्वादिभ्यश्च' (4-1-96) इतीञ्प्रत्यये रूपम्।
5. 'अलीकादयश्च' (द. उ. 3-43) इत्यत्र ईकनन्तो निपातितः। मुमागमोऽपि निपातनादेव। 'वामलूरश्च नाकुश्च **वल्मीकं** पुन्नपुंसकम्' **इत्यमरः**। वल्मीके भवः इत्यर्थे अण्प्रत्यये इञि च **वाल्मीकिः**=आदिकविः श्रीमद्रामायणस्य कर्ता।
6. 'शुक**वल्को**ल्काः' (द. उ. 3-20) इति कप्रत्यये निपातितः। **वल्कः**=वासः, तरुत्वक् च।
7. '**वलाकादयश्च**' (द. उ. 3-32) इत्याकप्रत्यये, टापि च रूपमेवम्। **वलाका**=पक्षिजातिः। वलाका अस्य सन्तीति 'व्रीह्यादिभ्यश्च' (5-2-116) इति मत्वर्थे इनिः।
8. 'वल्लूकः' [व्यल्कः] (द. उ. 3-45) इत्यूकप्रत्यये निरूढः। **वल्लूकम्**=उत्पलद्रव्यम्।
9. '**वलिमलितनिभ्यः** कयन्' (द. उ. 8-10) इति कयनप्रत्यये रूपमेवम्। **वलयम्**=आभरणविशेषः। 'कटकं **वलये** सानौ' **इत्यमरः**।

A. '...**वल्कलेना**पि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम्।' शाकुन्तले-1-20

(1570) " **वल्ग गत्यर्थः**" (I-भ्वादिः-143. सक. सेट्. पर.)

'**वल्गि**—' इति मा. धा. **वृत्तिः** । '—**प्लुतगतौ**' इति **भट्टमल्लः** ।
वल्गकः-ल्गिका, वल्गकः-ल्गिका, विवल्गिषकः-षिका, वावल्गकः-ल्गिका ;
वल्गिता-त्री, वल्गयिता-त्री, विवल्गिषिता-त्री, वावल्गिता-त्री ;
वल्गन्-न्ती, इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**गल्भति**वत् (389) ऊह्यानि । ल्युटि-[A]वल्गनम्, निष्ठायाम्-वल्गितः[B] इति विशेषः । [1]वल्गुः ।

(1571) " **वल्भ भोजने** " (I-भ्वादिः-391. सक. सेट्. आत्म.)

वल्भकः-ल्भिका, वल्भकः-ल्भिका, विवल्भिषकः-षिका, वावल्भकः-ल्भिका;
वल्भिता-त्री, वल्भयिता-त्री, विवल्भिषिता-त्री, वावल्भिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि धार्ष्ट्यार्थकभौवादिक**गल्भति**वत् (389) ऊह्यानि । णिनिप्रत्यये-प्रवल्भी, युचि-वल्भनः, इति विशेषः । ण्यन्तात् शतरि-[2]वल्भयन्-न्ती, इति ।

(1572) " **वल्ल संवरणे संचरणे च** " (I-भ्वादिः-492. सक. सेट्. आत्म.)

अमुं धातुं **क्षीरस्वामी** न पठति । '—**चलने च**' इति **कातन्त्रः** ।
' सौत्रोऽयं धातुः ' इति **द. उ. वृत्त्याम्** (1-52) । **काशकृत्स्नीये '—संवरणे'** इति पठित्वा इतः पूर्वं (भ्वादौ) '**वल्ल** निष्पत्तौ ' इत्यपि पृथक् धातुः पठितः ।
वल्लकः-ल्लिका, वल्लकः-ल्लिका, विवल्लिषकः-षिका, वावल्लकः-ल्लिका ;
वल्लिता-त्री, वल्लयिता-त्री, विवल्लिषिता-त्री, वावल्लिता-त्री ;
—वल्लयन्-न्ती, वल्लयिष्यन्-न्ती-ती ; वल्लमानः, वल्लयमानः, विवल्लिषमाणः, वावल्ल्यमानः ; इत्यादिकानि सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**कङ्कति**वत् (156) ज्ञेयानि ।

---

1. औणादिके (द. उ. 1-104) उप्रत्यये रूपमेवम् । **वल्गुः**=सरसं, दर्शनीयं च ।
2. निगरणार्थत्वेन णिजन्तात् '**निगरण**चलनार्थेभ्यश्च' (1-3-87) इति नित्यं परस्मैपदम् ।

A. ' एखच्चकोरोत्करमिङ्गितं शुकैः प्रेङ्खल्लता**वल्गन**रङ्गमण्डपम् । ' धा. का. 1-20.

B. ' विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्विभङ्गं स्तनयुग्म**वल्गितम्** । ' भ. का. 11-37.



[1]वल्लरी-वल्लरिः, [2]वल्लिः-[A]वल्लिः-वल्ली-लता, [3]वल्लभः[B] [4]वल्लकी, [5]वल्लवः वल्लूरः[6] इमानि रूपाण्यधिकानीति विशेषः ।

(1573) " **वल्ह परिभाषणहिंसाच्छादनेषु** "

(I-भ्वादिः-641. सक. सेट्. आत्म.)

'**केचित्तु** ओष्ठ्यादिः इत्याहुः ' इति **सि. कौमुद्याम्** । '—परिभाषणहिंसा-**दानेषु** ' इति, **दन्त्यौष्ठ्यादिः**, ' अत्र **धनपालमैत्रेयौ** परिभाषणादावोष्ठ्यादित्वम्, वृद्धौ दन्त्यौष्ठ्यादित्वं चाहतुः ' इति च **माधवः** । '**वल्ह** प्राधान्ये ' इति **तरङ्गिण्याम्** । **पाणिनीयधातुपाठसमीक्षायाम्**—' वल्ह **प्राधान्ये** ' इति **मैत्रेयकातन्त्रशाकटायनहेमादयः** पठन्ति । '—**श्रैष्ठ्ये**' इति **वोपदेवः** ' इत्युक्तम् ।
"—**दाने** च ' इति **द्रुमे** । परिभाषणमत्र वञ्चनवादः ।" इति **धा. का. व्याख्यायाम्** (1-81) ।
वल्हकः-ल्हिका, वल्हकः-ल्हिका, विवल्हिषकः-षिका, वावल्हकः-ल्हिका ;
वल्हिता-त्री, वल्हयिता-त्री, विवल्हिषिता-त्री, वावल्हिता-त्री ;

---

1. बाहुलकाद् अरप्रत्यये पिप्पल्यादित्वात् (ग. सू. 4-1-41) ङीष्प्रत्यये च **रूपम्** ।
2. '**वल्ले**र्वलिरहिरण्ये ' [द. उ. 1-52] इति इन्प्रत्यये, हिरण्यभिन्नार्थे वलिरित्यादेशे च रूपमेवम् । वल्लति वल्ल्यते वा **वलिः**=त्वङ्मांससंकोचः । **वल्लिः** इत्यस्य तु हिरण्यशलाका इत्यर्थः । **वल्ली** इत्यत्र '**कृदिकारात्**—' (वा. 4-1-45) इति ङीष् । '**सौत्रोऽयं धातुः**' इति द. उ. **वृत्त्याम्** ।
3. ' रासि**वल्लिभ्यां** च ' [द. उ. 7-21] इत्यभच्प्रत्यये रूपमेवम् । वल्लति वल्लयते वा **वल्लभः**=दयितः, प्राणप्रिय इति **स्वामी** । '**वल्लभो** दयितेऽध्यक्षे सल्लक्षण-तुरङ्गमे ' इति **विश्वः** ।
4. औणादिके (द. उ. 3-5) क्वुन्प्रत्यये गौरादित्वाद् ङीषि च रूपमेवम् । '....**वीणा** तु **वल्लकी** ' इत्य**मरः** ।
5. औणादिके (द. उ. 8-132) वन्प्रत्यये रूपमेवम् । **वल्लवः**=गोधुक् ।
6. '**खर्जिपिञ्जादिभ्य ऊरोलचौ**' (द. उ. 10-10) इति ऊरप्रत्यये **रूपमेवम्** । **वल्लूरः**=शुष्कमांसम् इत्यर्थः । ' उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ' इत्य**मरः** ।

A. ' विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुह**वल्लि**तन्तुभिः । ' शि. व. 1-7

B. ' रात्रिर्यामत्रयपरिमिता **वल्लभा**स्ते सहस्रं....' । प्रतापरुद्रीयेम् नायकप्रकरणे—श्लो. 50.

इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**गर्हति**वत् (385) ज्ञेयानि। ल्यपि-प्रवल्ह्य।

(1574) " **वश कान्तौ** " (II-अदादिः-1080. सक. सेट्. पर.) **ग्रह्यादिः।**

**कान्तिः**=इच्छा इति **क्षीरस्वामी।**

वाशकः-शिका, वाशकः-शिका, विवशिषकः-षिका, [1]वावशकः-शिका ;
वशिता-त्री, वाशयिता-त्री, विवशिषिता-त्री ; वावशिता-त्री ;
[2]उशन्-न्ती, वाशयन्-न्ती, विवशिषन्-न्ती ; —
वशिष्यन्-न्ती-ती, वाशयिष्यन्-न्ती-ती, विवशिषिष्यन्-न्ती-ती ; —
— वाशयमानः, वाशयिष्यमाणः, — वावश्यमानः, वावशिष्यमाणः ;
उट्-उशौ-उशः ; — —
उशितम्-तः-तवान्, वाशितम्-तः, विवशिषितः, वावशितः-तवान् ;
वशः, [3]वशा, [4]गोवशा, वशी, वाशः, [5]वाशनः,[A] विवशिषुः, वावशः ;
वशितव्यम्, वाशयितव्यम्, विवशिषितव्यम्, वावशितव्यम् ;
वशनीयम्, वाशनीयम्, विवशिषणीयम्, वावशनीयम् ;
वश्यम्, वाश्यम्, विवशिष्यम्, वावश्यम् ;
ईषद्वशः-दुर्वशः-सुवशः ; — —
उश्यमानः, वाश्यमानः, विवशिष्यमाणः, वावश्यमानः ;
[6]वशः, वाशः, विवशिषः, वावशः ;
वशितुम्, वाशयितुम्, विवशिषितुम्, वावशितुम् ;

---

1. 'न **वशः**' (6-1-20) इति यङि परतः **वशेः** संप्रसारणं न भवति।
2. शतरि, 'ग्रहिज्यावयिव्यधि**वष्टि**विचति—' (6-1-16) इति किति ङिति च प्रत्यये परतः संप्रसारणं भवति। तेनैवं रूपम्। एवं क्विप्-निष्ठा-क्तिनादिषु च ज्ञेयम्।
3. पचाद्यचि, तदन्तात् टापि च रूपमेवम्। **वशा**=मांसम्।
4. अत्र 'पोटायुवतिस्तोककतिपयगृष्टिधेनु**वशा**—' (2-1-65) इत्यादिना तत्पुरुष-समासः। **गोवशा**=वन्ध्या गौरित्यर्थः।
5. ण्यन्तात्, 'नन्दि**वाशि**—' (वा. 3-1-134) इत्यादिना संज्ञायां ल्युप्रत्यये रूपमेवम्।
6. '**वशि**रण्योरुपसंख्यानम्' (वा. 3-3-58) इति भावे घञपवादोऽप्प्रत्ययः।

A. 'भृङ्गालीकोकिलकुङ्भि**र्वाशनैः** पश्य लक्ष्मण।' भ. का. 6-74.



उष्टिः, वाशना, विवशिषा, वावशा ;
वशनम्, वाशनम्, विवशिषणम्, वावशनम् ;
[1]वशित्वा, वाशयित्वा, विवशिषित्वा, वावशित्वा ;
प्रोश्य, प्रवाश्य, प्रविवशिष्य, प्रवावश्य ;
वाशम् २ } वशित्वा २ }, वाशम् २ } वाशयित्वा २ }, विवशिषम् २ } विवशिषित्वा २ }, वावशम् २ ; } वावशित्वा २ ; }
[2]उशिक्, [3]उशीरम्, [4]उशनाः.

(1575) " **वष हिंसार्थः** " (I-भ्वादिः-691. सक. सेट्. पर.)

'—वधे' इति **बोपदेवः।**

वाषकः-षिका, वाषकः-षिका, विवषिषकः-षिका, वावषकः-षिका ;
वषिता-त्री, वाषयिता-त्री, विवषिषिता-त्री, वावषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कषति**वत् (179) ऊह्यानि। ल्युटि-वषणम्, क्विपि वट्-वड्-वषौ-वषः ; इति। 'वष्यम्=भक्षितम्, वषिः=खाद्यम्, वषिता=उदरम्भरिः' इति **काशकृत्स्नः।**

(1576) " **वस निवासे** " (I-भ्वादिः-1005. अक. अनि. पर.)

'वस्यति स्तम्भने वस्ते, छादने वसयेत्, **वसेत्**॥ [**यजादिः।**
**निवासे** वासयेत् स्नेहे, वासयत्युपसेवने।' (श्लो. 187-8) इति **देवः।**
'अयं धातुः **उभयपदी**' इति **कातन्त्रशाकटायनादयः।**

वासकः-सिका, वासकः-सिका, [5]विवत्सकः-त्सिका, वावसकः-सिका ;

---

1. क्त्वाप्रत्यये, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् न संप्रसारणम्।
2. '**वशेः** कित्' (द. उ. 4-9) इति धातोरिजिप्रत्यये कित्त्वात् संप्रसारणम्। वष्टि उश्यतेऽसौ श्रेयोऽर्थिभिरिति **उशिक्**=अग्न्यादिः।
3. औणादिके [द. उ. 8-73] ईरन्प्रत्यये, कित्त्वात् संप्रसारणे च रूपमेवम्। उश्यते तदिति **उशीरम्**=गन्धद्रव्यम्। **उशीनरम्** इति तु देशविशेषवाचकं शब्दान्तरम्।
4. '**वशेः** कनसिः' (द. उ. 9-99) इति कनसिप्रत्यये, कित्त्वात् 'ग्रहिज्या—' (6-1-16) इत्यादिना सम्प्रसारणे रूपमेवम्। **उशनाः**=शुक्रः।
5. सन्नन्तात् ण्वुलि, धातुसकारस्य 'सः स्यार्धधातुके' (7-4-49) इति तकारे रूपमेवम्। एवं स्यप्रत्यये, सन्नन्तेषु सर्वत्रापि च ज्ञेयम्।

वस्ता-त्री, वासयिता-त्री, विवत्सिता-त्री, वावसिता-त्री ;

वसन्-न्ती, वासयन्-न्ती, विवत्सन्-न्ती ; —

निवत्स्यन्-न्ती-ती, वासयिष्यन्-न्ती-ती, विवत्सिष्यन्-न्ती-ती ; —

— वासयमानः, वासयिष्यमाणः, — वावस्यमानः, वावसिष्यमाणः ;

[1]अध्युषितम्-[A][अनेन], प्रोषितः,[B] अनुषितो [गुरुं शिष्यः], गुरुः शिष्येण, तः-तवान्, वासितः, विवत्सितः, वावसितः-तवान् ;

वसः, [2]प्रवासी, जलवासी, सुवासी, नगरवासी, [3]ग्रामेवासी-ग्रामवासी, [4]अवासी, होतुरन्तेवासी,[C] पितुरन्तेवासी, [D]अध्यूषुषः [5]ऊषिवान्[E], वासः, वासनः, [6]वास्तव्यः,[F] विवत्सुः, वावसः ;

वस्तव्यम्, वासयितव्यम्, विवत्सितव्यम्, वावसितव्यम् ;

वसनीयम्, वासनीयम्, विवत्सनीयम्, वावसनीयम् ;

---

1. 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽस**वस**—' (3-4-72) इत्यादिना कर्तृकर्मणोः क्तः। '**वसति**क्षुधोरिट्' (7-2-52) इति इडागमः। सम्प्रसारणम्। पूर्वरूपादिकम्। 'शासि**वसि**घसीनां च' (8-3-60) इति षत्वम्।
2. ताच्छीलिकः 'प्रे लपसृद्रुमथवद**वसः**' (3-2-145) इति घिनुण्प्रत्ययः।
3. '**सुप्यजातौ—**' (3-2-78) इति णिनिप्रत्यये 'शयवास**वासिषु** अकालात्' (6-3-18) इति सप्तम्या अलुक्। एवम् **अन्तेवासी** इत्यत्रापि ज्ञेयम्।
4. 'याचिव्याहृसंव्याहृव्रजवद**वसां** प्रतिषिद्धानाम् (ग. सू. 3-1-134) इति **वसेः** ग्रह्यादिपाठात् णिनिप्रत्ययः।
5. 'भाषायां सद**वस**श्रुवः' (3-2-108) इति लिटः क्वसुः। सम्प्रसारणपूर्वरूपादिकम्। अभ्यासस्य उत्तरखण्डस्य च सवर्णदीर्घः। 'शासि**वसि**—' (8-3-60) इति षत्वम्।
6. '**वसे**स्तव्यत् कर्तरि णिच्च' (वा. 3-1-96) इति वचनात् कर्तरि तव्यत्प्रत्ययः। णिद्वद्भावेनोपधावृद्धिः। वसतीति **वास्तव्यः**।

A. 'बभञ्जाध्**युषितं** भूयः क्षुधित्वा पत्त्रिभिर्वनम् ॥' भ. का. 9.39

B. 'आहर्तुमन्यानशिषत् **प्रोषित**त्रासकर्कशः ॥' भ. का. 9.68

C. 'रुतानि शृण्वन् वयसां गणोऽन्ते**वासि**त्वमाप स्फुटमङ्गनानाम् ॥' शि. व. 3.55

D. '**अध्यूषुषो** यामभजञ्जनस्य याः संपदस्ता मनसोऽप्यगम्याः ॥' शि. व. 3-59

E. 'स **प्रोषिवाने**त्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यम्।' भ. का. 3-27

F. 'प्रसूनक्लृप्तिं दधतः सदर्तवः पुरेऽस्य **वास्तव्य**कुटुम्बितां ययुः ॥' शि. व. 1-66



वास्यम्, [1]अमावास्या[A]-अमावस्या, वास्यम्, विवत्स्यम्, वावस्यम्,

उष्यमाणः, वास्यमानः, विवत्स्यमानः, वावस्यमानः ;

ईषद्वसः-दुर्वसः-सुवसः ; — —

निवासः, [2]आवासः[B], लिप्तवासः, वनेवासः,[C] वनवासः, ग्रामेवासः, [3]उदवासः, उदकवासः, उद्वासः, उपवासः, प्रावासः, वासः, विवत्सः, वावसः ;

वस्तुम्, वासयितुम्, विवत्सितुम्, वावसितुम् ;

[4]उष्टिः, [5]वासिः, वासना, विवत्सा, वावसा ;

वसनम्, वासनम्, विवत्सनम्, वावसनम् ;

[6]उषित्वा[D], वासयित्वा, विवत्सित्वा, वावसित्वा ;

[E]प्रोष्य, प्रवास्य, प्रविवत्स्य, प्रवावस्य ;

वासम् २, उषित्वा २, } वासम् २, वासयित्वा २, } विवत्सम् २, विवत्सित्वा २, } वावसम् २ ; वावसित्वा २; }

---

1. अमा=सह वसतः सूर्याचन्द्रमसौ इत्यर्थे '**अमावस्यद्** अन्यतरस्याम्' (3-1-122) इति ण्यत्प्रत्ययान्तो निपात्यते। पक्षे वृद्ध्यभावश्च निपातनादेव। तेन **अमावास्या अमावस्या** इति रूपद्वयम्।
2. 'हलश्च' (3-3-121) इति घञ्। 'शय**वास**—' (6-3-18) इति सप्तम्य अलुक्।
3. 'पेषं**वास**वाहनधिषु च' (6-3-58) इति सूत्रेण **वास**शब्द उत्तरपदे उदकशब्दस्य उदादेशः। **उदवासः** उदकस्य वास इत्यर्थः।
4. स्त्रियां क्तिनि सम्प्रसारणषत्वष्टुत्वादिकेषु रूपमेवम्। **वसतिः** इति तु औणादिकं रूपमिति ज्ञेयम्।
5. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति इक्प्रत्यये रूपम्। यद्यपि भाव एवायं प्रत्ययः, तथापि यथासम्भवं कर्तर्यपि भवति। **वासिः**=तक्ष्ण आयुधविशेषः।
6. '**वसति**क्षुधोरिट्' (7-2-52) इति क्त्वायामिडागमः। 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधं बाधित्वा 'मृडमृदगुधकुषक्लिशवद**वसः** क्त्वा' (1-2-7) इति कित्त्वम्। तेन सम्प्रसारणादिकं भवतीति ज्ञेयम्।

A. 'स तामूचेऽथ कच्चित्त्व**ममावास्या**समन्वये।' भ. का. 6-64

B. '**आवासे** सिक्तसंमृष्टे गन्धैस्त्वं **लिप्तवासिता**।' भ. का. 5-90

C. 'रक्षन् **वनेवास**कृताद् भयात् तान् प्रातश्छलेनापजगाम रामः ॥' भ.का.3-16

D. 'ते भुक्तवन्तः सुसुखं वसित्वा वासांस्य**ुषित्वा** रजनीं प्रभाते।' भ. का. 3-45.

E. 'क्षणमतुहिनधाम्नि **प्रोष्य** भूयः पुरस्तात्......।' शि. व. 11-65

[1]वसतिः, [2]वासिः, [3]वसिः, [4]वस्तिः, [5]वसु, [6]वस्तु, [7]वास्तु, [8]आवसथः, [9]वत्सरः, [10]वासरः, [11]वसिष्ठः, [12]वस्नम्, [13]वसन्तः, [14]वस्त्रम्.

(1577) " **वस आच्छादने** " (II-अदादिः-1023. अक. सेट्. आत्म.)

'वस्यति स्तम्भने **वस्ते छादने** वसयेत् वसेत् ॥' (श्लो. 187) इति **देवः** ।
'—**स्मृतौ**' इति **वोपदेवः** ।

वासकः-सिका, वासकः-सिका, विवसिषकः-षिका, वावसकः-सिका ;
वसिता-त्री, वासयिता-त्री, विवसिषिता-त्री, वावसिता-त्री ;
—वासयन्-न्ती, वासयन् वासयमानो वा वस्त्रं देवदत्तेन, वासयिष्यन्-न्ती-ती,

---

1. 'वहि**वस्य**र्तिभ्यश्चित्' (द. उ. 1-29) इत्यतिप्रत्ययः । **वसतिः**=आलयः ।
2. '**वसि**वपि—' (द. उ. 1-53) इति इञ्प्रत्ययः । **वासिः**=तक्षकारभाण्डम् ।
3. औणादिकः (द. उ. 1-68) इप्रत्ययः । **वसिः** शय्या, रात्रिर्वा ।
4. '**वसे**स्तिः' (द. उ. 1-74) इति तिप्रत्ययः । वसत्यस्मिन् नानौषधियुक्तः स्नेह इति **वस्तिः**-अधःकायप्रदेशः, चर्ममयः पुटश्च । **बस्तिः** इति **गौडीयाः** ।
5. औणादिके (द. उ. 1-95) उप्रत्यये रूपमेवम् । **वसु**=धनम् ।
6. '**वसे**स्तुन्' (द. उ. 1-128) इति तुन्प्रत्ययः । **वस्तु**=द्रव्यम् ।
7. 'अगारे णिच्च' (द. उ. 1-129) इति तुन्प्रत्ययः, तस्य णिद्वद्भावेनोपधावृद्धिः । **वास्तु**=गृहादिकम् ।
8. 'आङि **वसः**' (द. उ. 6-39) इति आङ्युपपदे धातोरथप्रत्यये रूपमेवम् । **आवसथः**=गृहादिकम् ।
9. '**वसे**श्च' (द. उ. 8-51) इति सरन्प्रत्यये 'सः स्यार्द्धधातुके' (7-4-49) इति तकारादेशे च रूपम् । वसन्त्यस्मिन् ग्रहनक्षत्रर्तुदेवता इति **वत्सरः**=अब्दः । 'संवत्सरो **वत्सरो**ऽब्दः हायनोऽस्त्री शरत्समाः' **इत्यमरः** ।
10. णिजन्तात् औणादिके (द. उ. 8-100) अरप्रत्यये रूपमेवम् । 'घस्रो दिनाहनी वा तु क्लीबे दिवस**वासरौ**' **इत्यमरः** ।
11. अतिशयेन वसुमान् **वसिष्ठः** । वसुमच्छब्दात् इष्ठन्प्रत्यये मतुब्लुकि टिलोपे च रूपमेवम् ।
12. 'धापॄ**वस्य**ज्यतिभ्यो नः' (द. उ. 5-39) इति नः । "**वस्नम्** मूल्यम्" इति **धातुवृत्तिः** ।
13. 'तॄभूवहि**वसि**—' (द. उ. 6-19) इति झच्प्रत्ययः । 'झोऽन्तः' (7-1-3) इति अन्तादेशे **वसन्तः** इति रूपम् । ऋतुविशेषः ।
14. औणादिके (द. उ. 8-79) ष्ट्रन्प्रत्यये रूपमेवम् । **केचित्तु 'वस** आच्छादने' इत्यस्मात् व्युत्पादयन्ति, तदेव न्याय्यम् ।



[A]वसानः, वासयमानः, विवसिषमाणः, वावस्यमानः ;
वसिष्यमाणः, वासयिष्यमाणः; विवसिषिष्यमाणः, वावसिष्यमाणः ;
[1]चर्मवः-चर्मवसौ-चर्मवसः ; — — —
वसितम्-तः, वासितम्, विवसिषितः, वावसितः-तवान् ;
वसः, [2]वसा, सुवासी, [3]वसनः, [4]वसिता, वासः, विवसिषुः, वावसः ;
वसितव्यम्, वासयितव्यम्, विवसिषितव्यम्, वावसितव्यम् ;
वसनीयम्, वासनीयम्, विवसिषणीयम्, वावसनीयम् ;
वास्यम्, वास्यम्, विवसिष्यम्, वावस्यम् ;
वस्यमानः, वास्यमानः, विवसिष्यमाणः, वावस्यमानः ;
ईषद्वसः-दुर्वसः-सुवसः ; — — —
वासः, आवासः, [5]कृत्तिवासाः, वासः, विवसिषः, वावसः ;
वसितुम्, वासयितुम्, विवसिषितुम्, वावसितुम् ;
वस्तिः, [6]वसा, वासना, विवसिषा, वावसा ;
वसनम्, वासनम्, विवसिषणम्, वावसनम् ;
वसित्वा, वासयित्वा, विवसिषित्वा, वावसित्वा ;
प्रवस्य, प्रवास्य, प्रविवसिष्य, प्रवावस्य ;
वासम् २, वसित्वा २, } वासम् २ वासयित्वा २ } विवसिषम् २ विवसिषित्वा २ } वावसम् २ ; वावसित्वा २ ; }

---

1. चर्म वस्ते इति **चर्मवः** इति क्विप्प्रत्यये रूपमेवम् । 'अत्वसन्तस्य चाधातोः' (6-4-14) इत्यत्र **काशिकायां** प्रत्युदाहरणत्वेन प्रदर्शितम् ।
2. पचाद्यजन्तात स्त्रियां टाप् । **वसा**=शरीरान्तर्गतस्नेहद्रव्यम् ।
3. वस्ते आच्छादयति इत्यर्थे 'अनुदात्तेतश्च—' (3-2-149) इति युचि रूपमेवम् ।
4. 'तृन्' (3-2-135) इति तच्छीलादिषु कर्तृषु तृन्प्रत्यये रूपम् । '**वसिता** वस्त्रमित्येवं साधुकारिणि कर्तरि ॥' इति 'तृन्' सूत्रे **प्रक्रियासर्वस्व**श्लोकः ।
5. औणादिकेऽसुन्प्रत्यये **वास**श्शब्दः । कृत्तिर्वासोऽस्येति 'अत्वसन्तस्य—' (6-4-14) इति असंबुद्धौ सौ परतः दीर्घो भवति । तेन रूपमेवम् ।
6. भिदादिपाठात् (3-3-104) अङ्प्रत्ययः ।

A, 'पिशङ्गमौञ्जीयुजमर्जुनच्छविं **वसान**मेणाजिनमञ्जनद्युति ।' शि. व. 1-6

[1]वसु, [2]वस्नम्, [3]संवत्सरः, [4]वस्त्रम्.[A]

(1578) " **वस स्नेहच्छेदापहरणेषु** "

(X-चुरादिः-1745. सक. सेट्. उभ.)

'वस्यति स्तम्भने वस्ते छादने वसयेत् वसेत् ॥
निवासे वासयेत् **स्नेह वासयत्युपसेवने** ।' (श्लो. 187-8) इति **देवः** ।
'— .... **उपहरणेषु** इति वा पाठः' इति **धा. का.** (3-41) ।
'— .... **अवहरणेषु**' इति **कातन्त्रशाकटायनहेमचन्द्रादयः** ।
'— .... **अवहननेषु** इति पाठान्तरम्' इति **क्षीरतरङ्गिण्याम्** ।
वासकः-सिका, विवासयिषकः-षिका, वासयिता-त्री, विवासयिषिता-त्री ;
वासयन्-न्ती, विवासयिषन्-न्ती ; वासयिष्यन्-न्ती-ती, विवासयिषिष्यन्-न्ती-ती ;
इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**चाटयति**वत् (488) ऊह्यानि । भिदादि-(3-3-104) पाठात् अङि-वसा इति रूपमिति विशेषः ।

(1579) " **वस निवासे** " (X-चुरादिः-1942. अक. सेट्. उभ.)

**कथादिः, अदन्तश्च** ।

'वस्यति स्तम्भने, वस्ते छादने **वसयेत्** वसेत् ॥
**निवासे** वासयेत्, स्नेहे वासयत्युपसेवने ।' (श्लो. 187-8) इति **देवः** ।
**क्षीरस्वामिचन्द्रजैनकातन्त्रकाशकृत्स्नादयः** धातुमसुं नाभ्युपगच्छन्ति । अपि तु 'वस स्नेहनच्छेदावहरणेषु' इति पठित्वा अवहरणे=वर्तने इति

1. 'शृस्वृस्निहित्रप्यसि**वसि**—' (द. उ. 1-95) इति उप्रत्यये रूपमेवम् । वस्ते भाग्यवतो जनानिति **वसु**=धनम् ।
2. औणादिके [द. उ. 5-39] नप्रत्यये रूपम् । वस्तेऽनेनेति **वस्नम्**=वासः ।
3. संपूर्वात् **वस**धातोः औणादिकः [द. उ. 8-52] सरन्प्रत्ययः । **संवत्सरः**=क्षण-लवमुहूर्ताहोरात्रपक्षमासायनानि च इत्यर्थः । एवं **परिवत्सरः, विवत्सरः, इद्वत्सरः, इडावत्सरः, उद्वत्सरः** इत्यादिषु बोध्यम् । वस्त्रेण समाच्छादयति इत्यर्थे संवस्त्रयन् इत्यत्र 'मुण्डमिश्र—' (3-1-21) इत्यादिना णिच् । 'वस्त्रात्स-माच्छादने' इति **काशिकावृत्तिः** ।
4. औणादिके [द. उ. 8-79] ष्ट्रन्प्रत्यये **वस्त्र**मिति रूपम् । वस्ते शरीरमिति वस्त्रम् ।

A. 'वैतानवेदिजनितं पवमानबन्धुं **वस्त्रेण** बद्धुमविनीत कथं यतेथाः ॥' चम्पूरामायणे 5-48



**काशकृत्स्नः** । **कातन्त्रा**स्तु '—छेदावहननेषु' इति ।
वसकः-सिका, विवसयिषकः-षिका ; वसयिता-त्री, विवसयिषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कलयति**वत् (176) ज्ञेयानि ।
क्तप्रत्यये निवसितम्[A] इति ।

(1580) " **वसु स्तम्भे** " (IV-दिवादिः-1214. अक. सेट्. पर.) [अ]

'**वस्यति स्तम्भने** वस्ते छादने वसयेद् वसेत् ॥' (श्लो. 187) इति **देवः** ।
वासकः-सिका, वासकः-सिका, विवसिषकः-षिका, वावसकः-सिका ;
वसिता-त्री, वासयिता-त्री, विवसिषिता-त्री, वावसिता-त्री ;
वस्यन्-न्ती, वासयन्-न्ती, विवसिषन्-न्ती ; —
वसिष्यन्-न्ती-ती, वासयिष्यन्-न्ती-ती, विवसिषिष्यन्-न्ती-ती ; —
— वासयमानः, वासयिष्यमाणः, — वावस्यमानः, वावसिष्यमाणः ;
इत्यादिकानि रूपाणि सर्वाण्यपि प्रातिस्विकरूपाणि विना भौवादिक**ग्रसति**वत् (440) ऊह्यानि ।

(1581) " **वस्क गत्यर्थः** " (I-भ्वादिः-101. सक. सेट्. आत्म.)

वस्ककः-स्किका, वस्ककः-स्किका, विवस्किषकः-षिका, वावस्ककः-स्किका ;
वस्किता-त्री, वस्कयिता-त्री, विवस्किषिता-त्री, वावस्किता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**गल्भति**वत् (389) ज्ञेयानि ।
क्विपि-वक्-वग्-वस्कौ-वस्कः ; इति विशेषः ।

(1581-A) " **वस्त अर्दने** " (X-चुरादिः-1683. सक. सेट्. आत्म.)

**मैत्रेय-क्षीरस्वामि-माधव-दीक्षिताः** 'बस्त' इत्येव पठन्ति । '**अर्दने** प्रेरणे' इति **काशकृत्स्नः** । **केचित्** 'वस्त' इति पठन्ति । **धातुकाव्यव्याख्याने** (3-34) **काशकृत्स्नीये**ऽपि च **वस्त** इति पाठ आदृतः ।

A. '......सदोनि**वसितं** हरिं ययुरतूत्थिताङ्गाः क्रुधा ।' धा. का. 3-64

[अ] अयं दन्त्योष्ठ्यादिः इति **आत्रेयदेवपुरुषकारकारादयः** । **केचित्** बकारादिं पठन्ति । 'घसिस्तु सान्तेषु **वसिः** प्रसारिणी ॥' (**व्याघ्रभूतिकारिका** 7-2-10) इत्यत्र बशादिरेव (बकारादिः) **बसिः** इति **काशिकायामुपात्त** इति **धातुवृत्तिः** । परं तु साम्प्रतं **वृत्तौ** '**वसिः**' इति दन्त्योष्ठ्यादिपाठ एवोपलभ्यते । **बस्त**शब्दस्तु बशादित्व एव उपपन्नो भवतीत्यवधेयम् ।

वस्तकः-स्तिका, वस्तकः-स्तिका, विवस्तिषकः-षिका, वावस्तकः-स्तिका ;
वस्तिता-त्री, वस्तयिता-त्री, विवस्तिषिता-त्री, वावस्तिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**गर्जयति**वत् (378) बोध्यानि ।

## (1582) " वह प्रापणे "

(I-भ्वादिः-1004. द्विकर्म. अनि. उभ.) **यजादिः** ।

'**प्रापणे**=धारणे' इति **काशकृत्स्नः** ।

वाहकः-हिका, वाहकः-हिका, [1]विवक्षकः-क्षिका, वावहकः-हिका ;
[2]वोढा-ढ्री, [निर्वहिता], वाहयिता-त्री, विवक्षिता-त्री, वावहिता-त्री ;
परिवहन्-उद्वहन्[A]-न्ती, प्रणिवहन्, प्रवहन्-न्ती, [3]व्यतिवहन्-न्ती, [4]वाहयन्
भारं देवदत्तेन, वाहयन् यवान् बलीवर्दान्, विवक्षन्-न्ती ; —
वक्ष्यन्-न्ती-ती, वाहयिष्यन्-न्ती-ती, विवक्षिष्यन्-न्ती-ती ; —
वहमानः[B], वाहयमानः, विवक्षमाणः, वावह्यमानः ;
वक्ष्यमाणः, वाहयिष्यमाणः, विवक्षिष्यमाणः, वावहिष्यमाणः ;

---

1. धातोरनिट्त्वात् सन्नन्ते, 'हो ढः' (8-2-31) इति धातुहकारस्य ढत्वे, 'षढोः कः सि' (8-2-41) इति ककारे 'आदेशप्रत्यययोः' (8-3-59) इति षत्वे च रूपं बोध्यम् ।
2. तृचि, '**सहिवहोरोद्** अवर्णस्य' (6-3-112) इत्युपधाकारस्य ओकारे ढत्वष्टुत्वढलोपदीर्घेषु रूपमेवम् । एवं तव्यदादिष्वपि ज्ञेयम् । 'आकाशो ह वै नामरूपयो-**र्निर्वहिता**—' (छान्दोग्ये 8-14-1) इत्यत्र तु छान्दसत्वात् न ओकार उपधायाः । प्रत्ययस्येडागमोऽपि छान्दसत्वादेव । स्पष्टमिदमु**पनिषद्भाष्येषु** ।
3. " 'वि' 'अति' इत्युपसर्गद्वयपूर्वकात् **वह**धातोः 'कर्तरि कर्मव्यतिहारे' (1-3-14) इत्यात्मनेपदे प्राप्ते 'न गतिहिंसार्थेभ्यः' (1-3-15) इति निषेधे **व्यतिवहन्** इति रूपं सिद्ध्यति । **आचार्यचरणैः** '**वहेर्न** निषेध इति **केचित्**' इत्युक्तत्वात् तन्मते **व्यतिवहते** इत्युदाहृतम् " इति **प्रक्रियाकौमुदी** ।
4. '**नीवह्योः** प्रतिषेधः' (वा. 1-4-52) इति अण्यन्तावस्थायां कर्तुः ण्यन्ते कर्मत्वस्य प्रतिषेधात् रूपमेवम् । '**वहेः** अनियन्तृकर्तृकस्य' (वा. 1-4-52) इति कर्मत्वस्य प्रतिप्रसवसद्भावात, अत्र च नियन्तृ=(सारथि) कर्तृकत्वात् कर्मत्वं भवत्येव ।

A. 'लाङ्गूलमुद्धतं धुन्वन् **उद्वहन्** परिघं गुरुम् ।' भ. का. 9.7.

B. 'सहैव चरमाणौ द्वौ **वहमानौ** मितं धनुः'। अत्र वयोवचने चानश् इति **प्रक्रियासर्वस्वे** ।



[1]विश्वोट्, [2]अनड्वान्-अनड्वाहौ-अनड्वाहः ; — —
[3]ऊढम्-[4]कल्पनापोढः-[5]प्रौढः-ऊढवान्, वाहितः, विवक्षितः, वावहितः-तवान् ;
[6]वहः-वहनः-वाहः, [7]कूलमुद्वहः[A], वहः, [8]भारवाही, [9]प्रवाहणः ; [10]ऋषीवहः,
कपीवहः, मुनीवहः, [11]वावहिः, वाहः, विवक्षुः, वावहः ;
प्रणिवोढव्यम्, वाहयितव्यम्, विवक्षितव्यम्, वावहितव्यम् ;
[12]प्रणिवहनीयम्, वाहनीयम्, विवक्षणीयम्, वावहनीयम् ;

---

1. विश्वं वहतीत्यर्थे क्विपि सम्प्रसारणपूर्वरूपगुणढत्वादिकेषु रूपमेवम् ।
2. अनः वहतीत्यर्थे 'अनसि **वहेः**' इति क्विपि, 'डश्चानसः' (द्रष्टव्या द. उः 9-107) इति अनश्शब्दान्त्यवर्णस्य उकारे रूपमेवम् । '**सावनडुहः**' (7-1-82) इति नुम् ।
3. क्तप्रत्यये सम्प्रसारणढत्वष्टुत्वढलोपदीर्घादिषु रूपमेवम् । एवं क्त्वाक्तिन्प्रभृतिष्वपि ।
4. कल्पनायाः अपोढः इति वृत्तौ 'अपे**तापोढ**—' (2-1-38) इति क्तान्तेन पञ्चमीसमासः ।
5. '**प्रादूहोढोढ्येषै**ष्येषु' (वा. 6-1-89) इति वृद्धिः । एवं **प्रौढिः** इति क्तिन्नन्तेऽपि ज्ञेयम् ।
6. **वह** इत्यत्र पचाद्यच् । **वहनः** इति तु सारथ्यादिवाचकं पदं 'कृत्यल्युटो बहुलम्' (3-3-113) इति बहुलग्रहणात् कर्तरि ल्युटि बोध्यम् ।
7. कूलं उद्वहतीति वृत्तौ उत्पूर्वात् **वहेः** 'उदि कूले रुजि**वहोः**' (3-2-31) इति खश् । खित्त्वात् नुम् । शित्त्वात् शपि तस्य 'अतो गुणे' (6-1-97) इति पररूपम् ।
8. भारं वहतीति **भारवाही** । णिनिप्रत्ययान्तमिदम् ।
9. प्रपूर्वकात् ण्यन्तात् **वाहयतेः** नन्द्यादित्वात् कर्तरि ल्युः । 'कृत्यचः' (8-4-29) इति णत्वम्, इति **केचित्** । वस्तुतस्तु 'णेर्विभाषा' (8-4-30) इति प्राप्तं पाक्षिकं णत्वं बाधित्वाऽत्र संज्ञात्वात् 'पूर्वपदात् संज्ञायां—' (8-4-3) इति नित्यं णत्वमिति बोध्यम् ।
10. 'इको **वहे**ऽपीलोः' (6-3-121) इति इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य **वहे** उत्तरपदे दीर्घो भवति ।
11. 'सासहि**वावहि**'—(वा. 3-2-171) इति निपातनात् यङन्तात् कर्तरि किः किन् वा प्रत्ययः । द्वित्वादिकं बोध्यम् ।
12. 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपति**वहति**—' (8-4-17) इत्यादिना उपसर्गस्थात् निमित्तादुत्तरस्य **नेः** णत्वं बोध्यम् ।

A. 'उत्तीर्णां वा कथं भीमाः सरितः **कूलमुद्वहाः** ।' भ. का. 6-96.

[1]वह्यम्[A] [शकटम्], वाह्यम्, वाह्यम्, विवक्ष्यम्, वावह्यम्;
उह्यमानः, वाह्यमानः, विवक्ष्यमाणः, वावह्यमानः;
ईषद्वहः-दुर्वहः-सुवहः; — — —
[2]वहः, वाहः, परिवाहः-परीवाहः, वाहः, विवक्षः, वावहः;
प्रणिवोढुम्[B], वाहयितुम्, विवक्षितुम्, वावहितुम्;
[3]प्रौढिः, वहा, वाहना, विवक्षा, वावहा;
वहनम्, [4]इक्षुवाहणम्, वाहनम्, दाक्षिवाहनम्-इन्द्रवाहनम्, भारवाहणम्[C], विवक्षणम्, वावहनम्;
ऊढ्वा, वाहयित्वा, विवक्षित्वा, वावहित्वा;
प्रवह्य, प्रवाह्य, प्रविवक्ष्य, प्रवावह्य;
[5]पुरुषवाहं (वहति),
वाहम् २ } वाहम् २, } विवक्षम् २, } वावहम् २; }
ऊढ्वा २ } वाहयित्वा २, } विवक्षित्वा २, } वावहित्वा २; }
[6]वह्निः, [7]वधूः.

---

1. वहत्यनेनेति करणार्थे शकटादिके विवक्षिते '**वह्यं** करणम्' (3-1-102) इति निपातनात् यत्प्रत्ययान्तता। ण्यतोऽपवादः। करणभिन्नयोः भावकर्मणोरर्थयोः विवक्षितयोस्तु **वाह्यम्** इति ण्यदन्तत्वमेव।
2. वहन्त्यनेन बलीवर्दादयः भारमिति **वहः**=स्कन्धः। करणे 'गोचरसञ्चरवह—' (3-3-119) इति घप्रत्ययान्तो निपातितः। हलन्तलक्षणघञोऽपवादः। **वाहः** अश्वः। अत्र तु वहतीति **वाहः** इति वा, उह्यतेऽनेनेति वा वृत्तिर्बोध्या।
3. **प्रौढिरित्यत्र** 'प्रादूहोढोढ्येषैष्येषु' (वा. 6-1-89) इति वृद्धिः। इयं च क्तिन्नन्त एव; क्तिजन्ते नेत्याहुः।
4. अत्र '**वाहनम्** आहितात्' (8-4-8) इति णत्वम्। वाहने यत् आरोपितं तत् आहितम्; उपरि निपतितेक्षुकं वाहनमित्यर्थः। **दाक्षिवाहनम् इन्द्रवाहनम्** इत्यादिषु तु आहितार्थकत्वाभावात् न णत्वम्।
5. 'कर्त्रोर्जीव**पुरुषयो**र्नशि**वहोः**' (3-4-43) इति कर्तृवाचिनि पुरुषशब्दे उपपदे **वहेः** णमुल्। पुरुषप्रेष्यो भूत्वा वहतीत्यर्थः।
6. '**वहि**श्रि—' (द. उ. 1-21) इति निप्रत्ययः। वहति, उह्यते वा **वह्निः**=अग्निः।
7. '**वहे**र्धश्च' (द. उ. 1-166) इति ऊप्रत्ययः, धात्वन्तस्य धकारादेशश्च। वहति गृहकार्यमिति **वधूः**=स्नुषा।

A. 'तेन **वह्येन** हन्तासि त्वमर्यं पुरुषाशिनम्।' भ. का. 6-52
B. 'वृद्धौ रसां राज्यधुरां **प्रवोढुं** कथं कनीयानहमुत्सहेय।' भ. का. 3.54
C. 'दूरादपावर्तित**भारवाहणाः** पथोऽपसस्रुस्त्वरितं चमूचराः॥' शि. व. 12.34



(1583) "**वहि वृद्धौ**" (I-भ्वादिः-633. अक. सेट्. आत्म.) [अ]
वंहकः-हिका, वंहकः-हिका, विवंहिषकः-षिका, वावंहकः-हिका;
वंहिता-त्री, वंहयिता-त्री, विवंहिषिता-त्री, वावंहिता-त्री;
वंहन्-न्ती, वंहयन्-न्ती, विवंहिषन्-न्ती; —
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कण्ठति**वत् (149) ज्ञेयानि। युचि-वंहनः इति।

(1584) "**वा गतिगन्धनयोः**" (II-अदादिः-1050. सक. अनि. पर.)

'**गतिगन्धनयोर्वाति** वायतीति तु शोषणे।
वयते वयतीत्येवं तन्तुसन्तान इष्यते॥' (श्लो. 10) इति **देवः**।

"........**हेमचन्द्र**स्तु '**वा तण्**' इति पठित्वा 'सुखसेवनयोरित्ये**के**' इति चोक्त्वा 'वेत्ये**के**' इत्यप्याह" इति **पुरुषकार**वचनमत्रानुसन्धेयम्। 'अर्दनं हिंसनं च गन्धनम् इति **लीलाशुकः**' इति **धातुकाव्ये** (2-49)। '**गन्धनं**—सौरभ्यकरणम्' इति **सहस्रनामभाष्ये**। '—गमनहिंसयोः' इति **वोपदेवः**। '—**गतिगन्धनयोः**—चलने दुर्गन्धे च' इति **काशकृत्स्नः**।
वायकः-यिका, [1]वाजकः-जिका, वापकः-पिका, विवासकः-सिका, वावायकः-यिका;
वाता-त्री, वापयिता-त्री, वाजयिता-त्री, विवासिता-त्री, वावायिता-त्री;
[A]वान्-न्ती, [2]वापयन्-वाजयन्-न्ती, विवासन्-न्ती; —
वास्यन्-न्ती-ती, वापयिष्यन्-वाजयिष्यन्-न्ती-ती, विवासिष्यन्-न्ती-ती; —
[3]व्यतिवानः, वापयमानः, वाजयमानः, — वावायमानः;
—वापयिष्यमाणः-वाजयिष्यमाणः, — वावायिष्यमाणः;

---

1. ण्यन्तात् ण्वुलि '**वो** विधूनने जुक्' (7-3-38) इति विधूननेऽर्थे कम्पनार्थे णौ परतः जुगागमो भवति। विधूननभिन्नार्थे तु आदन्तलक्षणे पुगागमे **आवापकः** इत्यादीनि रूपाणि। ण्यन्ते सर्वत्र रूपद्वयमेवमूह्यम्।
2. 'निगरण**चलनार्थे**भ्यश्च' (1-3-87) इति कर्त्रभिप्रायक्रियाफलविवक्षायां ण्यन्ते परस्मैपदमेव भवति।
3. 'कर्तरि कर्मव्यतिहारे' (1-3-14) इति तङ्।

A. 'आघ्रायि **वान्** गन्धवहः सुगन्धस्तेनारविन्दव्यतिषङ्गवांश्च॥' भ. का. 2-10
[अ] **सिद्धान्तकौमुद्यां [बालमनोरमायाम्]** एव उद्धृतोऽयं धातुः। **अन्ये सर्वे** '**बहि**' इत्येव पठन्ति। **धातुकाव्यव्याख्याया**मपि (1-89) एवमेव।

वातम्-तः, [1]निर्वाणः [अग्निः, भिक्षुर्वा], निर्वातो [वातः], वापितः, वाजितः, विवासितः, वावायितः-तवान्;

वातः, [2]वानः, वापः, वाजः, वातूलः,[A] विवासुः, वावायः;

[3]प्रणिवातव्यम्, वापयितव्यम्-वाजयितव्यम्, विवासितव्यम्, वावायितव्यम्;

वानीयम्, वापनीयम्-वाजनीयम्, विवासनीयम्, वावायनीयम्;

वेयम्, वाप्यम्-वाज्यम्, विवास्यम्, वावास्यम्;

[4]ईषद्वानः-दुर्वानः-सुवानः; — —

वायमानः, वाप्यमानः-वाज्यमानः, विवास्यमानः, वावाय्यमानः;

वायः, वापः-वाजः, विवासः, वावायः;

वातुम्, वापयितुम्-वाजयितुम्, विवासितुम्, वावायितुम्;

वातिः, वापना-वाजना, विवासा, वावाया;

वानम्, वापनम्-वाजनम्, विवासनम्, वावायनम्;

वात्वा, वापयित्वा-वाजयित्वा, विवासित्वा, वावायित्वा;

प्रवाय, प्रवाप्य-प्रवाज्य, प्रविवास्य, प्रवावाय्य;

वायम् २, } वापम् २-वाजम् २, } विवासम् २, } वावायम् २; }
वात्वा २, } वापयित्वा २-वाजयित्वा २, } विवासित्वा २, } वावायित्वा २; }

[5]वातिः, वातिकम्, वातकी, वात्या[B], [6]वायुः, [7]वातः, [8]वामः.

---

1. निष्ठायाम् '**निर्वाणोऽवाते**' (8-2-50) इति अवाताधिकरणत्वे निष्ठातकारस्य नकारादेशे, णत्वे च रूपमेवम्। वातार्थे तु **निर्वातो**=वायुः इति।
2. 'चलनशब्दार्थात्—' (3-2-148) इति युच्प्रत्ययः।
3. '**नेर्गदनदपतपदघुमास्यतिहन्तियातिवाति—**' (8-4-17) इति उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य णकारादेशो भवति।
4. ईषदाद्युपपदेषु खलपवादे आदन्तलक्षणे युच्प्रत्यये रूपमेवम्।
5. '**वातेर्नित्**' (द. उ. 1-78) इत्यतिप्रत्यये नित्संज्ञके च रूपमेवम्। वातीति **वातिः**=गन्धमिश्रपवनः।
6. '**कृवापा—**' (द. उ. 1-86) इत्यादिना उण्प्रत्ययः। वाति वायति वा द्रव्याणि इति **वायुः**।
7. औणादिके (द. उ. 6-7) तन्प्रत्यये रूपमेवम्।
8. औणादिके (द. उ. 7-26) मन्प्रत्यये **वामः** इति रूपम्।

A. '**वातूल** इव तूलानां वानराणां रणाजिरे।' च. रा. 6-72

B. 'मरुत्किमद्यापि न तासु शिक्षते वितत्य **वात्या**भयचक्रचङ्क्रमान्॥' नैषधे 1-73



## (1585) "वा गतिसुखसेवनयोः" (X-चुरादिः-1885. सक. सेट्. उभ.)

'**वात** सुखसेवनयोः' इति **धातुवृत्तिबालमनोरमादिषु** दृश्यते। 'सुखासिगतिसेवासु' इति **वोपदेवः**। '**वात** गतिसुखसेचनयोः — गतौ सुखसमाप्तौ' इति **काशकृत्स्नः**।

वापकः-पिका, विवापयिषकः-षिका, वापयिता-त्री, विवापयिषिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कालयति**वत् (175) ज्ञेयानि। आदन्तत्वात् ण्यन्ते सर्वत्रास्य युगागमघटितरूपाणीति ज्ञेयम्।

## (1586) "वाक्षि काङ्क्षायाम्" (I-भ्वादिः-668. सक. सेट्. पर.)

वाङ्क्षकः-वाङ्क्षिका, वाङ्क्षकः-वाङ्क्षिका; विवाङ्क्षिषकः-षिका, वावाङ्क्षकः-वावाङ्क्षिका;

वाङ्क्षिता-त्री, वाङ्क्षयिता-त्री, विवाङ्क्षिषिता-त्री, वावाङ्क्षिता-त्री; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**काङ्क्षति**वत् (184) ऊह्यानि।

## (1587) "वाछि इच्छायाम्" (I-भ्वादिः-208. सक. सेट्. पर.)

'— **कामे**' इति **वोपदेवः**।

वाञ्छकः-ञ्छिका, वाञ्छकः-ञ्छिका, विवाञ्छिषकः-षिका, वावाञ्छकः-ञ्छिका; वाञ्छिता-त्री, वाञ्छयिता-त्री, विवाञ्छिषिता-त्री, वावाञ्छिता-त्री; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**काञ्छति**वत् (184) ज्ञेयानि। क्तप्रत्यये [A]वाञ्छितम्-तः, क्विपि-नाशवान्-नाशवांशौ-नाशवांशः[B], इति च विशेषः।

"कथादौ **क्षीरस्वामी**—'वा गतिसुखसेवनयोः'। **वानेत्येके**। वापयति अववातत्" इति। **हेमचन्द्रस्तु** 'वातण्' इति पठित्वा 'सुखसेवनयोरित्येके' इति चोक्त्वा 'वा इत्येके' इत्यप्याह; णित्त्वं चुरादित्वचिह्नम्॥" इति **पुरुषकार**वचनमत्रानुसन्धेयम्।

## (1588) "वाडृ आप्लाव्ये" (I-भ्वादिः-286. सक. सेट्. आत्म.)

'**आप्लाव्यम्**=आप्लवनम्। **सि. कौमुदीबालमनोरमादिषु** 'वाडृ—'

---

A. 'यत्र स्थिते **वाञ्छितदे** हरिद्रुमे तदाञ्छितह्रीच्छनमास्त नन्दनम्॥' धा. का. 1-23

B. 'सुहृन्मनोजूर्तिकृतस्तथाऽपि तस्मान्मदीयान्वय**नाशवांशः**।' वा. वि. 3-28.

इत्येव पठ्यते, बशादिः इति च। **धातुवृत्तितरङ्गिण्यादिषु** 'वाडृ—' इति दृश्यते। 'वलेरित्येके' इत्यपि **क्षीरस्वामी** ।

वाडकः - डिका, वाडकः - डिका, विवाडिषकः - षिका, वावाडकः - डिका ; वाडिता - त्री, वाडयिता - त्री, विवाडिषिता - त्री, वावाडिता - त्री ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**गाधति**वत् (394) ज्ञेयानि। [1]वाडः - वालः, इति।

## (1589) "वात सुखसेवनयोः"

(X-चुरादिः - 1883. सक. सेट्. उभ.) **कथादिः, अदन्तश्च** ।

'—**गतिसुखसेवनयोः**' इति क्षीरस्वामी। '—**गतिसुखसेवनेषु**' इत्येके।
'— गतिसुखसेचनयोः' इति **काशकृत्स्नः** ।

[2]वातकः - तिका, विवातयिषकः-षिका ; वातयिता - त्री, विवातयिषिता - त्री ;
इत्यादीनि रूपाणि सर्वाणि चौरादिक**कालयति**वत् (185) ऊह्यानि।

## (1590) "वावृतु वरणे" (IV-दिवादिः-1160. सक. सेट्. आत्म.)

वरणम् = आवरणम्।

'**वृतु** वरणे' इति **धातुवृत्ति-धातुकाव्य-सि. कौमुदी-काशकृत्स्नादयः**। **सि. कौमुद्यां** 'वृतु—' इति पठित्वा पक्षान्तरे-वावृत्यते इति। 'वृतु—' इति **धा. का. व्याख्या** (2.60) पाठः। किञ्च तत्र "**केचित्** पूर्वत्र पठितं वाग्रहणमस्यादिं कृत्वा '**वावृतु**—' इत्याहुः' इत्युपात्तम्। कर्मणि क्तप्रत्यये पक्षद्वयेऽपि प्रयोगा दृश्यन्ते। **क्षीरस्वामी** स्वतन्त्रेण 'वावृतु' इति पठित्वा "**अन्ये** भ्वादेरेव वरणे दिवादित्वं वा मन्यन्ते। तेन वरणे द्युतादिकार्यं न भवति। वर्तिष्यते, विवर्तिषते" इति उक्तम्। किं च भ्वादौ 'वृतु वरणे' (दिवादौ) इत्येके' इति तत्र दृश्यते।

**कातन्त्रीयाः** 'तप ऐश्वर्ये, वावृतु वर्तने' इति पठन्ति। ये वा-शब्दं 'तप ऐश्वर्ये वा' इत्येवं संबध्नन्ति, **काशकृत्स्न**पाठानुरोधेन तेषां 'वा' पदं समुच्चायकं भवितुमर्हति, न विकल्पार्थकम्' इति **काशकृत्स्ने टिप्पण्या-मुक्तम्** ।

---

1. पचाद्यचि रूपमेवम्। **वाडः**=अश्वः। डलयोरेकत्वस्मरणमत्र विवक्षितम्।
2. '—सुखसेवनयोः' इति **धातुप्रदीपधातुवृत्तिबालमनोरमादिषु** ।



'ततो **वावृत्यमाना**ऽसौ रामशालां न्यविक्षत।' इति **भट्टि** (4-28) प्रयोगश्चात्र अनुकूलः। '—**वर्तने च**' इति **हेमचन्द्रः**। '—**संभक्तौ वरणे**' इति **वोपदेवः** ।

वावर्तकः-र्तिका, वावर्तकः-र्तिका, विवावर्तिषकः-षिका, वरीवावर्तकः-र्तिका ;
वावर्तिता-त्री, वावर्तयिता-त्री, विवावर्तिषिता-त्री, वरीवावर्तिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि दैवादिक**गृध्यति**वत् (424) ज्ञेयानि। शानचि [1]वावृत्यमानः, क्यपि-[2]वावृत्यम्, वावर्तितम् इमानि रूपाणि अस्य धातोः विशेषः।

## (1592) "वाश्रृ शब्दे" (IV-दिवादिः-1163. अक. सेट्. आत्म.) [अ]

'वास्—' इति **काशकृत्स्नः**। 'वाशृ—' इति **कातन्त्राः, अन्ये च वैयाकरणाः** ।

वाशकः-शिका, वाशकः-शिका, विवाशिषकः-षिका, वावाशकः-शिका ;
वाशिता-त्री, वाशयिता-त्री, विवाशिषिता-त्री, वावाशिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**काशति**वत् (186) ऊह्यानि।
शानचि-[3]उद्वाश्यमानः[A], [4]वाशनः[B], वाशा, वाशिका, वाशिरा, [5]वाशुरा, [6]वाशरः, इमानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम्।

---

1. '**रीगृदुपधस्य च**' (7-4-80) इति यङन्ते सर्वत्र अभ्यासे रीगागमः।
2. '**ऋदुपधात्**—' (3-1-110) इत्यादिना क्यप्प्रत्यये रूपमेवम्।
3. उत्पूर्वकात् धातोः, लटः शानचि कर्तरि शपि, तस्य श्यनि च रूपमेवम्।
4. नन्यादेः (3-1-134) आकृतिगणत्वात् ण्यन्तात् ल्युः प्रत्ययः।
5. 'मन्दि**वाशि**—' (द. उ. 8-21) इत्यादिना उरच्प्रत्यये रूपमेवम्। वाश्यतेऽत्यर्थमिति **वाशुरः**—गर्दभः। 'मन्दि**वासि**—' इति **नारायणश्वेत-वनवासिनौ**। अत्र **धातुवृत्तौ** 'मन्दि**वाशि**—' इत्यादिना किरच्प्रत्यये **वाशिरः** इति दृश्यते। **वृत्त्यादावपि वाशुरा** इत्येवोदाह्रियते। **तरङ्गिण्या-मपि** एवमेव।
6. 'अर्त्तिकमिभ्रमिदेवि**वाशि**—' (द. उ. 8-62) इत्यादिना अरन्प्रत्यये रूपमेवम्। **वाशरः**=कोकिलः। अत्राह **मनोरमाकारः**— '**केचित्तु** सूत्रे **वाशिभ्य** इति तालव्यं पठित्वा '**वाशृ** शब्दे' वाश्यते इति **वाशरः**=कोकिलः इत्याहुः' इति।

[अ] '...**वाशति**...' (ऋक् 5-54-2) इति प्रयोगदर्शनात् भौवादिकोऽपि अयं धातुः इति ऊह्यते। 'चीचीकूचीति **वाशन्ति** सारिकाः—' (महाभारते 16-38) इति च।

A. '**उद्वाश्यमानः** पितरं सरामं लुठयन् सशोको भुवि रोरुदावान्॥' भ. का. 3-32
B. 'भृङ्गालीकोकिलकुहूभि**र्वाशनैः** पश्य लक्ष्मण।' भ. का. 6-74

(1593) **" वास उपसेवायाम् "**

(X-चुरादिः-1885. सक. सेट्. उभ.) **अदन्तः ।**

'— **गतिसुखसेवनयोः** ' इति **जैन-कातन्त्रौ ।**

' अयं **कथादा**वपि इति **दैवपुरुषकारयोः** ' इति **माधवः ।**

वासकः-सिका, विवासयिषकः-षिका ; वासयिता-त्री, विवासयिषिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**कालयति**वत् (185) ऊह्यानि ।

(1593-A) ' बर्ह चर्ह —' इत्यत्र दण्डके **' वाहृ प्रयत्ने '** इति भ्वादौ पठित्वा, ' वाहते वाहति, वाहकः, वाहमानः, वोढा । वाट्, वाहः, वाहनम्, वाहनीयम्, वाहिनी पञ्चनद्याम् सेनायाम् '' इति **काशकृत्स्नधातुपाठे** दृश्यते ।

(1594) **" विचिर् पृथग्भावे "**

(VII-रुधादिः-1442. सक. अनि. उभ.)

अयं पाठः **सर्वसम्मतः । धातुवृत्तौ** तु **' विजिर्—'** इति दृश्यते ।
वेचकः-चिका, वेचकः-चिका, विविक्षकः-क्षिका, वेविचकः-चिका ;
वेक्ता-त्री, वेचयिता-त्री, विविक्षिता-त्री, वेविचिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि प्रातिस्विकरूपाणि विना रौधादिक**रिञ्चति**वत् (1404) ज्ञेयानि । क्तप्रत्यये-विक्तम्[A]-क्तः, घञि-[1]विवेकः, घिनुणि-[2]विवेकी,[3] विविचिः इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1595) **" विछ गतौ "** (VI-तुदादिः-1423. सक. सेट्. पर.)

' णौ विच्छयति भाषार्थे, **गतौ विच्छायतीति** शे ॥
विच्छेराये शतुर्वा **नुं शे स्यादिति तुदादिता ।'**
(श्लो. 56-57) इति **देवः ।**

---

1. निष्ठायामनिट्त्वात् ' चजोः कु घिण्ण्यतोः ' (7-3-52) इति कुत्वे रूपमेवम् ।
2. ' संपृचानुरुध...**विविच—**' (3-2-142) इति तच्छीलादिषु कर्तृषु घिनुण्प्रत्यये कुत्वे च रूपमेवम् । **विवेकी**=युक्तायुक्तविशेषज्ञः ।
3. ' किकिनावुत्सर्गश्छन्दसि **सदादिभ्यो दर्शनात्** ' (वा. 3-2-171) इति वचनेन (सदादिभ्योऽपि सूत्रानुपात्तेभ्यः) भाषायां किप्रत्यये, एत्वाभ्यासलोपयोश्च रूपमेवम् ।

A. ' रम्या इति प्राप्तवतीः पताका रागं **विविक्ता** इति वर्धयन्तीः ।' शि. व. 3-53



**तरङ्गिण्याम्** — " **विच्छेस्तुदादिपाठः**-सार्वधातुकेऽप्यायानित्यत्वे लिङ्गम्.... तथा च शपि नित्यमिति **भाष्यम्** (3-1-31) । **आर्याः** शे विकल्पम् [ नुम् ], **द्रमिडास्तु** पाठबलाद् आयव्यवायेऽपि कार्यमाहुः—विच्छायन्ती-विच्छायती '' इत्युपात्तं वचनमिहात्रानुसन्धेयम् । **भाष्यकारो** यदभिप्रैति तस्यानुकूलः **सुधाकरो**ऽपि । तथा च " तुदादिपाठात् नुम्विकल्पः संभवतीति तुदादिपाठस्येदमेव फलं न्याय्यम् । एवं च नुम्विकल्पात् विच्छन्ती विच्छायतीत्यौत्सर्गिकः शबेवेति नित्यो नुम् '' इति **पुरुषकारः ।**

[1]विच्छायकः-यिका, विच्छकः-च्छिका, [2]विच्छायकः-यिका, विच्छकः-च्छिका, विविच्छायिषकः-षिका, विविच्छिषकः-षिका, वेविच्छकः[3]-च्छिका ;
विच्छायिता-त्री, विच्छिता-त्री, विच्छाययिता-त्री विच्छयिता-त्री, विविच्छायिषिता-त्री, विविच्छिषिता-त्री, वेविच्छिता-त्री ;
[4]विच्छायन्-न्ती-ती, विच्छाययन्, विच्छयन्-न्ती-ती, विविच्छायिषन्-विविच्छिषन्-न्ती-ती ; —
विच्छायिष्यन्-विच्छिष्यन्-न्ती-ती, विच्छाययिष्यन्-विच्छयिष्यन्-न्ती-ती, विविच्छायिषिष्यन्-विविच्छिषिष्यन्-न्ती-ती ; —
— विच्छाययमानः-विच्छायमानः, — विविच्छायिषमाणः, विविच्छिषमाणः, वेविच्छ्यमानः ;
— विच्छाययिष्यमाणः, विच्छायिष्यमाणः, विविच्छायिषिष्यमाणः, विविच्छिषिष्यमाणः, वेविच्छिष्यमाणः ;

---

1. ' गुपूधूपविच्छि—' (3-1-28) इति आयप्रत्ययः । 'आयादय आर्धधातुके वा ' (3-1-31) इति आर्धधातुकविवक्षायाम् आयप्रत्ययो विकल्पेन भवति । तेन आयप्रत्ययाभावपक्षे **विच्छकः** इत्यादि । तेन आर्धधातुके सर्वत्र रूपद्वयं (शुद्धे) ज्ञेयम् । ' छे च ' (6-1-73) इति तुक् । तस्य चर्त्वेन चकारः । अयं तुक् अन्तरङ्गः । तेन सर्वत्र प्रथममस्य श्रवणं भवति । अतश्च शुद्धात् णिजन्तात् च आयप्रत्ययाभावपक्षे उपधावृद्ध्यादिकं न भवतीति बोध्यम् ।
2. ण्यन्तेऽपि आर्धधातुकविषये सर्वत्र आयप्रत्ययविकल्पः । तेन रूपद्वयं बोध्यम् ।
3. आर्धधातुकविवक्षायां आयप्रत्ययस्य वैकल्पिकत्वात् आयप्रत्ययान्तस्य अनेकाच्त्वात् यङन्ते आयप्रत्ययो न भवति । तेन एकमेव रूपम् ।
4. शतुः सार्वधातुकत्वेन नित्यमायप्रत्ययः ।

[1]गोविट्-गोविच्छौ-गोविच्छः ; [2]विच्छाः-विच्छायौ-विच्छायः ;

विच्छायितम्-तः; विच्छितम्-तः, विच्छाययितम्-तः, विच्छायितः, विविच्छायिषितः-विविच्छिषितः, वेविच्छितः-तवान् ;

विच्छायः-विच्छः, [3]विश्नः ; विच्छायः-विच्छः, विविच्छायिषुः-विविच्छिषुः, वेविच्छः ;

विच्छायितव्यम्-विच्छितव्यम् , विच्छाययितव्यम्-विच्छायितव्यम् , विविच्छायिषितव्यम्-विविच्छिषितव्यम् , वेविच्छितव्यम् ;

विच्छायनीयम्-विच्छनीयम् , विच्छायनीयम्-विच्छनीयम् , विविच्छायिषणीयम्--विविच्छिषणीयम् , वेविच्छनीयम् ;

विच्छाय्यम्-विच्छ्यम् , विच्छाय्यम्-विच्छ्यम् ; विविच्छायिष्यम्-विविच्छिष्यम् , वेविच्छ्यम् ;

ईषद्विच्छायः-दुर्विच्छायः-सुविच्छायः, ईषद्विच्छः-दुर्विच्छः-सुविच्छः; — विच्छाय्यमानः-विच्छ्यमानः, विच्छाय्यमानः-विच्छ्यमानः, विविच्छायिष्यमाणः—विविच्छिष्यमाणः, वेविच्छ्यमानः ;

विच्छायः-विच्छः, विच्छायः-विच्छः, विविच्छायिषः-विविच्छिषः, वेविच्छः ;

विच्छायितुम्-विच्छितुम् , विच्छाययितुम्-विच्छयितुम् , विविच्छायिषितुम्-विविच्छिषितुम् , वेविच्छितुम् ;

विच्छाया-विच्छा, विच्छायना-विच्छना, विविच्छायिषा-विविच्छिषा, वेविच्छा ;

विच्छायनम्-विच्छनम् , विच्छायनम्-विच्छनम् , विविच्छायिषणम्-विविच्छिषणम्, वेविच्छनम् ;

विच्छायित्वा-विच्छित्वा, विच्छाययित्वा-विच्छयित्वा, विविच्छायिषित्वा-विविच्छिषित्वा-वेविच्छित्वा ;

प्रविच्छाय-प्रविच्छ्य, प्रविच्छाय्य-प्रविच्छ्य, प्रविविच्छायिष्य-प्रविविच्छिष्य, प्रवेविच्छ्य ;

1. आयप्रत्यया भावपक्षे क्विपि 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति छकारस्य शकारे, षत्वे ष्टुत्वे च रूपमेवम् ।
2. आयप्रत्ययान्तात् क्विपि वलि लोपे रूपमेवम् ।
3. 'यजयाचयतविच्छ—' (3-3-90) इति भावे नङ्प्रत्ययः। 'नेड् वशि कृति' (7-2-8) इतीण्निषेधः। प्रत्ययस्य ङित्त्वेन न गुणः। 'च्छ्वोः—' (6.4.19) इति सतुक्कस्य छस्य शकारः। 'शात्' (8-4-44) इति निषेधात् न श्चुत्वम् ।



विच्छायम् २-विच्छम् २, विच्छायित्वा २-विच्छित्वा २, } विच्छायम् २-विच्छम् २, विच्छाययित्वा २-विच्छयित्वा २, }

विविच्छायिषम् २-विविच्छिषम् २, विविच्छायिषित्वा २-विविच्छिषित्वा २, } वेविच्छम् २ ; वेविच्छित्वा २. }

(1596) "**विच्छ भाषार्थः**" (X-चुरादिः-1774. अक. सेट्. उभ.)

**आस्वदीयः** । '—**भासार्थः**' इति **क्षीरस्वामिशाकटायनहेमचन्द्रादयः** । '**णौ विच्छयति भाषार्थे** गतौ विच्छायतीति शे ॥' (श्लो. 56) इति **देवः** ।

विच्छकः-च्छिका, विविच्छयिषकः-षिका ; विच्छयिता-त्री, विविच्छयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कुण्ठयति**(210)वत् उह्यानि । शतरि-[A]विच्छयन् ।

(1597) "**विजिर् पृथग्भावे**" (III-जुहोत्यादिः-1094. सक. अनि. उभ.)

'**वेवेक्तीति पृथग्भावे** विविक्ते च भये पुनः ॥' (श्लो. 61) इति **देवः** ।

"'**विचिर्-**' इति **सभ्याः**" इति **क्षीरस्वामी** ।

वेजकः-जिका, वेजकः-जिका, विविक्षकः-क्षिका, वेविजकः-जिका ;

वेक्ता-त्री, वेजयिता-त्री, विविक्षिता-त्री, वेविजिता-त्री ;

इत्यादिकानि रूपाणि सर्वाण्यपि जौहोत्यादिक**णिजिर्**(673)धातुवत् बोध्यानि। शतरि-वेविजत्[1] इति । शानचि-सुवेविजानः[B] ।

(1598) "**ओ विजी भयचलनयोः**"

(VI-तुदादिः-1289. अक. सेट्. आत्म.)

प्रायेणायं उत्पूर्वः । '— **उद्वेगे च**' इति **पा. धा. समीक्षा** ।

'वेवेक्तीति पृथग्भावे विविक्ते च **भये पुनः** ॥'

1. शतरि शपः '**जुहोत्यादिभ्यः श्लुः**' (2-4-75) इति श्लौ, तस्य 'श्लौ' (6-1-10) इति द्वित्वे 'निजां त्रयाणां गुणः श्लौ' (7-4-75) इत्यभ्यासस्य गुणे 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधे च रूपमेवम् । एवं **वेविजानः** इत्यत्रापि गुणो ज्ञेयः ।

A. 'तांस्त्वं धूपय **विच्छयन्** क इव न त्वचीवनात् पोथयेत् ॥' धा. का. 3-44.

B. 'प्रणेनिजद्भिर्मतिमर्थतत्त्वं **सुवेविजानै**र्यदुभिः स विष्णुः । ' धा. का. 2-55.

**विनक्ति विजते** ..........................।' (श्लो. 61-62) इति **देवः** ।

उद्वेजकः-जिका, उद्वेजकः-जिका, [1]उद्विविजिषकः-षिका, वेविजकः-जिका ;

[2]उद्विजिता-त्री, उद्वेजयिता-त्री, विविजिषिता-त्री, वेविजिता-त्री ;

[A]उद्वेजयन्-न्ती, उद्वेजयिष्यन्-न्ती-ती ; — —

उद्विजमानः, उद्विजिष्यमाणः ; — —

वेविज्यमानः, वेविजिष्यमाणः ; — —

उद्विक्-उद्विग्-विजौ-विजः ; — —

[3]उद्विग्नम्[B]-नः-नवान्, उद्वेजितः, विविजिषितः-वेविजितः-तवान् ;

उद्वेगः, उद्वेगनः, उद्वेगः, विविजिषुः, वेविजः ;

विजितव्यम्, वेजयितव्यम्, विविजिषितव्यम्, वेविजितव्यम् ;

वेजनीयम्, [4]उद्वेजनीयः, वेजनीयम्, विविजिषणीयम्, वेविजनीयम् ;

[5]उद्वेग्यम्, उद्वेज्यम्, विविजिष्यम्, वेविज्यम् ;

विज्यमानः, वेज्यमानः, विविजिष्यमाणः, वेविज्यमानः ;

ईषद्वेजः-दुर्वेजः-सुवेजः ; — — —

[6]उद्वेगः, [7]वेगितम्, उद्वेगः, उद्विविजिषः, उद्वेविजः ;

---

1. 'रलो व्युपधात्—' (1-2-26) इति सन्नन्तात् क्त्वायामपि पाक्षिककित्त्वस्याप-वादत्वेन '**विज इट्**' (1-2-2) इति सूत्रस्य प्रवृत्तत्वात् इडादेः प्रत्ययस्य सर्वस्यापि नित्यं ङित्त्वमित्यतोऽत्र एकमेव रूपम् । एवं क्त्वायामपीति बोध्यम् ।
2. तृचि, '**विज इट्**' (1-2-2) इति इडादिप्रत्ययस्य ङिद्वद्भावात् गुणो न भवति । एवं तव्यदादिषु च ज्ञेयम् ।
3. निष्ठायाम्, ईदित्त्वात् 'श्वीदितो निष्ठायाम्' (7-2-14) इति अनिट्त्वात् इण्निषेधे ओदित्त्वात् निष्ठातकारस्य नकारे चकारस्य कुत्वे च रूपमेवम् ।
4. 'उद्विजन्ति अस्मादिति **उद्वेजनीयः** खलः, बाहुलकादपादाने अनीयर्' इति **प्रक्रियासर्वस्वम्** ।
5. निष्ठायामनिट्त्वात् 'चजोः —' (7-3-52) इति कुत्वे रूपमेवम् । एवं घञ्यपि ।
6. 'हलश्च' (3-3-121) इति करणे घञ् ।
7. घञन्तात् वेगशब्दात् तारकादित्वात्, इतचि रूपमेवम् ।

A. 'ऋषन् अजुषत क्रमात् नगरगर्भ**मुद्वेजयन्** ..........॥' धा. का. 2. 72.

B. 'तौ मुमुहतु**रुद्विग्नौ** वसुधायां च पेततुः ॥' भ. का. 14-47.



[A]उद्विजितुम्, उद्वेजयितुम्, उद्विविजिषितुम्, उद्वेविजितुम् ;

उद्वेक्तिः, उद्वेजना, विविजिषा, वेविजा ;

उद्वेजनम्, उद्वेजनम्, उद्विविजिषणम्, वेविजनम् ;

[1]विजित्वा, वेजयित्वा, विविजिषित्वा, वेविजित्वा ;

उद्वेज्य, उद्वेज्य, उद्विविजिष्य, उद्वेविज्य ;

वेजम् २, वेजित्वा २, } वेजम् २, वेजयित्वा २, } विविजिषम् २, विविजिषित्वा २, } वेविजम् २; वेविजित्वा २. }

### (1599) "ओ विजी भयचलनयोः"

(VII-रुधादिः-1460. सक. सेट्. पर.)

'वेवेक्तीति पृथग्भावे विवेक्ति च भये पुनः ।

**विनक्ति** विजते..........................।' (श्लो. 61-62) इति **देवः** ।

वेजकः-जिका, वेजकः-जिका, विविजिषकः-षिका, वेविजकः-जिका ;

विजिता-त्री, वेजयिता-त्री, विविजिषिता-त्री, वेविजिता-त्री ;

इत्यादिकानि रूपाणि सर्वाण्यपि अव्यवहितपूर्वलिखिततौदादिकधातुवत् (1598) ज्ञेयानि । शतरि, अस्य धातोः रुधादित्वात् श्नमि 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपे श्चुत्वे च—उद्विञ्जन्-ती इति । ण्यन्तात् तृचि-[B]उद्वेजयिता-त्री, क्त्वायाम्-[2]विजित्वा इति च विशेषः ।

### (1600) "विट शब्दे" (I-भ्वादिः-316. अक. सेट्. पर.)

'**— आक्रोशे स्वप्ने**' इति **वोपदेवः** । अत्र '**पिट**' इति **क्षीरस्वामी** । 'अर्थभेदाद् द्विः पाठः' इति चाह ।

वेटकः-टिका, वेटकः-टिका, विवेटिषकः-विविटिषकः-षिका, वेविटकः-टिका ;

---

1. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधं बाधित्वा '**विज इट्**' (1-2-2) इति नित्यं ङित्त्वम् ।
2. क्त्वाप्रत्यये, 'न क्त्वा सेट्' (1-2-18) इत्यकित्त्वेऽपि '**विज इट्**' (1-2-2) इति ङित्त्वान्न गुणः ।

A. 'नाऽय**मुद्विजितुं** कालः स्वामिकार्याद् भवादृशाम् ।' भ. का. 7-92.

B, 'अत्यर्थ**मुद्वेजयिता** परेषां नाम्नापि तस्यैव स नन्दकोऽभूत् ॥' शि. व, 3-19.

वेटिता-त्री, वेटयिता-त्री, विवेटिषिता-विविटिषिता-त्री, वेविटिता-त्री ; इत्यादि-कानि सर्वाणि रूपाणि भौवादिक**केटति**वत् (190) ऊह्यानि । [1]विटः, [2]विटपः, [3]विडङ्गः इति अस्य धातोः विशेषः ।

(1601) **" विट आक्रोशे "** (I-भ्वादिः-317. अक. सेट्. पर.)

**क्षीरतरङ्गिण्याम्,** 'विट —' इति पठित्वा 'डान्तोऽयमिति (विड) **नन्दी**' इति दृश्यते । **धातुवृत्तौ** '**विट** — **बशा**दिः' इति पठितम् ; तत्र **टिप्पण्यां** 'विट विड इति **मैत्रेयः**' इति च दृश्यते । **भट्टोजिदीक्षितो**ऽपि '**विट** —' इत्येव (बशादिः) पठति । **काशकृत्स्न**स्तु— 'विट शब्दे हास्यशब्दे' इति ।

वेटकः-टिका, वेटकः-टिका, विवेटिषकः-विविटिषकः-षिका-वेविटकः-टिका ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**केटति**वत् (190) ज्ञेयानि । **डान्तपक्षे** विडालः[4] इति । विटः प्रसिद्धः ।

(1602) **" विथृ याचने "** (I-भ्वादिः-33. सक. सेट्. आत्म.)

"'**विधृ**' इति **कौशिकः** । **क्षीरस्वामिना** त्वयं पक्षो दूषितः ।" इति **धातुवृत्ता**वुक्तम् । **सायणो**क्तः पाठस्त्वधुना **तरङ्गिण्यां** नोपलभ्यते ।

वेथकः-थिका, वेथकः-थिका, विवेथिषकः-विविथिषकः-षिका, वेविथकः-थिका ; वेथिता-त्री, वेथयिता-त्री, विवेथिषिता-विविथिषिता-त्री, वेविथिता-त्री ; इत्यादीनि रूपाणि **सर्वाण्यपि** भौवादिक**केटति**वत् (190) ज्ञेयानि । निष्ठायाम्-विथितः-वेथितः **इति ।**

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः ।
2. '**विटप**विष्टप—' (द. उ. 7-12) इति कपन्प्रत्यये निपात्यते इति **धातुवृत्ता**-वुक्तम् । **दशपाद्यां तु** 'विश प्रवेशने' इत्यस्मात् धातुशकारस्य टकारे रूपमिति उक्तम् ।
3. 'विड इति **सौत्रो** धातुः' इति **द. उ. वृत्तिः** । तत्पक्षे 'विडादिभ्यः कित्' [द. उ. 3-61] इति अङ्गच्प्रत्ययः किच्च भवति । तेन रूपमेवम् । **विडङ्गः** द्रव्यजातिः ।
4. "'**विड** इति **सौत्रो** धातुः ण्यन्तः । । औणादिके कालच्प्रत्यये रूपम् ; वेडयति मूषकानिति **विडालः** मार्जारः ।" इति **दशपाद्युणादिवृत्तौ** (8-115) दर्शितम् ।



(1602[A]) **" विद ज्ञाने "** (II-अदादिः-1064. सक. सेट्. पर.)

'**सत्तायां विद्यते, ज्ञाने वेत्ति,** विन्ते विचारणे ।' (श्लो. 111) इति **देवः ।**

'—मतौ' इति **वोपदेवः ।**

आवेदकः-दिका, वेदकः-दिका, [1]विविदिषकः-षिका, वेविदकः-दिका ;
वेदिता-त्री, वेदयिता-त्री, विविदिषिता-त्री, वेविदिता-त्री ;
[2]विदन्-ती, [A]विद्वान्-विदुषी, निवेदयन्[B]-न्ती, वेदयः[3], विविदिषन्-न्ती ; —
वेदिष्यन्-न्ती-ती, वेदयिष्यन्-न्ती-ती, विविदिषिष्यन्-न्ती-ती ; —
[4]संविदानः, वेदयमानः, संविविदिषमाणः, वेविद्यमानः ;
संवेदिष्यमाणः, वेदयिष्यमाणः, संविविदिषिष्यमाणः, वेविदिष्यमाणः ;
[5]मन्त्रवित्, ब्रह्मवित्, शास्त्रवित्, वेदवित्, [C]अनिर्विदा, लोकवित्-प्रवित्-विदौ-विदः ;
[D]विदितम्-तः-तवान्, वेदितः, विविदिषितः, वेविदितः-तवान् ;

---

1. सनि, 'रलो व्युपधात्—' (1-2-26) इत्यादिना कित्त्वविकल्पे प्राप्ते '**रुदविद—**' (1-2-8) इति नित्यं कित्त्वं भवति । तेन सन्नन्ते सर्वत्र एकमेव रूपम् । **क्षीरस्वामी** तु '**रुदविद—**' (1-2-8) इति सूत्रं कित्त्वविकल्पार्थमिति व्याचकार । **भाष्यादिषु** नित्यकित्त्वविधायकत्वेनैव प्रकृतसूत्रस्य व्याख्यानात् **क्षीरस्वामिमतं** चिन्त्यम् ।
2. शतरि, '**विदेः** शतुर्वसुः' (7-1-36) इति सूत्रात् शतुः वस्वादेशविकल्पः । वस्वादेशपक्षे **विद्वान्** इति ; तदभावपक्षे **विदन्** इति च रूपम् । नित्यं वसुरित्या-देश इति **केषाञ्चिन्मतम्** । **काशिकादिषु** तु वैकल्पिकमिति स्पष्टम् ।
3. ण्यन्तात् 'अनुपसर्गाल्लिम्पविन्द—' (3-1-138) इति शप्रत्यये शपि गुणायादेशौ । वेदयतीति **वेदयः** ।
4. '**विदिप्रच्छिस्वरतीनाम्**' (वा.1-3-29) इति संपूर्वकात् **विदेः** आत्मनेपदं भवति ।
5. 'सत्सूद्विषद्रुहयुजविद—' (3-2-61) इति क्विप्प्रत्यये रूपमेवम् ।

A. '**विद्वानु**पानेष्ट च तान् स्वकाले यतिर्वसिष्ठो यमिनां वरिष्ठः ॥' भ. का. 1-15
B. 'स्पष्टं बहिः स्थितवतेऽपि **निवेदयन्तः**......।' शि. व. 5-97
C. '**अनिर्विदा** या विदधे विधाता पृथ्वी पृथिव्याः प्रतियातनेव ॥' शि.व. 3-34.
D. '**विदितं** वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।' कु.सं. 6-26.

विदः, [1]विन्दुः, [2]विदुरः[A], सार्ववेद्यः, चतुर्वेदः, [3]विविदिवान्-विविद्वान्, चतुर्वेदी, [B]पराशयवेदी, धनुर्वेदी, वैदिकः, वेदः, [4]वैदनः [C]विविदिषुः, वेविदः ;
आवेदितव्यम्, वेदयितव्यम्, विविदिषितव्यम्, वेविदितव्यम् ;
आवेदनीयम्, वेदनीयम्, विविदिषणीयम्, वेविदनीयम् ;
वेद्यम्, त्रैविद्यः, वेद्यम्, विविदिष्यम्, वेविद्यम् ;
वेद्यमानः, वेदयमानः, विविदिषमाणः, वेविद्यमानः ;
[5]वेदः, वेदः, विविदिषः, वेविदः ;
वेदितुम्, वेदयितुम्, विविदिषितुम्, वेविदितुम् ;
[6]वित्तिः, विदा, [7]विद्या, अङ्गविद्या, त्रिविद्या, [8]वेदना, विविदिषा, वेविदा ;

---

1. 'विन्दुरिच्छुः' (3-2-169) इति तच्छीलादिषु कर्तृषु उप्रत्यये, निपातनात् नुमागमे च रूपमेवम्। वेदनशीलो **विन्दुः**। पवर्गीयादिस्तु 'बिदि अवयवे' इति धातोः 'मृगय्वादिभ्यः' (द. उणादिः 1-121) इति कौ बोध्यः, इति **बृहच्छब्देन्दुशेखरे**।
2. 'विदिभिदिच्छिदेः कुरच्' (3-2-162) इति कुरच्प्रत्यये रूपमेवम्। 'ज्ञाता तु **विदुरो** विन्दुः' इत्य**मरः**। अत्र सूत्रे ज्ञानार्थ एव **न्यासे** गृहीतः।
3. क्वसुप्रत्यये, 'विभाषा गमहनविद्विशाम्' (7-2-68) इति विकल्पेन इडागमो भवति। **विविदिवान्-विविद्वान्** इति रूपद्वयम्। 'ज्ञानार्थस्य तु नित्यं **विविद्वान्** इत्येकमेव, भवति' इति **काशिकायाम्** (7-2-68) उक्तम्। अन्यत्रार्थे रूपद्वयं बोध्यम्।
4. विदन्नेव **वैदनः**, 'प्रज्ञादिभ्यश्च' (5-4-38) इति स्वार्थेऽण्प्रत्ययः। एतेनापि '**विदेः** शतुर्वसुः' (7-1-36) इति वसुविकल्पः सिद्धः। अन्यथा अणः प्रकृतिभूतस्य **विदन्** इति शत्रन्तस्यासिद्धिरित्यवधेयम्।
5. वेत्ति अनेनेति 'हलश्च' (3-3-121) इति करणे घञ्।
6. 'मन्त्रे वृषेषपचमन**विद**—' (3-3-96) इति स्त्रियां भावे क्तिन्प्रत्ययः।
7. विदन्त्यनया इति, 'संज्ञायां समजनिषदनिपतमन**विद**—' (3-3-99) इति स्त्रियां भावे क्यप्प्रत्ययः।
8. 'घट्टिवन्दि**विदि**भ्यश्च' (वा. 3-3-107) इति स्त्रियां युच्प्रत्ययः।

A. '**विदुरो** जित्वरः प्राप लक्ष्मणो गत्वरान् कपीन् ॥' भ.का. 7-22.

B. 'अकलयदसमाशुगाधिमग्नां झटिति **पराशयवेदिनो** हि विज्ञाः ॥' नैषधे 4-118.

C. '**नाविविदिषु**मभ्येति संपद्गुरुधिषुं नरम्।' भ. का. 7-99.



वेदनम्, वेदनम्, विविदिषणम्, वेविदनम् ;
[1]विदित्वा,[A] वेदयित्वा, विविदिषित्वा, वेविदित्वा ;
आवेद्य, प्रवेद्य, प्रविविदिष्य, प्रवेविद्य ;
[2]ब्राह्मणवेदं [भोजयति] चोरवेदम् [B][निहन्ति] जिघांसुवेदम्,[C]
वेदम् २, विदित्वा २, } वेदम् २, वेदयित्वा २, } विविदिषम् २, विविदिषित्वा २, } वेविदम् २; वेविदित्वा २ ; }
[3]वेदिः, [4]विदथः, [5]नवेदाः, [6]विश्ववेदाः.

(1603) "**विद सत्तायाम्**" (IV-दिवादिः-1171. अक. अनि. आत्म.)

'**सत्तायां विद्यते**, ज्ञाने वेत्ति, विन्ते विचारणे।' (श्लो. 111) इति **देवः**।
वेदकः-दिका, वेदकः-दिका, विवित्सकः-त्सिका, वेविदकः-दिका ;
वेदिता-त्री, वेदयिता-त्री, विवित्सिता-त्री, वेविदिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**खिद्यति**(349)वत् बोध्यानि। शानचि-विद्यमानः, णिनिप्रत्यये-वेदी, क्तिनि—वित्तिः, इमानि रूपाणि विशेषेण भवन्ति।

---

1. क्त्वायां, 'रलो व्युपधात्—' (1-2-26) इति वैकल्पिककित्त्वे प्राप्ते 'रुद-विद—' (1-2-8) इत्यादिना नित्यं कित्त्वम्। तेन एकमेव रूपम् इति ज्ञेयम्।
2. 'कर्मणि दृशि**विदोः** साकल्ये' (3-4-29) इति कर्मण्युपपदे साकल्यविशिष्टेऽर्थे धातोः णमुल्प्रत्ययो भवति। **ब्राह्मणवेदं** भोजयति इत्यस्य यं यं ब्राह्मणं=ब्राह्मणत्वेन जानाति लभते विचारयति वा तान् सर्वान् भोजयतीत्यर्थः।
3. 'हृपिशिरुहिवृति**विदि**—' [द.उ. 1-47] इति इन्प्रत्ययः। वेत्ति विन्दति विद्यते वा **वेदिः**=त्रेताग्न्यधिष्ठानम्।
4. 'रुदि**विदि**भ्यां ङित्' (द. उ. 6-41) इति अथप्रत्यये रूपमेवम्। वेत्तीति **विदथः**=ज्ञानी।
5. 'नभ्राण्नपान्न**वेदा**—' (6-3-71) इति निपातनात् न वेत्तीति **नवेदाः** इति असुन्प्रत्ययान्तोऽयम्।
6. '**विदि**भुजिभ्यां विश्वे' [द. उ. 9-98] इति विश्वशब्द उपपदे असिप्रत्ययः। **विश्ववेदाः**=हुताशनः।

A. '**विदित्वा** शक्तिमात्मीयां रावणं विजिघृक्षवः।' भ. का. 7-98.

B. 'यांश्चोरभूतान् लभते विचारयति वेत्ति वा।
तान् सर्वानपि हन्तीति **चोरवेदं** निहन्त्यसौ ॥' इति **प्रक्रियासर्वस्वे**।

C. '**जिघांसुवेदं** धृतभासुरास्त्रस्तां ताडकाख्यां निजघान रामः ॥' भ. का. 2-23.

(1604) "**विद विचारणे**" (VII-रुधादि:-1450. सक. अनि. आत्म.)

'—**मीमांसे**' इति **वोपदेवः** ।

'सत्तायां विद्यते, ज्ञाने वेत्ति, **विन्ते विचारणे** ।' (श्लो. 111) इति **देवः** ।

वेदक:-दिका, वेदक:-दिका, विवित्सक:-त्सिका, वेविदक:-दिका ;

वेत्ता-त्री, वेदयिता-त्री, विवित्सिता-त्री, वेविदिता-त्री ;

इत्यादिकानि रूपाणि सर्वाणि दैवादिक**खिद्यति**वत् (349) ज्ञेयानि । शानचि विन्दानः,[1] निष्ठायाम्-[2]वित्तः-विन्नः इति च विशेषः । [3]वेदिः ।

(1605) "**विद चेतनाख्याननिवासेषु**"

(X-चुरादि:-1709. सक. सेट्. आत्म.) **आकुस्मीयः** ।

'—**विवादेषु**' इति **क्षीरस्वामी** । '—**वेदने**' इत्येके । 'विद वेदनाख्यानपरिवादनेषु' इति **न्यासे** पाठः । "**निपातनेषु** इति **धनपालशाकटायनौ**" इति **पुरुषकारः** (श्लो. 111) ।

'विन्दते विन्दतीत्येवं लाभे, **वेदयते णिचि** ॥' (श्लो. 111) इति **देवः** ।

वेदक:-दिका, विवेदयिषक:-षिका, वेदयिता-त्री, विवेदयिषिता-त्री ;

इत्यादिकानि सर्वाण्यपि प्रातिस्विकरूपाणि विना—चौरादिक**चेतयति**वत् (260) ज्ञेयानि । 'अनुपसर्गाद्—' (3-1-138) इति शप्रत्यये वेदयः इति । 'घट्टिवन्दिविदिभ्यश्च' (वा. 3-3-107) इति ण्यन्तात् स्त्रियां युच्प्रत्यये वेदना इति रूपम् ।

(1606) "**विद्लृ लाभे**"

(VI-तुदादि:-1432. सक. अनि. उभ.) **मुचादिः** ।

'**विन्दते विन्दतीत्येवं लाभे** वेदयते णिचि ॥' (श्लो. 111) इति **देवः** ।

**व्याघ्रभूत्यादिमते** सेट्कोऽयम् । **वेदिता** इति ।

---

1. '**रुधादिभ्यः श्नम्**' (3-1-78) इति विकरणप्रत्यये श्नमि, '**श्नसोरल्लोपः**' (6-4-111) इति अल्लोपे च रूपमेवम् ।
2. निष्ठायाम्, 'नुद**विदो**न्दत्रा—' (8-2-56) इति निष्ठातकारस्य नकारादेशो विकल्पेन भवति । तेन रूपद्वयम् । तथा च **भाष्यम्** (7-2-58) —
   'वेत्तेस्तु विदितो निष्ठा विद्यतेः विन्न इष्यते ।
   **वित्तेर्विन्नश्च वित्तश्च** वित्तो भोगेषु विन्दतेः ॥' इति ।
3. औणादिके [द. उ. 1-47] इप्रत्यये रूपम् । वेत्ति विन्दति विन्ते वा वेदिः=वेतान्यधिष्ठानम् ।



वेदक:-दिका, वेदक:-दिका, विवेदिषक:-विविदिषक:-[विवित्सक:]-षिका, वेविदक:-दिका ;

वेदिता, [वेत्ता]-त्री, वेदयिता-त्री, विवेदिषिता-विविदिषिता-त्री, विवित्सिता-त्री, वेविदिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि **किलति**वत् (193) ज्ञेयानि । शतरि [1]विन्द:[A], [2]गोविन्द:-कुविन्द:, [B]अरविन्दम्[3], [4]वित्तम्-[धनम्], विन्नं [लब्धम्], [5]परिवेत्ता, विविद्वान्[6]-विविदिवान्, [7]वेदना[C]

---

1. 'अनुपसर्गाल्लिम्प**विन्द**—' (3-1-138) इति शप्रत्यये मुचादित्वात् '**शे मुचादीनाम्**' (7-1-59) इति नुमि शपि पररूपे च रूपमेवम् ।
2. 'गवादिषु **विन्देः** संज्ञायाम्' (वा. 3-1-138) इति शः । गां विन्दतीति **गोविन्दः** । एवं **कुविन्दः** इति **प्रक्रियासर्वस्वे** ।
3. **अरविन्दम्**-चक्रस्य नाभिनेम्योरन्तरालकाष्ठानि अराः, तत्सदृशानि दलानि विन्दति —लभत इत्यर्थः । **भाष्ये** तु **अरविन्दः** पुंल्लिङ्गत्वेन पठ्यते । '**कर्मण्यण्**' (3-2-1) बाधनाय इदम् इति **बृ. शेखरे** ।
4. '**वित्तो** भोगप्रत्यययोः' (8-2-58) इति क्तप्रत्यये भोगे चाभिधेये तत्वाभावो निपात्यते । **वित्तोऽयं** मनुष्यः । प्रतीत इत्यर्थः । **वित्तम्** धनम्, **वित्तं** प्रसिद्धम्, भुज्यत इति **भोगो** धनम् । प्रतीयत इति **प्रत्ययः** प्रसिद्धम् । अन्यत्र **विन्नम्** ।
5. तृजन्तोऽप्ययं 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (द. उ. 2-1) इति संज्ञायां गम्यमानायामनिटौ भवतः । '**परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात्**' **इत्यमरः** । ज्येष्ठे विवाहरहिते कृतदारपरिग्रहः कनिष्ठः **परिवेत्ता** इत्युच्यते ।
   क्सुप्रत्यये 'विभाषा गमहन**विद्**—' (7-2-68) इतीड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । तेन निष्ठानत्वपक्षे, नत्वाभावपक्षेऽपीण्निषेधो नित्य इत्यवधेयम् । **कातन्त्रे** तु अनिट्त्वेनास्य धातोः पाठात् तेषां मते निष्ठायामिण्निषेधः सिद्ध एव । **भाष्यादिषु तु** धातुरयं सेडित्येव सम्मतः । विस्तरस्तु **माधवीये** द्रष्टव्यः ।
6. 'विभाषा गमहन**विद्**विशाम्' (7-2-68) इति क्वसौ विकल्पेन इडागमो भवति । तेन रूपद्वयम् । विशिना साहचर्यादिह **विदे**स्तौदादिकस्य लाभार्थस्य ग्रहणम् ।
7. ण्यन्तात् 'घट्टिवन्दि**विदिभ्यश्च**' (3-3-107) इति युचि रूपमेवम् ।

A. 'आर्चीद् द्विजातीन् **परमार्थविन्दा**नुदेजयान् भूतगणान् न्यषेधीत् ।' भ. का. 1-16.

B. 'प्रजा इवाङ्गाद**रविन्द**नाभेः शंभोर्जटाजूटतटादिवापः ।' शि. व. 3-66

C. 'युक्त्वा योगं स्थितः शैले निश्रृण्वन् चित्त**वेदनाम्** ॥' भ. का. 7-73

[1]परिवित्तिः, [2]ब्राह्मणवेदं [भोजयति], [3]यावद्वेदं [भोजयति], [4]चोरवेदं निहन्त्यसौ] ।

(1607) " **विध विधाने** " (VI-तुदादि:-1325. सक. सेट्. पर.)

'अनेकार्थत्वाच्छिद्रकरणेऽप्ययम्' इति **दुर्गादासः** । निमित्तवेधी (म. भा. 5-96-30) । 'विधृ वेधृ' इत्यत्र (भ्वादौ) '**विधृ**' इति **कौशिकः** । **क्षीरस्वामिना** त्वयं पक्षो दूषितः ।

वेधकः-धिका, वेधकः-धिका, [5]विविधिषकः-विवेधिषकः-षिका, वेविधकः-धिका ;
वेधिता-त्री, वेधयिता-त्री, विविधिषिता-विवेधिषिता-त्री, वेविधिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि तौदादिक**किलति**वत् (193) **ऊह्यानि** । शतरि [6]विधन् इति । [7]वेधाः ।

(1608) " **विल संवरणे** " (VI-तुदादि:-1358. सक. सेट्. पर.)

'— वरणे' इति **शाकटायनहेमचन्द्रौ** । '— **स्मृतौ**' इति **वोपदेवः** । 'दन्त्योष्ठ्यादिरयम्' । '— **भेदने**' इति **द. उ. वृत्त्याम्** (8-115) । 'वेलेत्तु चलने वेलेर्**वरणे विलतीति शे** ॥' (श्लो. 157) इति **देवः** ।

---

1. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति क्तिच् । '**परिवित्तिस्तु** तज्ज्यायान्' **इत्यमरः** ।
2. 'कर्मणि दृशि**विदोः** साकल्ये' (3-4-29) इति साकल्यविशिष्टे कर्मण्युपपदे णमुल् भवति । यं यं ब्राह्मणं=ब्राह्मणत्वेन जानाति, लभते वा, तं तं भोजयति **इत्यर्थः** । अत्र सत्तार्थस्यैकस्य न ग्रहः; अकर्मकत्वात् ।
3. 'यावति **विन्द**जीवोः' (3-4-30) इति णमुल्प्रत्ययः । यावत् लभते तावद् भुङ्क्ते इत्यर्थः ।
4. **चोरवेद**मित्यत्र, यान् चोरभूतान् लभते विचारयति वेत्ति वा तान् सर्वानपि हन्तीत्यर्थे 'कर्मणि दृशि**विदोः**—' (3-4-20) इति णमुल् । '**चोरवेदं** निहन्त्यसौ—' इति **प्र. सर्वस्वे** ।
5. 'रलो व्युपधात्—' (1-2-26) इति सनः क्त्वाप्रत्ययस्य च कित्त्वविकल्पः । तेन क्त्वाप्रत्ययेऽपि **विधित्वा-वेधित्वा** इति रूपद्वयं ज्ञेयम् ।
6. 'तुदादिभ्यः शः' (3-1-77) इति विकरणप्रत्ययः शः । तस्य ङिद्वद्भावादङ्गस्य गुणो न ।
7. औणादिके [द.उ. 9-85] असिप्रत्यये, प्रकृतेः 'वेध' इत्यादेशे **वेधाः** इति भवति । विधाता इत्यर्थः ।



वेलकः-लिका, वेलकः-लिका, विवेलिषकः-विविलिषकः-षिका, वेविलकः-लिका ;
वेलिता-त्री, वेलयिता-त्री, विवेलिषिता-विविलिषिता-त्री, वेविलिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि तौदादिक**किलति**वत् (193) **ज्ञेयानि** । [1]विलालः । आविलम् [आवेलम्] ।

(1609) " **विल क्षेपे** " (X-चुरादि:-1605. सक. सेट्. उभ.)

'**वेलेत्तु चलने वेलेः** वरणे विलतीति शे ॥' (श्लो. 157) इति **देवः** । **क्षीरस्वामी** '**किल**—' इति पठति । **मैत्रेयस्तु** '**पिल**' इति पठति । **क्षीरस्वामिमैत्रेयजैनकातन्त्रशाकटायनवोपदेवादयो** धातुममुं नाभ्युपगच्छन्ति ।

वेलकः-लिका, विवेलयिषकः-षिका, वेलयिता-त्री, विवेलयिषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कीटयति**वत् (194) ज्ञेयानि । ल्युटि-[A]प्रवेलनम् ।

(1610) " **विश प्रवेशने** " (VI-तुदादि:-1424. सक. अनि. पर.)

अयं धातुरात्मनेपदेऽपि दृश्यते इति प्रयोगात् ज्ञायते । तथा हि—'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा **विशते** ब्रह्मधाम ॥' (**मुण्डकोपनिषत्** 3-2-4) । **प्रवेशनम्**—अन्तर्गमनम् ।

वेशकः-शिका, वेशकः-शिका, [2]विविक्षकः-क्षिका, वेविशकः-शिका ;
[3]वेष्टा-ष्ट्री, वेशयिता-त्री, विविक्षिता-त्री, वेविशिता-त्री ;
प्रविशन्-ती-न्ती, वेशयन्-न्ती, विविक्षन्[B]-न्ती ; —
[C]प्रवेक्ष्यन्-न्ती-ती, वेशयिष्यन्-न्ती-ती, विविक्षिष्यन्-न्ती-ती ; —

---

1. 'तमिविडिविलि—' (द. उ. 8.115) इति कालच्प्रत्यये रूपम् । **विलालः**= भिदुरः ।
2. सन्नन्तात् ण्वुलि 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे 'व्रश्च—' (8-2-36) इत्यादिना षत्वे ककारे च रूपमेवम् । एवं सन्नन्ते सर्वत्र बोध्यम् ।
3. तृचि, 'व्रश्च—' (8-2-36) इत्यादिना शकारस्य षकारे, 'ष्टुना ष्टुः' (8-4-41) इति टकारे च रूपमेवम् । एवं तव्यदादिष्वपि ज्ञेयम् ।

A. 'काल्य**प्रवेलन**करोऽयमवेलयद् ........ ।' धा. का. 3-22
B. 'फणावतस्त्रासयितुं रसायास्तलं **विवक्षन्निव** पन्नगारिः ॥' शि. व. 3-23
C. 'स प्रोषिवानेत्य पुरं **प्रवेक्ष्यन्** शुश्राव घोषं न जनौघजन्यम् ।' भ. का. 3-27,

[1]निविशमानः-व्यतिविशमानः, वेशयमानः, विविक्षमाणः, वेविशमानः ;
व्यतिवेक्ष्यमाणः, वेशयिष्यमाणः, विविक्षिष्यमाणः, वेविश्यमानः, [2]विट्-विड्-विशौ-विशः ;
[3]विष्टम्-ष्टः-ष्टवान्, वेशितम्-तः, विविक्षितः, वेविशितः-तवान् ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिकखिद्यतिवत् (349) ज्ञेयानि । विशः-
[4]देवविशा, विविशिवान्[5]-विविश्वान्, [6]विशयी-विषयी, [7]वेशः, [8]प्रायोपवेशिका,[A]
[9]ग्राममभिनिविशमानः, कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, गेहानुप्रवेशमास्ते,
चारुशिलोपवेशम् ,[B] [10]गेहं गेहमनुप्रवेशमास्ते गेहमनुप्रवेशमनुप्रवेशमास्ते,

---

1. '**नेर्विशः**' (1-3-17) इति तङ् । 'अङ्के **निविशतीं** भयात्' इत्यादिषु तङभाव उपसर्गप्रतिरूपकेण 'नि' इत्यनेन साकं **विशतेः** समासेनेति बोध्यम् ।
2. क्विपि, षकारे, षकारस्य ष्टुत्वेन टकारे च रूपमेवम् ।
3. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रत्ययः ।
4. क्विबन्तात् अजादिपाठाद्धलन्तादपि टापि च रूपमेवम् ।
5. 'विभाषा गमहनविद**विशाम्**' (7-2-68) इति क्वसौ इड्विकल्पनात् रूपद्वयं बोद्धव्यम् ।
6. णिनिप्रत्यये रूपमेवम् । वृद्ध्यभावो निपातनात् । **विषयी** इत्यत्र षत्वमपि **केचित्** आहुः ।
7. 'पदरुज**विश**—' (3-3-16) इति कर्तरि घञ् । विशतीति **वेशः** । वेश्याजनोपभोगार्थे **तु** 'हलश्च' (3-3-121) इति अधिकरणे घञ् ।
8. 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (3-3-111) इति ण्वुच्प्रत्यये रूपम् । क्तिन्नादीनामपवादः । **प्रायोपवेशिका**=मरणपर्यन्तम् अनशनम् ।
9. '**अभिनिविशश्च**' (1-4-47) इति अभिनिपूर्वस्य **विशतेः** कर्मसंज्ञा भवति । 'परिक्रयणे संप्रदानमन्यतरस्याम्' (1-4-44) इत्यतो मण्डूकप्लुत्याऽन्यतरस्यामित्यनुवृत्तेः, तस्य च व्यवस्थितविभाषात्वात् कल्याणे**ऽभिनिवेशः**, पापे**ऽभिनिवेशः**, 'या या संज्ञा यस्मिन् यस्मिन् संज्ञिन्य**भिनिविशते**', इत्यादिषु कर्मत्वाभावः ।
10. '**विशि**पतिपदि—' (3-4-56) इति द्वितीयान्त उपपदे णमुल्प्रत्ययो भवति व्याप्यमाने आसेव्यमाने चार्थे गम्यमाने । तृतीयाप्रभृतित्वात (2-2-21) समासविकल्पः । असमासे तु व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम् । आसेव्यमानतायां तु क्रियावचनस्य 'उपपदमतिङ्' इति समासः । समासेन व्याप्त्यासेवयोरुक्तत्वात् 'नित्यवीप्सयोः' (8-1-4) इति द्विर्वचनं न भवति ।

A. 'अहं पर्यायसंप्राप्तां कुर्वे **प्रायोपवेशिकाम्** ॥' भ. का. 7-76.
B. 'कुतूहलाचारु**शिलोपवेशं** काकुत्स्थ ईषत्स्मयमान आस्त ॥' भ. का. 2. 11.



वेशन्तः,[1] वेश्म, [2]विटपः-विष्टपम्-त्रिविष्टपम्, विशिपम्, विशालम्, [4]विश्वम् ।

(1611) "**विष विप्रयोगे**" (IX-क्र्यादिः-1526. अक. अनि. पर.)

'**विप्रयोगे विषेः** क्र्यादे**र्विष्णाती**ति पदं भवेत् ।' (श्लो. 175) इति **देवः** ।
वेषकः-षिका, वेषकः-षिका, विविक्षकः-क्षिका, वेविषकः-षिका ;
वेष्टा-वेष्ट्री, वेषयिता-त्री, विविक्षिता-त्री, वेविषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**तुष्यति**वत् (758) ज्ञेयानि । शतरि विष्णन्-ती, इति विशेषः ।
"विष्णाति इति प्रयोगे समुपलब्धे सत्येव निर्णयो धातोरस्य शक्यः कर्तुम्" इति **पा. धा. समीक्षा** ।

(1612) "**विषु सेचने**" (I-भ्वादिः-698. सक. अनि. पर.)

'सेवने' इति **धातुकाव्यव्याख्यापाठः** (1-88) ।
'........विषेः **वेषति सेचने** ॥' (श्लो. 174) इति **देवः** ।
"**आर्याणामुदित्**, **द्रमिडानां** लृदित्" इति **धनपालः** । 'पुषादि—' (3-1-55) इत्यत्र **सुधाकरः**—'**द्रमिडानामविषत्**, **आर्याणां** तु 'शल इगुपधात्—' (3-1-45) इति अविक्षत् इति **नन्दी**" इति **पुरुषकारे** इति (श्लो. 175) ।

---

1. '**जॄविशिभ्यां** झच्' (द. उ. 6-17) इति झच्प्रत्यये, 'झोऽन्तः' (7-1-3) इत्यन्तादेशे च रूपमेवम् । **वेशन्तः** पल्वलः ।
2. '**विटपविष्टपविशिपो**लपाः' (द. उ. 7-12) इति कपन्प्रत्यये निरूढः । शकारस्य टकारो निपातनात् । तेन विशन्त्यस्मिन् पक्षिण इति **विटपम्**=शाखावयवः ।
अस्यैव धातोः षकारेऽन्तादेशे तुडागमश्च निपात्यते । विशन्त्यस्मिन् पुण्यकृत इति **विष्टपम्**=पुण्यकृतां स्थानम् । **त्रिविष्टपम्**=स्वर्गः ।
अस्यैव धातोः प्रत्ययादेरित्वं निपात्यते । तेन **विशिपम्**=वेश्म, आसनं च इत्यर्थः । पद्मं चेत्य**येके** ।
3. औणादिके (द. उ. 8-115) कालच्प्रत्यये एवं रूपम् । विशन्ति तस्मिन् बहवोऽनेनेति **विशालं** प्रथु । वस्तुतः 'वेः शालच्—' (5-2-28) इति वेः शालच्प्रत्ययेनैव सिद्धमिदम् ।
4. औणादिके (द. उ. 8.-125) क्वन्प्रत्यये रूपम् । विशति तस्मिन् सर्वम् इति **विश्वम्** ।

वेषकः-षिका, वेषकः-षिका, विविक्षकः-क्षिका, वेविषकः-षिका ;
वेष्टा-ष्ट्री, वेषयिता-त्री, विविक्षिता-त्री, वेविषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**तुष्यति**वत् (758) ऊह्यानि । विषः, विषम्, विषाणम्, विषिः विष्टिः=बलम्, इत्यादिकानि रूपाणि विशेषेण भवन्तीति ज्ञेयम् । क्त्वायाम्-[1]विषित्वा-वेषित्वा इति ।

(1613) "**विष्क हिंसायाम्**" (X-चुरादिः-1686. सक. सेट्. आत्म.)

**आकुस्मीयः ।**

**क्षीरतरङ्गिण्यां** धातुरयं न दृश्यते । अपि तु तत्र '**किष्क**' इति पठित्वा '**हिष्क**' इति **दुर्गः**' इति उक्तम् ।
'**किष्क**' इति पठित्वा, **हिष्क इत्येके**' इति च **धातुकाव्यव्याख्या** (3-34) ।
'**धातुप्रदीपादौ**—'**हिष्क**' इति पठ्यते' इति **मा. धा. वृत्तिः** ।
विष्ककः-ष्किका, विविष्कयिषकः-षिका, विष्कयिता-त्री, विविष्कयिषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाणि चौरादिक**चित्रयति**वत् (525) बोध्यानि । धातोरस्य आत्मनेपदित्वात् विष्कयमाणः, विविष्कयिषमाणः इति विशेषः । 'किष्क' इति पक्षे किष्किन्धा, किष्कुः, इति औणादिके । '**किष्कुर्द्वयोर्वितस्तौ च**—' इति **मेदिनी** ।

(1614) "**विष्क दर्शने**" (X-चुरादिः-1940. सक. सेट्. उभ.)
**अदन्तः** । **क्षीरस्वामी** धातुमसुं न पठति ।
विष्ककः-ष्किका, विविष्कयिषकः-षिका ; विष्कयिता-त्री, विविष्कयिषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**चित्रयति**वत् (525) ज्ञेयानि ।

(1615) "**विष्लृ व्याप्तौ**" (III-जुहोत्यादिः-1095. अक. अनि. उभ.)
'**व्याप्तौ वेवेष्टि वेविष्टे**............ ॥' (श्लो. 174) इति **देवः** ।
'**विषृ**—' इति **काशकृत्स्नः** । तत्र '**विष्लृ** इति **कातन्त्रे** पाठः' इति च तत्रोक्तम् । "**उदिदित्येके । इरिदिति द्रुमे**" इति **धा. का. व्याख्या** (2-55) । वेष्टा, विष्टवान्, विष्टः, वेषन्, वेषकः इत्येते **व्यापके**ऽर्थे । वेषः, विष्टम्, वेषणीयम्, वेष्यम्, वैष्यम्, वेष्टव्यम्, वेषणं, विष्टिः इत्यष्टौ आवरणार्थे ।

1. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पनात् रूपद्वयमत्र ज्ञेयम् ।



वेषकः-षिका, वेषकः-षिका, [1]विविक्षकः-क्षिका, वेविषकः-षिका ;
वेष्टा-ष्ट्री, वेषयिता-त्री, विविक्षिता-त्री, वेविषिता-त्री ;
[2]वेविषत्-ती, वेषयन्-न्ती, विविक्षन्-न्ती ; —
वेक्ष्यन्-न्ती-ती, वेषयिष्यन्-न्ती-ती, विविक्षिष्यन्-न्ती-ती ; —
वेविषाणः, वेषयमाणः, विविक्षमाणः, वेविषमाणः ;
वेक्ष्यमाणः, वेषयिष्यमाणः, विविक्षिष्यमाणः, वेविषिष्यमाणः ;
विट्-विषौ-विषः, वेट्-वेषौ-वेषः ; — —
विष्टम्-विष्टः-विष्टवान्, [3]आविष्टलिङ्गम्, वेषितम्-तः, विविक्षितः, वेविषितः-तवान् ;
इत्यादिकानि रूपाणि सर्वाण्यपि जौहोत्यादिक**णिजिर्**धातुवत् (673) ऊह्यानि । [4]विष्टिः, [5]विष्णुः, [6]वेष्पम्, [7]वैष्ट्रः, [8]विषम् । इमानि औणादिकनिष्पन्नरूपाणीति ज्ञेयानि । [9]विषयम्=आवरणम् । विषयो=देशः ।

1. सन्नन्तात् ण्वुलि, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे 'इण्कोः' (8-3-57) इति सकारस्य षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. '**जुहोत्यादिभ्यः**—' (2-4-75) इति श्लौ, 'श्लौ' (6-1-10) इति द्वित्वे, 'निजां त्रयाणां गुणः श्लौ' (7-4-75) इति अभ्यासस्य गुणे, 'नाभ्यस्ताच्छतुः' (7-1-80) इति नुम्निषेधे च रूपमेवम् । एवं **वेविषाणः** इत्यत्रापि गुणो ज्ञेयः । अनिट्कारिकायां विषिग्रहणेन जौहोत्यादिकोऽयं गृह्यते इति **न्यासे** ।
3. '**आविष्ट**लिङ्गा जातिर्यंल्लिङ्गमुपादाय प्रवर्तते उत्पत्तिप्रभृति आविनाशान्न तं लिङ्गं जहाति' इति **महाभाष्यवचनं** (1-2-52) अत्र द्रष्टव्यम् ।
4. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् ।
5. '**विषेः** किच्च' (द. उ. 1-149) इति णुप्रत्ययः किच्च भवति । वेवेष्टि कृत्स्नमिति **विष्णुः**=सर्वव्यापी भगवान् ।
6. 'पानी**विषिभ्यः** पः' (द. उ. 7-2) इति पप्रत्यये रूपम् । **वेष्पम्**=परमात्मा ।
7. औणादिके (द. उ. 8-80) ष्ट्रन्प्रत्यये रूपमेवम् । **वैष्ट्रः**=विष्णुः वायुश्च इति ।
8. व्याप्तिकर्मणि गम्यमाने औणादिकः (द.उ. 9.20) कन्प्रत्ययो भवति । **विषम्**=प्राणहरद्रव्यम् इत्यर्थः । जलार्थको **विष**शब्दो वेदे प्रयुज्यते । द्रष्टव्या **निघण्टुः** (1.12) ।
9. बाहुलकात् औणादिके (द. उ. 1-12) कयन्प्रत्यये रूपमेवम् ।

(1616) " **विसृ गतौ** " (I-भ्वादिः-719. सक. सेट्. पर.)

पिसृ इत्यत्र 'इह **क्वचित् कोशे** '**विसृ** वेसृ—' इत्यपि पठ्येते। आद्यौ दन्त्यौष्ठ्यादी' इति **मा. धा. वृत्तौ**। **मैत्रेया**दिषु न दृश्यते इति च। 'विश—' इति पठित्वा '**विस**' इति **कातन्त्राः** इति **काशकृत्स्ने**। '**मैत्रेयकातन्त्रशाकटायनहेमादयः** पठन्ति' इति **पा. धा. समीक्षायां** दृश्यते। (वस्तुतस्तु) **अन्ये सर्वे**ऽपि '**बिस**' इत्येव पठन्ति। **बालमनोरमायां** तु '**विस प्रेरणे**' इति **दिवादौ** पठ्यते। **सि. कौमुद्यां** त्वत्र '**बिस**' इत्येव।

वेसकः-सिका, वेसकः-सिका, विविसिषकः-विवेसिषकः-षिका, वेविसकः-सिका; वेसिता-त्री, वेसयिता-त्री, विवेसिषिता-विविसिषिता-त्री, वेविसिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**किटति**वत् (190) बोध्यानि।

(1617) " **वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु** "

(II-अदादिः-1048, सक. अनि. पर.) [अ]

अत्र **व्याप्तिः** इत्यर्थः **धातुवृत्ति, क्षीरतरङ्गिणी, जै, का. कृ, द. उ. वृत्ति, कातन्त्रशाकटायनीयेषु** न दृश्यते। "**प्रजनः**=प्रथमगर्भग्रहणम्, **असनं**=क्षेपणं, **अशनं**=व्याप्तिरित्येके" इति **क्षीरस्वामी**। '**प्रजननकान्त्यासन**खादनेषु च' इति **काशकृत्स्न**धातुपाठे। "**कन्नडटीकायाम् आसना**र्थस्य निर्देशात् **काशकृत्स्ने** '**आसन**' इति पाठो द्रष्टव्यः। यद्वा मूलपाठे प्रमादपठितस्यैव **टीकाकृता** तथा व्याख्यानं कृतं स्यात्" इति **का. कृ. टीका**। 'अजेर्व्यघञपोः' (2-4-56) इति **सूत्रभाष्य**रीत्या अस्य धातोः आर्धधातुके नास्ति प्रयोग इति **शब्देन्दुशेखरे** स्थितम्। "'वी' इत्यत्र **ईकारो**ऽपि धात्वन्तरं प्रश्लिष्यते" इति **सि. कौमुदी**। '—कान्तिगतिव्याप्ति**क्षेप**प्रजनखादनेषु' इति **वोपदेवः**।

वायकः-यिका, वायकः, [1]वापकः-पिका, [2]विवीषकः-षिका, वेवीयकः-यिका;

1. '**प्रजने वीयतेः**' (6-1-55) इति प्रजने वर्तमानस्य णौ विभाषा आत्वे, पुकि च रूपमेवम्।
2. सन्नन्तात् ण्वुलि 'इको झल्' (1-2-9) इति सनः कित्त्वान्न गुणः।

[अ] 'ईज' इत्यत्र '**वीजे**रलौकिकादवीजयत्' इति **क्षीरतरङ्गिण्यां** दृश्यते। '**वीज**-धातुः शास्त्रेष्वपठितोऽपि लोके लब्धप्रचार इत्यर्थः। '**संवीजते**' इति प्रयोगस्तु **जाम्बवतीविजये** दृश्यते यथा— 'घर्मालिसाङ्गी मधुराणि कूजन् **संवीजते** पक्षपुटेन कान्ताम्॥' इति **तट्टीकायामुक्तम्**। '**वीजन्ति** बालव्यजनैः—' इति **हरिवंशे** (13-92) (**म. भारते** 7-307) इति च।



वेता-त्री, वाययिता-वापयिता-त्री, विवीषिता-त्री, वेवीयिता-त्री;
[1]वियन्-ती, वाययन्-पुरोवातो गाः, प्रवापयन्, वापयन्-न्ती, विवीषन्-न्ती;—
वेष्यन्-न्ती-ती, वाययिष्यन्-वापयिष्यन्-न्ती-ती, विवीषिष्यन्-न्ती-ती;—
इत्यादिकानि रूपाणि सर्वाण्यपि क्रैयादिक**लिनाति**वत् (1492) ज्ञेयानि, प्रातिस्विकरूपाणि विना। निष्ठायाम् वीतम्-तः, [2]वयः, क्तिनि-वीतिः, वेणिः[3], वेणुः[4], वीणा[5], [6]वेतनम्, [7]वेत्रम्, [8]वेतसः, वयः, इत्यादिकानि रूपाणि अस्य धातोः विशेषेण भवन्ति।

(1617-A) " **वीथृ याचने** " (भ्वादौ) इति **काशकृत्स्नेन** पठ्यते।

वीथः, वेथकः[9] वेथमानः इति त्रयं **भिक्षुके** इति च तत्र उक्तम्। वीथी, वीथिका–द्वौ मार्गौ।

1. 'अदिप्रभृतिभ्यः शपः' (2-4-72) इति शपो लुकि प्रकृतेः इयङादेशे च रूपमेवम्।
2. 'एरच्' (3-3-56) इति भावे अकर्तरि च कारके संज्ञायामच्प्रत्यये रूपम्। घञोऽपवादः।
3. '**वी**ज्याज्वरिभ्यो निः' (द. उ. 1-18) इति निप्रत्ययः। बाहुलकात् णत्वम्। **वेणिः**=केशबन्धः।
4. औणादिके (द. उ. 1-148) णुप्रत्यये रूपमेवम्। **वेणुः**=वंशः। अत्रापि बाहुलकादेव णत्वम्।
5. औणादिके (द. उ. 5-47) नप्रत्ययो णत्वं गुणाभावश्च निपातनात्। तेन रूपमेवम्। वेति जायते स्वरोऽस्यामिति **वीणा**=वल्लकी। '**वीणा** तु वल्लकी। विपञ्ची' इत्य**मरः**।
6. '**वी**पतिभ्यां तनन्' (द. उ. 6-56) इति तनन्प्रत्ययः। **वेतनम्**=भृतकदानम्। भृतकर्मकधनमिति **केचित्**।
7. 'गुधृ**वी**—' (द. उ. 8-89) इति त्रप्रत्यये रूपमेवम्। **वेत्रम्**=वीरुद्विशेषः।
8. '**वियस्तुट् च**' (द. उ. 9-45) इति असप्रत्यये तुडागमे च रूपमेवम्। **वेतसः**=काष्ठजातिः।
9. शानचि **वेथमानः** इति प्रयोगे दृष्टत्वात् अयं धातुः आत्मनेपदी इति ज्ञायते। अन्यत्र सर्वेषु ग्रन्थेषु अयं धातुः न दृश्यते। अत्र **बाहुलकात्** गुणो बोध्यः।

(1618) “ **वीर विक्रान्तौ** ” (X-चुरादिः-1903. अक. सेट्. आत्म.)

**आगर्वीयः, अदन्तश्च । ‘—शौर्ये’** इति **वोपदेवः ।**

वीरकः–रिका, विवीरयिषकः-षिका ; वीरयिता-त्री, विवीरयिषिता–त्री ;
वीरयन्-न्ती, विवीरयिषन्-न्ती ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कीटयति**वत् (194) ज्ञेयानि । ल्युटि–वीरणम्=कटार्थो द्रव्यविशेषः ।

(1618-A) “ **वुख चलने** ”

(भ्वादिः सक. सेट्.पर.) इति **काशकृत्स्नेन** पठ्यते ।

“वखिः, वुखुः, वोखनम्, वोखनीयम्—’ चत्वारः कम्पनेऽर्थे ’’ इति च तत्रोक्तम् । **धातुवृत्ति, क्षीरतरङ्गिण्यादिषु न** पठ्यते ।

(1619) “ **वुगि वर्जने** ” (I-भ्वादिः-158. सक. सेट्. पर.)

‘ —त्यागे ’ इति **वोपदेवः** । ‘ **बुगि** ’ इति **सि. कौमुदी । केचित्** ‘ भुगि ’ इति चतुर्थादिं पठन्ति ।

वुङ्गकः-ङ्गिका, वुङ्गकः-ङ्गिका, वुवुङ्गिषकः-षिका, वोवुङ्गकः-ङ्गिका ;
वुङ्गिता-त्री, वुङ्गयिता-त्री, वुवुङ्गिषिता-त्री, वोवुङ्गिता-त्री ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि । ल्यपि-परिवुङ्ग्य ।

(1620) “ **वृक आदाने** ” (I-भ्वादिः-92. सक. सेट्. आत्म.)

‘ — **अदने** ’ इति पाठान्तरमिति **क्षी. टीका ।**

वर्ककः-र्किका, वर्ककः-र्किका, विवर्किषकः-षिका, [1]वरीवृककः-किका ;
वर्किता-त्री, वर्कयिता-त्री, विवर्किषिता-त्री, वरीवृकिता-त्री ;
— वर्कयन्-न्ती, वर्कयिष्यन्-न्ती-ती ; —
वर्कमाणः, वर्कयमाणः, विवर्किषमाणः, वरीवृक्यमाणः ;
वर्किष्यमाणः, वर्कयिष्यमाणः, विवर्किषिष्यमाणः, वरीवृकिष्यमाणः ;
वृकितम्–तः, वर्कितः, विवर्किषितः, वरीवृकितः-तवान् ;
वृक्-वृकौ-वृकः ; — — —
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**गर्जति**वत् (422) ज्ञेयानि । [2]वृकः

1. यङन्ते ‘ रीगृदुपधस्य च ’ (7-4-90) इत्यभ्यासस्य रीगागमः ।
2. ‘ **इगुपध**ज्ञाप्रीकिरः कः ’ (3-1-135) इति कप्रत्ययः । **वृकः** मृगविशेषः, आयुधजीविसंघविशेषश्च ।



[1]वर्कणः, [2]वृक्यम्, [3]वर्करः, इमानि रूपाण्यधिकान्यत्रेति विशेषः ।
**वृकोदरः**=भीमः ।

(1621) “ **वृक्ष वरणे** ” (I-भ्वादिः-604. सक. सेट्. आत्म.)

‘ स्पर्श स्नेहने ’ इति ‘ **कातन्त्र**पाठः, **चान्द्र**पाठश्च । **वरणे**—आवरणे इति **काशकृत्स्नः ।**

वृक्षकः-क्षिका, वृक्षकः-क्षिका, विवृक्षिषकः-षिका, वरीवृक्षकः-क्षिका ;
वृक्षिता-त्री, वृक्षयिता-त्री, विवृक्षिषिता-त्री, वरीवृक्षिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**वृक्षति**वत् (765) बोध्यानि । ल्यपि [A]संवृक्ष्य, शानचि वृक्षमाणः । इति विशेषः । [4]वृक्षः, इगुपधलक्षणकप्रत्यये रूपम् ।

(1622) “ **वृङ् संभक्तौ** ” (IX-क्र्यादिः-1509. सक. सेट्. आत्म.)

‘ **भक्तौ वृणीते,** वरणे वृणोति वृणुते वृञः । ’ (श्लो. 32) इति **देवः ।**
‘ **तुदादौ** वृङ् संभक्तौ **व्रियते** ’ इति **क्षीरस्वामी** इति **पुरुषकारेण** उक्तम् । प्रकृत**क्षीरतरङ्गिण्यां** तुदादौ न दृश्यते । **संभक्तिः**=संसेवा इति **क्षीरस्वामी ।**
‘ **स्वीकारः** ’ इति **धातुकाव्यव्याख्या** (3-9) ।

वारकः-रिका, वारकः-रिका, [5]विवरिषकः-विवरीषकः-वुवूर्षकः-र्षिका,
[6]वेव्रीयकः-यिका ;

1. ‘ अनुदात्तेतश्च—’ (3-2-149) इति युच्प्रत्ययस्ताच्छीलिकः ।
2. ‘ ऋदुपधाच्च—’ (3-1-110) इति क्यप्प्रत्यये रूपमेवम् ।
3. बाहुलकाद् अरच्प्रत्यये रूपमेवम् । **वर्करः**=तरुणः पशुः । अजोऽपि ।
4. ‘ किंस्विद् वनं क उ स **वृक्ष** आसीद् यतो द्यावापृथिवी निष्टतक्षुः ।’(यजुः 1.7-20)
5. ‘ इट् सनि वा ’ (7-2-41) इतीड्विकल्पः । इट्पक्षे ‘ **वृतो** वा ’ (7-2-38) इति इटो दीर्घविकल्पः । इडभावपक्षे ‘ इको झल् ’ (1-2-19) इति सनः कित्त्वे, ‘ अज्झनगमां सनि ’ (6-4-16) इति दीर्घे ‘ उदोष्ठ्यपूर्वस्य ’ (7-1-102) इति उत्वे, रपरत्वे च ‘ हलि च ’ (8-2-77) इति इक उपधाया दीर्घः । तेन सन्नन्ते सर्वत्र रूपत्रयं बोध्यम् ।
6. यङन्ते ‘ रीङृतः ’ (7-4-27) इति ऋकारान्तस्याङ्गस्य रीङ् इत्यादेशे रूपमेवम् ।

A. ‘ **संवृक्ष्य** वेदमतशिक्षकभिक्षुगम्यम्........। ’ धा. का. 1-17

[1]वरिता-वरीता-त्री, वारयिता-त्री, विवरिषिता-विवरीषिता-वुवूर्षिता-त्री, वेव्रीयिता-त्री ;

— वारयन्-न्ती, वारयिष्यन्-न्ती-ती ; —

वृणानः, वारयमाणः, विवरिषमाणः-विवरीषमाणः-वुवूर्षमाणः, वेव्रीयमाणः ;

वरिष्यमाणः, वारयिष्यमाणः, विविरिषिष्यमाणः-विवरीषिष्यमाणः, वूवुर्षिष्यमाणः, वेव्रीयिष्यमाणः ;

वृत्-वृतौ-वृतः ; — — —

वृतम्-तः,[2] वारितः, विविरिषितः-विवरीषितः-वुवूर्षितः, वेव्रीयितः-तवान् ;

वरः, [3]वराकः-वराकी, वारः, विवरिषुः-विवरीषुः-वुवूर्षुः, वेव्रियः ;

वरितव्यम्, वरीतव्यम्, } वारयितव्यम्, वियरिषितव्यम्-विवरीषितव्यम्-वुवूर्षितव्यम्, वेव्रीयितव्यम् ;

वरणीयम्, वारणीयम्, विवरिषणीयम्-विवरीषणीयम्-वुवूर्षणीयम्, वेव्रीयणीयम् ;

वर्यम्, वर्यः[A] [सहस्रेण] [4]वर्या, वार्याः [ऋत्विजः,] वृत्यम्,

वार्यम्, विवरिष्यम्-विवरीष्यम्-वुवूर्ष्यम्, वेव्रीय्यम् ;

ईषद्वरः-दुर्वरः-सुवरः ; — — —

वर्यमाणः, वार्यमाणः, विवरिष्यमाणः-विवरीष्यमाणः-वुवूर्ष्यमाणः, वेव्रीय्यमाणः ;

वारः, [5]नीवारः, वारः, विवरिषः-विवरीषः-वुवूर्षः, वेव्रियः ;

वरितुम्[B]-वरीतुम्, वारयितुम्, विवरिषितुम्-विवरीषितुम्-वुवूर्षितुम्, वेव्रीयितुम् ;

[6]वृतिः, वारणा, विवरिषा-विवरीषा-वुवूर्षा, वेव्रीया ;

---

1. '**वृतो** वा' (7-2-38) इति इटः विकल्पेन दीर्घः। तेन तव्यतुमुन्नादिषु रूपद्वयं बोध्यम्।
2. सन्नन्ते इड्विकल्पनात् निष्ठायाम् 'यस्य विभाषा' (7-2-15) इतीण्निषेधः।
3. 'जल्पभिक्षकुट्टलुण्ट**वृङः** षाकन्' (3-2-155) इति तच्छीलादिषु कर्तृषु षाकन्प्रत्ययः। तेन रूपमेवम्। स्त्रियां षित्वात् ङीष्प्रत्यये **वराकी** इति।
4. 'अवद्यपण्य**वर्याः**—' (3-1-101) इति अनिरोधेष्वर्थेषु **वर्या** इति निपात्यते। ण्यदपवादोऽयम्। **वर्येति** स्त्रियां निपात्यते। अनिरोधः=अप्रतिबन्धः। **वृत्या** अन्या। क्यब्विधौ **वृञो** ग्रहणम्, न तु वृङः। **वार्याः**=ऋत्विजः।
5. 'नौ वृ धान्ये' (3-3-48) इति निशब्द उपपदे धान्यविशेषेऽभिधेये धातोः घञ्प्रत्यये उपसर्गस्य—' (6-3-122) इति दीर्घे च रूपमेवम्। अपोऽपवादः। **नीवारो** नाम व्रीहिः। अकृष्टपच्यधान्यम्। **निवरा** तु कन्या इति।
6. 'श्र्युकः किति' (7-2-11) इतीण्निषेधः। एवं क्त्वाप्रत्ययादिष्वपि ज्ञेयम्।

A. 'सुग्रीवो नाम **वर्यो**ऽसौ भवता चारुविक्रमः॥' भ. का. 6-51

B. '......अवपरिमलगन्धः केन शक्यो **वरीतुम्**॥' शि. व. 11-34.



वरणम्, वारणम्, विवरिषणम्-विवरीषणम्-वुवूर्षणम्, वेव्रीयणम् ;

वृत्वा, वारयित्वा, विवरिषित्वा-विवरीषित्वा-वुवूर्षित्वा, वेव्रीयित्वा ;

निवृत्य, निवार्य, निविवरिष्य-निविवरीष्य-निवुवूर्ष्य, निवेव्रीय्य ;

वारम् २, वृत्वा २, } वारम् २, वारयित्वा २, } विवरिषम् २-विवरीषम् २-वुवूर्षम् २, विवरिषित्वा २-विवरीषित्वा-वुवूर्षित्वा २, } वेव्रीयम् २ ; वेव्रीयित्वा २ ; }

[1]वर्वरीका, [2]वरेण्यः, [3]वरूषः, [4]वर्पः.

(1623) "**वृजी वर्जने**" (II-अदादिः-1029. सक. सेट्. आत्म.)

सूत्रमिदं **क्षीरस्वामी** दौर्गपाठत्वेन पठति। "इदित् इति **आत्रेयमैत्रेय-दुर्गादयः**। तथा चाधीयते—'चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति। तथा च **शाबरभाष्ये** 'प्रवृञ्जनम्' इति प्रयुज्यते। तथा च **स्वामी**—"वृज इति **दौर्गाः**, तेषां वृक्ते, वर्जिता इति। **शाकटायन**स्यापीदित्त्वमेवेष्टम्" इति **मा. धातुवृत्ति**रिहानुसन्धेया। 'वृज गतौ' इति **क्षीरस्वामी** (भ्वादौ) पठित्वा **वृजी** इति **दौर्गाः**। वृक्ते वर्जिता इत्याह' इत्येवमुक्तम्। यत्त्वत्र **पुरुषकारेण** '**क्षीरस्वामिना वृजि** इति पठित्वा' इत्युक्तं तन्नोपलभ्यते **क्षीरतरङ्गिण्याम्**। **काशकृत्स्नो**ऽपि '**वृजी**—' इत्येव पपाठ। '—त्यागे वृत्तौ च' इति **वोपदेवः**।

'वृणक्ति वर्जने वृङ्क्ते यौ वर्जयति वर्जति।' (श्लो. 59) इति **देवः**।

वर्जकः-र्जिका, वर्जकः-र्जिका, विवर्जिषकः-षिका, [5]वरीवृजकः-जिका ;

वर्जिता-त्री, वर्जयिता-त्री, विवर्जिषिता-त्री, वरीवृजिता-त्री ;

— वर्जयन्-न्ती, वर्जयिष्यन्-न्ती-ती ; — —

---

1. 'शॄपॄवृञां द्वे रुक् चाभ्यासस्य' (द. उ. 3-37) इति ईकन्प्रत्यये, अभ्यासस्य रुगागमे च रूपमेवम्। **वर्वरीका**=संवरणम्।
2. '**वृङ** एण्यः' (द. उ. 8-3) इति एण्यप्रत्ययः। वृणीते व्रियते वा **वरेण्यः**= परब्रह्मधाम। परं ब्रह्म, वाचंयमः इति च **केचित्**।
3. 'अञ्जूषः' (द. उ. 9-19) इति ऊषन्प्रत्यये रूपमेवम्। **वरूषः**=भोजनम्।
4. औणादिके (द. उ. 9-61) असुन्प्रत्यये, पुडागमे च रूपमेवम्। रूपस्वाङ्गयो-रभिधेययोः व्रियते तदिति **वर्पः**=रूपम्।
5. ऋदुपधस्याङ्गस्य '**रीगृदुपधस्य** च' (7-4-90) इति अभ्यासे रीगागमः। एवं यङन्ते सर्वत्र बोध्यम्।

वर्जमानः, वर्जयमानः, विवर्जिषमाणः, वरीवृज्यमानः ;
वर्जिष्यमाणः, वर्जयिष्यमाणः, विवर्जिषिष्यमाणः, वरीवृजिष्यमाणः ;
वृक्-वृग्-वृजौ-वृजः ; — — —
[1]वृक्तम्-क्तः-क्तवान्, वर्जितम्-तः, विवर्जिषितः, वरीवृजितः-तवान् ;
वर्जः, वर्जः, प्रवर्जी, विवर्जिषुः, वरीवृजः ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**गर्जति**वत् (422) ज्ञेयानि।
[2]वृज्यः, [3]वृजयः, वृजिकः, [4]वर्गः, वर्ग्यः, कवर्गीयः, वासुदेववर्ग्यः-वासुदेववर्गीणः, वासुदेववर्गीयः, [5]एकवर्जम्, [6]वृजिनम्, [7]वृजनम् इमानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम्।

(1624) **"वृजी वर्जने"** (VII-रुधादिः-1461. सक. सेट्. पर.)

'—त्यागे वृतौ च' इति **वोपदेवः**। '—त्यागे' इति **काशकृत्स्नो**ऽपि। '**वृणक्ति वर्जने** वृङ्क्ते यौ वर्जयति वर्जति।' (श्लो. 59) इति **देवः**। '—वरणे' इति **धनपालशाकटायनौ**। 'वृजी —' इति पठित्वा '**वृची वरणे** इति **दौर्गाः**—वर्कः (अदादौ वृक्ते)' इति **क्षीरतरङ्गिण्यां** दृश्यते। '**वृचि** वरणे इति **दुर्गादयः** पठन्ति' इति **मा.धा. वृत्तिः**। **काशकृत्स्न**धातुपाठे '**वृची** हिंसायाम्' इति स्वतन्त्रो धातुः दृश्यते। तत्र रुधादौ इतः पूर्वं 'वृजी वर्जने' इति च पठितम्। **धातुकाव्यव्याख्याने** (3. 3) 'वृची वरणे इति **केचित्**' इत्युक्तम्।

---

1. निष्ठायाम्, '**श्वीदितो** निष्ठायाम्' (7-2-14) इति अनिट्त्वम्, ततश्च 'चोः कुः' (8-2-30) इति कुत्वे रूपमेवम्।
2. 'ऋदुपधाच्च—' (3-1-110) इति क्यप्प्रत्यये रूपमेवम्।
3. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति इक्। **वृजयो** जनपदाः।
4. घञि 'चजोः कु—' (7-3-52) इति कुत्वम्।
5. 'द्वितीयायाञ्च' (3-4-53) इति द्वितीयान्त उपपदे परीप्सायां गम्यमानायां णमुल्प्रत्यये रूपमेवम्। परीप्सा=त्वरा। अत्र निदानं तु 'अनुदात्तं पद**मेकवर्जम्**' (6-1-158) इति निर्देश एव। परीप्सायामिति नानुवर्ततेऽत्र, इति **हरदत्तः**।
6. '**वृजेः** किच्च' (द. उ. 5-53) इति इनच्प्रत्ययः, किच्च भवति। **वृजिनम्**=पापम्। कित्त्वान्न गुणः।
7. 'कृपृवृजि—' (द. उ. 5-26) इति छन्दसि विषये क्युप्रत्यये अनादेशे च रूपमेवम्। **वृजनम्**=निवारणम्, अन्तरिक्षं च।



वर्जकः-र्जिका, वर्जकः-र्जिका, विवर्जिषकः-षिका, वरीवृजकः-जिका ;
वर्जिता-त्री, वर्जयिता-त्री, विवर्जिषिता-त्री, वरीवृजिता-त्री ;
[1]वृञ्जन्-ती, वर्जयन्-न्ती, विवर्जिषन्-न्ती ; —
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**गर्जति**वत् (422) ज्ञेयानि। [2]वृक्तः,[A] [3]प्रवर्ग्यम्, [4]वर्जित्वा, [5]वृजिनम्, वर्णः,[6] इत्यादिकानि रूपाण्यधिकान्यत्रेति **विशेषः**।

(1625) **"वृजी वर्जने"** (X-चुरादिः-1813. सक. सेट्. उभ.)

**आधृषीयः**। तेन णिज्विकल्पः।

'—त्यागे' इति **काशकृत्स्नवोपदेवौ**।

वर्जकः-र्जिका, विवर्जयिषकः-षिका ; वर्जकः-र्जिका, विवर्जिषकः-षिका, वरीवृजकः-जिका ;

वर्जयिता-त्री, विवर्जयिषिता-त्री, वर्जिता-त्री, विवर्जिषिता-त्री, वरीवृजिता-त्री ; इत्यादिकानि रूपाणि ण्यन्ते। ण्यन्तप्रकृतिकसन्नन्ते तु चौरादिक**छर्दयति**वत् (574) ज्ञेयानि। शुद्ध-तत्प्रकृतिकसन्नन्ते यङन्ते च सर्वाणि रूपाणि भौवादिक**गर्जति**वत् (422) बोध्यानि। [B]अपवृक्तः।

(1626) **"वृञ् वरणे"** (V-स्वादिः-1254. सक. सेट्. उभ.)

'भक्तौ वृणीते **वरणे वृणोति वृणुते** वृञः। वृञ आवरणे वा णौ वारयेद् वरते वरेत्॥' (श्लो. 32) इति **देवः**। 'वरणे—**आवरणे**' इति **काशकृत्स्नः**। 'वरणम् स्वीकारश्छादनं वा' इति **धा. का. व्याख्या** (2-68)।

---

1. शतरि, विकरणप्रत्ययस्य शपः 'रुधादिभ्यः श्नम्' (1-3-78) इति श्नमि '**श्नसोरल्लोपः**' (6-4-111) इत्यकारलोपे, अनुस्वारपरसवर्णयोः कृतयोः णत्वे च **रूपमेवम्**।
2. ईदित्त्वात् '**श्वीदितो** निष्ठायाम्' (7-2-14) इति निष्ठायामिडागमनिषेधः।
3. ण्यति, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम्।
4. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः।
5. '**वृजेः** किच्च' (द. उ. 5-13) इति इनच्प्रत्ययः किच्च भवति। कित्त्वान्न गुणः। वृज्यते वृणक्ति वा **वृजिनम्**=पापम्।
6. वृणोति व्रियते वाऽसौ इति वर्णः=श्वेतादिगुणसंज्ञा, ब्राह्मणादीनां वा। **औणादिके** (द. उ. 8-46) नन्प्रत्यये णत्वे च रूपम्।

A. 'संतप्तनद्धवसनाः परिवेग**वृक्ताः**.........॥' धा. का. 3-3
B. '......स्थैर्यं सुदूर**मपवृक्त**वतिप्रभावः॥' धा. का. 3-48

वारकः-रिका, वारकः-रिका, [1]विवरिषकः-विवरीषकः-वुवूर्षकः-र्षिका, [2]वेव्रीयकः-यिका ;

वरिता-वरीता-त्री, वारयिता-त्री, विवरिषिता-विवरीषिता-वुवूर्षिता-त्री, वेव्रीयिता -त्री ;

इत्यादिकानि रूपाणि सर्वाण्यपि क्रैयादिक**वृणाति**वत् (1622) ऊह्यानि। शतरि [3]विवृण्वन्[A]-ती, ण्यन्तात् क्विपि-वाः-वारौ-वारः [[4]वारांनिधिः], [5]प्रावारः,[B] प्रवरः उत्तरासङ्गः, [6]यवेभ्यो गां वारयन्, [7]विवारी, [8]परिवारः-परीवाराः,

---

1. सन्नन्ते 'इट् सनि वा' (7-2-41) इति इडागमविकल्पः। तस्य च '**वृतो** वा' (7-2-38) इति वा दीर्घः। अनिट्पक्षे 'इको झल्' (1-2-9) इति सनः कित्त्वे 'अज्झनगमां सनि' (6-4-16) इति दीर्घे 'उदोष्ठ्यपूर्वस्य' (7-1-102) इति उत्वे, रपरत्वे च 'हलि च' (8-2-27) इति (उपधायाः) इकः दीर्घे च रूपमेवम्।
2. यङन्ते 'रीङ् ऋतः' (7-4-27) इति रीङादेशे रूपमेवम्।
3. शतरि, 'स्वादिभ्यः श्नुः' (3-1-73) इति श्नुप्रत्ययः। यणादेशः।
4. ण्यन्तात् क्विपि **वाः—वारांनिधिः** इति **क्षीरस्वामिना** उक्तम्।
5. प्रोपसृष्टात् '**वृणोते**राच्छादने' (3-3-5) इति आच्छादनेऽर्थे घञ्प्रत्ययः। 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घे **प्रावारः**। आच्छादनादन्यत्र **प्रवरः**-उत्तरासङ्ग इति अबेव। 'अन्यत्रापि बाहुलकात् क्वचिद्विषये **प्रवरा** गौरिति अबेव भवति' इति **हरदत्तः**।
6. '**वारणार्थानां**मीप्सितः' (1-4-27) इति वारणार्थे यवस्य अपादानसंज्ञा भवति। वारणम् प्रवृत्तिविघात इत्यर्थः।
7. णिनिप्रत्यये रूपमेवम्।
8. 'द्वौ वारावय मे **वारो** गवां **वारश्च** सञ्चये। **परिवारस्तु** ण्यन्ताद् बाहुलकेन कर्तरि घञि॥' इति **भोजः** इति **प्रक्रियासर्वस्वे**। **परिवारस्तु**—ण्यन्तात् बाहुलकेन कर्तरि घञ्। अन्यत्र **परीवाराः**=कपयः इति।

A. 'तेजः क्षात्रं **विवृण्वन्तं** दिधक्षन्तमिवानलम्॥' भ. का. 6-40

B. 'यद्युर्विन्ध्यं शरन्मेघैः **प्रावारैः प्रवरै**रिव।' भ. का. 7-53.



परिवारयमाणाः कण्टका वृक्षं स्वयमेव, [1]वृत्यम्[A], [2]वार्यम्, वर्यः, [B]पतिंवरा[3], [4]वराकः, [C]वराकी, [5]वरः, [6]नीवारः, वारम्, [D]अश्ववाराः, निवरः, [7]वर्मा-वर्मी, वार्मिकायणिः, संवर्मयिता, चाक्रवर्मणः, वरितुम्-[E]आवरीतुम्,[8] आपहारवर्मणः, [9]वर्णः, वर्णी-ब्रह्मचारी, ब्राह्मणवर्णी, [10]वरुणः, वारुणी,

---

1. 'एतिस्तुशास्वृ—' (3-1-109) इति क्यप्प्रत्यये तुकि च रूपमेवम्।
2. 'ण्यदपीष्यते' इति **क्षीरस्वामी**। अस्य मूलं मृग्यम्। तन्मते ण्यति रूपमेवम्। **वर्यः** इत्यत्र तु 'अवद्यपण्य**वर्याः**—' (3-1-101) इति निपात्यते अनिरोधेऽर्थे। **वार्यो**ऽन्यः। स्त्रियां **वर्या**।
3. 'संज्ञायां भृतॄवृजि—' (3-2-46) इति खच्। 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुमागमे रूपमेवम्।
4. 'जल्पभिक्षकुट्टलुण्ट**वृञः**—' (3-2-155) इति षाकन्प्रत्ययः। स्त्रियां ङीष्प्रत्यये **वराकी**। स्त्रियां बाहुलकात् क्तिनं बाधित्वाऽयमेव भवति इति **हरदत्तः**।
5. 'ग्रहवृदृ—' (3-3-58) इत्यप्प्रत्ययः। **निवरः** इत्यप्। **निवरा** कन्या। 'लिङ्गकारिकायामबन्तस्य पुंस्त्वानुशासनं प्रायिकम्' इति **न्यासः** (3-3-48)। इति **धातुवृत्तिः**।
6. 'नौ वृ धान्ये' (3-3-48) इति निशब्द उपपदे धान्यविशेषेऽभिधेये घञ्प्रत्ययः। अपोऽपवादः। 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घः। अधान्ये **निवरः**।
7. औणादिके मनिन्प्रत्यये रूपमेवम्। **वर्मी**—इत्यत्र व्रीह्यादित्वात् इनिप्रत्यये रूपमेवम्।
8. '**वृतो** वा' (7-2-38) इति दीर्घविकल्पः।
9. 'कृवृ—' (द. उ.-5-42) इति नप्रत्यये, गुणे रेफात्परस्य नकारस्य णत्वे च रूपमेवम्।
10. 'कृवृ—' (द. उ. 5-52) इत्यादिना उनन्प्रत्यये गुणणत्वयोश्च रूपमेवम्।

A. 'आदित्यस्तेन **वृत्येन** स्तुत्यो गुण्येण सङ्गतः।' भ. का. 6-56.

B. 'विश्वंभरा साम रथन्तराख्यं **पतिंवरा** चापि धनञ्जयश्च।' इति **प्रक्रियासर्वस्वे**।

C. 'मृत्यौ रूपेतात् परिपालये सतीम् एतां **वराकी**मथ सोऽभ्युपैतु वा।' वा.वि. 1-52

D. 'परस्परोत्पीडितजानुभागा दुःखेन निश्चक्रमु**रश्ववाराः**॥' शि. व. 3-66.

E. '**आवरीतु**मिवाकाशं **वरितुं** वीनिवोत्थितम्।' भ. का. 9-24.

वरुणानी, मैत्रावरुण:, [1]वारि, [2]वर्णु:, [3]वृक:, [4]वर्ग:, [5]वरण्ड:, [6]वरणम्, वारण:, वरणा, [7]वरसान:, [8]वरूथ:, [9]वर्वर:-वर्वरी, [10]वरत्रा, [11]वरुत्रम्, [12]वरूष:, [13]वृश:, सन्नन्तात् उमत्यये-विवरिषु:-विवरीषु:-वुवूर्षु:[A] ।

(1627) "**वृञ् आवरणे**" (X-चुरादि:-1814. सक. सेट्. उभ.)

**आधृषीय:** । तेन णिज्विकल्प: ।

'वृञ आवरणे **वा णौ वारयेद् वरते** वरेत् ॥' (श्लो. 32) इति **देव:** ।

वारक:-रिका, विवारयिषक:-षिका, वारक:-रिका, विवरिषक:-विवरीषक:-वुवूर्षक:-र्षिका, वेव्रीयक:-यिका ;

वारयिता-त्री, विवारयिषिता-त्री, वरिता-वरीता-त्री, विवरिषिता-विवरीषिता-वुवूर्षिता-त्री, वेव्रीयिता-त्री ;

---

1. णिजन्तात् औणादिके (द. उ. 1-53) इञ्प्रत्यये रूपम् । वार्यते तदिति **वारि** जलम् ।
2. औणादिके (द. उ. 1-148) णुप्रत्यये रूपमेवम् । वृणोति व्रियते वा **वर्णु:**=नदविशेष: ।
3. 'सृवृभूशुषि—' (द. उ. 3-19) इति कप्रत्ययो भवति किच्च । **वृक:**—श्वापद:, क्षुद्रश्च ।
4. औणादिक: (द. उ. 3-62) गन्प्रत्यय: । **वर्ग:**=संघात: ।
5. औणादिके (द. उ. 5-9) अण्डन्प्रत्यये रूपमेवम् । वृणोति व्रियते वा **वरण्ड:**=काष्ठादिसंघात: ।
6. '**सुयुरुवृञो युच्**' (द. उ. 5-20) इति युच्प्रत्यय: । **वरणम्**=कन्याप्रदानम् । ल्युटि सिद्धमपीदं पदं संज्ञार्थमुणादिष्वपि निष्पादितमिति ज्ञेयम् । 'रूढिशब्दप्रकारा: ताच्छीलिका:' (भाष्यम् 3-2-56) इत्यत्र स्पष्टमिदम् ।
7. औणादिके (द. उ. 5-29) असानच्प्रत्यये रूपमेवम् । **वरसान:**=मनोरथ: ।
8. औणादिक: (द. उ. 6-31) ऊथन्प्रत्यय: । **वरूथ:**=रथगुप्ति: ।
9. 'कॄगॄशॄवृञ्चतिभ्य: ष्वरच्' (द. उ. 8-47) इति ष्वरच्प्रत्यये रूपमेवम् । **बर्वर:**=काम: । स्त्रियां तु ङीषि **बर्वरी**=नदी ।
10. '**वृञश्चित्**' (द. उ. 8-58) इति अत्रन्प्रत्ययो भवति । **वरत्रा**=चर्मरज्जु: ।
11. औणादिके (द. उ. 8. 93) उत्रप्रत्यये रूपमेवम् । **वरुत्रम्**=अभिप्रेतम् ।
12. औणादिके (द. उ. 9-19) ऊषन्प्रत्यये रूपमेवम् । **वरूष:**=भोजनम् ।
13. औणादिके (द. उ. 10-15) शक्प्रत्यये रूपमेवम् । **वृश:**=आर्द्रकम् ।

A. '**संवुवूर्षु:** स्वमाकूतमाशां **विवरिषुर्**हतम्' ।' भ. का. 9-26.



इत्यादिकानि रूपाणि सर्वाण्यपि ण्यन्तं, तत्प्रकृतिकसन्नन्तं विना कैयादिक-**वृणाति**वत् (1622) ज्ञेयानि । ण्यन्ते तत्प्रकृतिकसन्नन्ते च यथासम्भवमूह्यानि ।

(1628) "**वृण प्रीणने**" (VI-तुदादि:-1330. अक. सेट्. पर.)

'**पृण** प्रीणने' इत्यत्र '**वृण** इति दन्त्योष्ठ्यादिरप्यत्र पठितव्य: ।' इति **मा. धा. वृत्ति:** । तथा च **भाष्यम्**—'धात्वन्तरं पृणिवृणी' इति । 'धात्वन्तरम् इति । तौदादिकौ इत्यर्थ:' इति **कैयट:** । **क्षीरतरङ्गिण्यां** नोपात्त: ।

वर्णक:-र्णिका, वर्णक:-र्णिका, विवर्णिषक:-षिका, वरीवृणक:-णिका ;

वर्णिता-त्री, वर्णयिता-त्री, विवर्णिषिता-त्री, वरीवृणिता-त्री ;

इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**गर्जति**वत् (422) ऊह्यानि । कर्मणि क्त:-वर्णित: ।

(1629) "**वृतु वर्तने**" (I-भ्वादि:-758. अक. सेट्. आत्म.) **वृतादि:** ।

'**वर्तयेद्** भाषणार्थे णौ **वर्तने** शपि **वर्तते** ॥' (श्लो. 96) इति **देव:** ।

वर्तनं=स्थिति: इति **क्षीरस्वामी** ।

[1]वर्तक:-र्तिका, [2]वर्तक:-र्तिका, विवृत्सक:-[3] विवर्तिषक:-षिका, [4]वरीवृतक:-

---

1. 'सार्वधातुकार्धधातुकयो:' (7. 3. 84) इति गुण: । स च 'उरण् रपर:' (1-1-51) इति रेफपरो भवति । एवमुत्तरत्रापि ऊह्यम् ।
2. '**वर्तका** शकुनौ प्राचाम्' (वा. 7. 3. 45) इति निपातनात् शकुनौ वाच्ये 'प्रत्ययस्थात्—' (7-3-44) इति इत्वं न भवति; **वर्तका** लट्वाख्य: शकुनि: । **उदीचां तु वर्तिका** इत्येव । **वर्त्तिका**—दीपस्य दशा ।
3. '**वृद्भ्य:** स्यसनो:' (1-3-92) इति वा परस्मैपदम् । 'न **वृद्भ्यश्च**तुर्भ्य:' (7-2-59) इति **वृतादिभ्य:** सकारादेरार्धधातुकस्य परस्मैपदेषु इडभावे, झलादे: सन: 'हलन्ताच्च' (1-2-10) इति कित्वात् न गुण: । "'न **वृद्भ्य:** चतुर्भ्य:' (7-2-59) इत्यत्र **भाष्यवार्तिकयो:**—'सिद्धं तु **वृतादीना**मात्मनेपदेन समानपदस्थस्येड्वचनात्' इत्युक्तत्वात् क्तपरेऽपि सादौ परस्मैपदलुकि च इट: प्रतिषेधो भवति ।" इति **धातुवृत्ति:** । यदा तु **विवृत्सति** इति निष्पाद्य तदन्तात् क्तो विवक्ष्यन्ते तदा **विवृत्सक:** इत्यादीनीति बोध्यम् । यदा तु **विवर्तिषते** इति निष्पाद्य, तदन्तात् क्तोविवक्ष्यन्ते, तदा **विवर्तिषक:** इत्यादि भवति । एवं सन्नन्ते सर्वत्र रूपद्वयं बोध्यम् ।
4. '**रीगृत्वत:**' (वा. 7-4-90) इति रीगागम इति **मा. धा. वृत्तौ** । वस्तुत: '**रीगृदुपधस्य च**' (7-4-90) इति सूत्रेण अभ्यासस्य रीगागमे रूपमेवम् इति ज्ञेयम् ।

तिका ; वर्तिता-त्री, वर्तयिता-त्री, विवर्तिषिता-त्री, विवृत्सिता-त्री, वरीवृतिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिकतृप्यतिवत् (770) ऊह्यानि । [1]वृत्तम्-[A]त्तः, वर्तितम्-तः, [2]नीवृत्-उपावृत् , [3]निर्वर्त्स्यन्[B] [C]वर्तिष्यमाणः, [4]वर्तिष्णुः,[D] [5]वनवर्ती, [6]व्यावर्वर्ती, [7]वृत्यम्, वार्त्तः [8]समावर्तनीयः, वृत्त्वा, [9]आर्यावर्तः वर्तित्वा,

---

1. 'णेरध्ययने **वृत्तम्**' (7-2-26) इति ण्यन्तस्य निष्ठायाम् अध्ययनार्थे इडभावो णिलुक् च निपात्यते । तेन **वृत्तो** गुणो देवदत्तेन, **वृत्तं** पारायणं देवदत्तेन । अन्यत्र **वर्तित**मिति । "**वृति**रयमकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति । 'तेन **निर्वृत्तं**' (4-2-68; 5-1-79) इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो दृश्यते । तद्वदिहापि ण्यर्थवृत्तेरेव च **वृतेः** '**वृत्तो** गुणो देवदत्तेन' इति भविष्यति; निपातनमनर्थकम् ? तत्क्रियते–यदापि णिचैव ण्यर्थोऽभिधीयते, तदा-**वर्तित**मित्यध्ययने मा भूदिति **केचित्**। **अपरे** तु-**वर्त्तितो** गुणो देवदत्तेन इत्यपि इच्छन्ति ।" इति **काशिकावृत्तिः** (7-2-6)। शुद्धे तु धातोः उदित्त्वादस्य क्त्वायां वेट्कत्वात् 'यस्य विभाषा' (7-2-15) इतीट्प्रतिषेधः।
2. क्विपि, संहितायां विषये '**नहिवृति**—' (6-3-116) इति पूर्वपदस्य दीर्घो भवति । **नीवृत्**=जनपदः, **उपावृत्**=उपावृत्तिः ।
3. '**वृद्भ्यः स्य**सनोः' (1-3-92) इति स्यप्रत्यये विवक्षिते वा परस्मैपदम् । तेन रूपद्वयम् ।
4. 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृ**तु**—' (3-2-136) इति तच्छीलादिषु कर्तृषु इष्णुच्प्रत्ययः ।
5. वने वर्तन्ते इति, 'व्रते' (3-2-80) इति णिनिप्रत्ययः ।
6. 'कर्मव्यतीहारे णच् स्त्रियाम्' (3-3-43) इति णच्प्रत्ययः । तदन्तात् 'णचः स्त्रियामञ्' (5-4-14) इत्यञ् । तदन्तात् 'टिड्ढाणञ्—' (4-1-15) इति ङीप् । **'वार्त्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः** ।
7. 'ऋदुपधात्—' (3-1-110) इति क्यप्प्रत्ययः । **वृत्तिरस्त्यस्याम्** इत्यर्थे '**वृत्तेश्च**' (वा. 5-2-101) इति णप्रत्ययः ।
8. समावृत्यतेऽस्मादिति **समावर्तनीयः**=गुरुः । 'बाहुलकात् अपादाने अनीयर्' इति **प्रक्रियासर्वस्वे** ।
9. आर्याः वर्तन्ते यत्रेति अधिकरणे घञ्प्रत्ययः । **आर्यावर्तः** पुण्यभूमिः ।

A. '**उद्वृत्त**नयनो भिन्नान् मन्त्रिणः स्वान् व्यसर्जयत् ॥' भ. का. 9-16.
B. 'रामोऽपि हतमारीचो **निवर्त्स्यन्** खरनादिनः ।' भ. का. 6-5.
C. '**वर्त्तिष्यमाण**मात्मानं सीतापत्युरिवान्तिके ।' भ. का. 8-68.
D. 'निराकरिष्णवो भानुं दिवं **वर्तिष्णवो**ऽभितः ।' भ. का. 7-3.



वृत्वा[1], ल्यपि-निर्वर्त्य,[A] [2]हस्तवर्तं वर्तयन् , [3]वर्तिः, [4]वर्तनिः वर्तनी, [5]वर्तिका, [6]वर्त्म, [7]वृत्रः ; इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्ति ।

(1630) " **वृतु वरणे** " (IV-दिवादिः-1160. सक. सेट्. आत्म.) **वृतादिः** ।

'**केचित्** पूर्वत्र वाग्रहणमस्यादिं पठित्वा (कृत्वा) 'वावृतु वरणे' इत्याहुः' इति **धा. का. व्याख्या** (2-60) । अन्यत्सर्वं पूर्वधातौ (1591) द्रष्टव्यम् । **धातुवृत्तौ 'वृतु —'** इत्येव उक्तम् । **'वरणे श्यनि वृत्येत'** इति **देवः** पपाठेति **पुरुषकार** (श्लो. 131) वचनादुन्नीयते । सांप्रतं **देवे** पाठागमभ्रंशान्नोपलभ्यते ।

वर्तकः-र्तिका, वर्तकः-र्तिका, विवर्तिषकः-षिका, वरीवृतकः-तिका ;
वर्तिता-त्री, वर्तयिता-त्री, विवर्तिषिता-त्री, वरीवृतिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**वर्षति**वत् (1054) ज्ञेयानि । [8]वृत्तम् , निष्ठायाम्-वृत्तः वृत्तवान् , क्यपि-[9]वृत्यम् , [10]वृत्त्वा-वर्तित्वा[B], इमानि रूपाण्यधिकानि इति विशेषः ।

---

1. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । तेन रूपद्वयं बोध्यम् ।
2. ण्यन्तादस्मात् 'हस्ते **वर्त्ति**ग्रहोः' (3-4-39) इति हस्तवाचिनि करणे उपपदे णमुल् । **हस्तवर्तं** वर्त्तयन्, हस्तेन वर्त्तयन् । एवं **करवर्त्तम्**, इत्यादि च ।
3. 'हृपिशिरुहिवृ**ति**—' (द. उ. 1-47) इति इन्प्रत्ययः । वर्तते वृत्यते वा **वर्त्तिः**-द्रव्यम्, चेलवेष्टनं दीपाङ्गं च ।
4. '**वृतेः**' (द. उ. 1-6) इति अनिप्रत्यये रूपमेवम् । वर्तन्तेऽनेनेति **वर्त्तनिः**=मार्गः । 'स्तोत्रे **वर्त्तनिः**, उञ्छादित्वात् (6-1-160) अन्तोदात्तः' इति **श्वेतवनवासी** । **वर्तनी** इति तु ल्युडन्तात् स्त्रियां टित्त्वेन ङीपि बोध्यम् । **वर्तनी** एकपदी ।
5. '**वृते**स्तिकन्' (द. उ. 3-28) इति तिकन्प्रत्ययः । **वर्त्तिका**=पक्षिजातिः । '**वर्त्तिका**=व्याख्याग्रन्थविशेषः, शकुनिविशेषश्च' इति **श्वेतवनवासी** । वर्त्तिकैव **वार्त्तिकम्** ।
6. औणादिके (द. उ. 6-73) मनिन्प्रत्यये रूपमेवम् । 'भूतेऽपि दृश्यन्ते' (3-3-2) इति भूतेऽयं प्रत्ययः । वृत्तं तत् इति **वर्त्म** पन्थाः, इतिवृत्तं च ।
7. औणादिके (द. उ. 8-31) रक्प्रत्यये रूपमेवम् । **वृत्रः**=दानवः, वायुश्च ।
8. धातोरुदित्त्वेन क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीट्प्रतिषेधः ।
9. 'ऋदुपधात्—' (3-1-110) इति क्यप्प्रत्ययः ।
10. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । तेन रूपद्वयं बोध्यम् ।

A. 'तस्य **निर्वर्त्यं** कर्तव्यं सुग्रीवो राघवाज्ञया ।' भ. का. 6-145.
B. 'निकुञ्जे तस्य **वर्त्तित्वा** रम्ये प्रक्ष्वेदिताः परम् ।' भ. का. 7-103.

(1631) "**वृतु भाषार्थः**" (X-चुरादिः-1782. अक. सेट्. उभ.)

**आस्वदीयः ।**

'**वर्तयेद् भाषणार्थे णौ** वर्तने शपि वर्तते ॥' (श्लो. 96) इति **देवः** । '**भासार्थः**' इति **क्षीरस्वामिशाकटायनादयः** । '—दीप्तौ' इति **वोपदेवः** । 'तथा च **क्षीरस्वामी**—'भासा दीप्तिरर्थो येषां ते भासार्थाः' इति **मा. धा. वृत्तौ** । **क्षीरतरङ्गिण्यां** तु नायं पाठ उपलभ्यते । उदित्करणात् णिचो वैकल्पिकत्वम् इति ज्ञेयम् ।

वर्तकः-र्तिका, विवर्तयिषकः-षिका, वर्तकः-विवर्तिषकः-वरीवृतकः-तिका ; वर्तयिता-त्री, विवर्तयिषिता-त्री, वर्तिता, विवर्तिषिता, वरीवृतिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**जासयति**वत् (596) ऊह्यानि । यङन्ते सर्वत्र '**रीगृदुपधस्य**—' (7-4-90) इति रीगागमः ।

(1632) "**वृधु वृद्धौ**" (I-भ्वादिः-759. सक. सेट्. आत्म.)

'तदेव रूपं भाषार्थे **वृधेर्वृद्धौ** तु वर्धते ।' (श्लो. 124) इति **देवः** । वर्धकः-र्धिका, वर्धकः-र्धिका, विवर्धिषकः-षिका, विवृत्सकः-त्सिका, वरीवृधकः-धिका ; वर्धिता-त्री, वर्धयिता-त्री, विवर्धिषिता-विवर्त्सिता-त्री, वरीवृधिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**वृतु**(1629)धातुवत् ऊह्यानि । [1]वर्द्धनः, [2]वर्धिष्णुः, वृद्धः, वर्धिष्ठः, वर्धीयान्, [3]वृद्धिः, वार्धुषिकः, [4]वर्धमानः,

1. '**नन्दिग्रहिपचादिभ्यः**—' (3-1-134) इति नन्द्यादित्वात् संज्ञायां कर्तरि ल्युः । एवम् **आनन्दवर्धनः** इत्यत्रापि कर्मण्यणं बाधित्वा ल्युरेव ।
2. तच्छीलादिषु कर्तृषु '**अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधु**—' (3-2-136) इति **इष्णुच्**प्रत्ययः ।
3. वृद्धिनिमित्तं द्रव्यम् **वृद्धिः** तादर्थ्यात् ताच्छब्द्यम् । '**स्त्रियां क्तिन्**' ... '**क्तिच्क्तौ च**—' (3-3-74) इति संज्ञायां क्तिच् । यद्वा क्तिन् । '**वृद्धिरादैच्**' (1-1-1) इत्यत्र **वृद्धिशब्दस्तु** संज्ञात्वेऽपि क्तिन्नन्त एव, न क्तिजन्त इति पस्पशायां **भाष्ये** प्रतिपादितत्वात् स्पष्टम् ।
4. '**ताच्छील्यवयोवचनशक्तिषु**—' (3-2-129) इत्यादिना यथासम्भवमर्थत्रयेऽपि चानश्प्रत्ययः । **वर्धमानः** त्रिविक्रमः । '**रूढिशब्दप्रकाराः ताच्छीलिकाः**' (**भाष्यम्** 3-2-56) इति वचनात् रूढोऽयम् ।



[1]वृधसानः, [2]वर्ध्रम् इत्यादिकानि रूपाण्यस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1633) "**वृधु भाषार्थः**" (X-चुरादिः-1783. अक. सेट्. उभ.) **आस्वदीयः** ।

'छेदने पूरणे चार्थे वर्धे**र्वर्धयतीति णौ** ॥ (श्लो. 123) इति **देवः** । वर्धकः-र्धिका, विवर्धयिषकः-षिका, वर्धकः-र्धिका, विवर्धिषकः-षिका, वरीवृधकः-धिका ; वर्धयिता-त्री, विवर्धयिषिता-त्री, वर्धिता-त्री, विवर्धिषिता-त्री, वरीवृधिता-त्री; इत्यादिकानि रूपाणि सर्वाणि चौरादिक**जासयति**वत् (596) ज्ञेयानि । णिजभावपक्षे यङन्ते सर्वत्र अभ्यासस्य रीगागमो भवतीति विशेषः ।

(1634) "**वृश वरणे**" (IV-दिवादिः-1226. सक. सेट्. पर.)

वर्शकः-र्शिका, वर्शकः-र्शिका, विवर्शिषकः-षिका, वरीवृशकः-शिका ; वर्शिता-त्री, वर्शयिता-त्री, विवर्शिषिता-त्री, वरीवृशिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**कुस्यति**वत् (254) ज्ञेयानि । [3]वृशः, अतिशयेन वृशः-वृशिष्ठः, वृशीयान् ।

(1635) "**वृष शक्तिबन्धने**" (X-चुरादिः-1705. सक. सेट्. आत्म.)

**आकुस्मीयः ।**

'**शक्तौ वर्षयते**, सेके वर्षेत्, स्नेहे तु वर्षते ॥' (श्लो. 176) इति **देवः** । '—**शक्तिबन्धनम्**=प्रजननसामर्थ्यम्' इति **क्षीरस्वामी** । **धातुवृत्तौ केशवस्वामिनाम्नोद्ध्रियतेऽयं** पाठः । '—शक्तिसंबन्धने' इति **मैत्रेयः** । 'धृष—' इत्येके ।

वर्षकः-र्षिका, विवर्षयिषकः-षिका ; वर्षयिता-त्री, विवर्षयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**चर्चयति**वत् (507) विशेषरूपाणि विना ज्ञेयानि ।

1. वर्धते इति **वृधसानः** गर्भः । '**ऋञ्जिवृधि**—' [द. उ. 5-30] इत्यसानच्-प्रत्ययः । प्रत्ययस्य कित्वान्न गुणः ।
2. वर्धतेऽम्भसा स्पष्टम् इति **वर्ध्रम्** चर्मच्छेदः । '**वृधिवपिभ्यां रन्**' [द. उ. 8-45] इति रन्प्रत्ययः ।
3. '**इगुपधज्ञाप्रीकिरः कः**' (3-1-135) इति कर्तरि कप्रत्यये रूपमेवम् । **वृशः**=यवसः ।

(1636) " **वृषु सेचने** " (1-भ्वादिः-706. सक. सेट्. पर.) [अ]

'........सेके वर्षेत्, स्नेहे तु वर्षते ॥' (श्लो. 176) इति **देवः** ।

'—हिंसासंक्लेशनयोः' इति **धातुवृत्तिः** ।

वर्षकः-र्षिका, वर्षकः-र्षिका, विवर्षिषकः-षिका, वरीवृषकः-षिका ;
वर्षिता-त्री, वर्षयिता-त्री, विवर्षिषिता-त्री, वरीवृषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिकपर्षतिवत् (1054) ज्ञेयानि । [1]वर्षम् , [2]वृषः, [3]प्रवर्षुकः[A], [4]प्रावृट्-उपावृट्-वृषौ-वृषः, [5]वृष्यम्[B]-वर्ष्यम् , [6]वर्षणम् , वृष्ट्वा-वर्षित्वा, [7]वृष्टिः, [8]वृषणः, [9]वृष्णिः, [10]वृषा,

---

[अ] अयं धातुः सकर्मकः । कर्मणः प्रसिद्धत्वात्तु न प्रयुज्यते । यथा 'मेघो **वर्षति**' इत्यत्र अनुक्तमपि जलरूपं कर्म गम्यते । यदि जलातिरिक्तं कर्म स्यात्, तदा प्रयुज्यते कर्म 'पार्थः शरान् **वर्षति**' इति ।

1. वर्षतीति—**वर्षम्** । 'अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' (वा. 3-3-56) इति अच्प्रत्ययः । **वर्षा**=ऋतुः । "अजन्तस्य पुंस्त्वं प्रायिकम् । 'वर्षोऽस्त्री' इति दर्शनाद् घञपि" इति **प्र. सर्वस्वे** ।
2. '**इगुपध**ज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः ।
3. 'लषपतपदस्थाभूवृष—' (3-2-154) इति तच्छीलादिषु कर्तृषु उकञ्प्रत्यये रूपमेवम् । **प्रवर्षुकः**=पर्जन्यः ।
4. सम्पदादित्वात् स्त्रियां क्विप्प्रत्यये संहितायां विषये '**नहिवृतिवृषि**—' (6-3-116) इति उपसर्गस्य दीर्घः ।
5. ऋदुपधत्वाच्चित्ये क्यपि प्राप्ते 'विभाषा **कृवृषोः**' (3-1-120) इति विकल्पेन क्यप्प्रत्ययः । तेन रूपद्वयं बोध्यम् । वृषाय हितम् इत्येतस्मिन् तद्धितार्थे 'खलयवमाषतिल**वृष**—' (5-1-7) इति यत्प्रत्ययः ।
6. '**वृषभो वर्षणात्**' (पस्पशायां **महाभाष्ये** 1-1-1) इति **भाष्यकार**प्रयोगात् ल्युडपि भवति । नपुंसके क्तप्रत्ययस्य पाक्षिकोऽपवादोऽयम् ।
7. 'तितुत्र—' (7-2-9) इति निषेधात् इडागमो न भवति ।
8. बाहुलकात् औणादिके क्युन्प्रत्यये, णत्वे च रूपमेवम् ।
9. '**सृवृषिभ्यां** कित्' [द. उ. 1-19] इति निप्रत्ययः किच्च भवति । तेन रूपमेवम् । वर्षतीति **वृष्णिः**=यदुदेववंशः, मेघो वा ।
10. 'कनिन् युवृषि—' [द. उ. 6-51] इति कनिन्प्रत्यये रूपमेवम् । **वृषा**=महेन्द्रः वृषभश्च । महेन्द्रादिः, नभश्च इति **केचित्** ।

A. 'जग्मुः प्रसादं द्विजमानसानि यौ**प्रवर्षुका** पुष्पचयं बभूव ।' भ. का. 2-37.
B. '**धर्मकृत्यरतां नित्यमवृष्य**फलभोजनाम् ।' भ. का. 6-63.



[1]वृषभः, [2]वृषलः, वृष्टो देवः, इमानि विशेषरूपाणि ।

(1637) " **वृहू उद्यमने** " (VI-तुदादिः-1347. अक. वेट्. पर.)

'**उद्यमः**=उद्धरणम्' इति **क्षीरस्वामी** । दन्त्योष्ठ्यादिः इति **सर्वे** । **केचित्** 'बृहू पवर्गादिः' इति । **क्षीरतरङ्गिण्यामपि** '**बृहू**' इत्येव दृश्यते ।

वर्हकः-र्हिका, वर्हकः-र्हिका, विवर्हिषकः-[3]विवृक्षकः-क्षिका, वरीवृहकः-हिका ;
वर्हिता-त्री, वर्हयिता-त्री, विवर्हिषिता-त्री, विवृक्षिता-त्री, वरीवृहिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**दर्हति**वत् (868) ज्ञेयानि । [4]वृढः-वृढवान् , [5]वर्हित्वा-वृढ्वा इमानि रूपाण्यधिकान्यत्रेति विशेषः । '**वृहु**' इति उदित्पक्षे क्त्वायामेवेड्विकल्पः इति विशेषः ।

(1638) " **वृ वरणे** " (IX-क्र्यादिः-1490. सक. सेट्. पर.)

'—वृत्त्यां भृत्याम्' इति **वोपदेवः** । **प्वादिः, ल्वादिश्च** ।

'**वृवृ**ञोरञितो धातो**र्वृणाति** वरणे भवेत् ।
वृणाति च वृणीते च वृञस्तत्रार्थ इष्यते ॥' (श्लो. 37) इति **देवः** ।

अत्र **पुरुषकार**स्त्वाह—" वृ वरणे, वृञ् वरणे, .... .... ....
तत्र चाद्यं (वृ इत्यस्य) पवर्गतृतीयादिं **बहवः** पठन्ति । वृ भरणे इति **स्वामिशाकटायनौ** " इति । **धातुवृत्तौ** तु 'आद्यशब्देन ञित् वृणातिरुच्यते । **स्वामिशाकटायन**ावप्येवं पठित्वा भरणार्थत्वमाहतुः' इति । **क्षीरतरङ्गिण्यां** मुद्रित**शाकटायन**धातुपाठे चोभयत्र दन्त्योष्ठ्यादिपाठ एवोपलभ्यते । 'वृञ् वरणे' इति पठित्वा, 'भरणे इत्यप्येके' इति **धा. का. व्याख्यायाम्** (3-6) ।

---

1. '**ऋषिवृषिभ्यां** कित्' (द. उ. 7-19) इत्यभच्प्रत्यये रूपमेवम् । **वृषभः**=गोपतिः, युवा वा । वायुः इति **केचित्** ।
2. '**वृषादिभ्यश्चित्**' (द. उ. 8-109) इति कलप्रत्ययः । **वृषलः**=शूद्रः ।
3. ऊदित्त्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति वलादेरार्धधातुकस्य विकल्पेन इडागमः । तेन सन्नन्ते सर्वत्र रूपद्वयं बोध्यम् । '**हलन्ताच्च**' (1-2-10) इति सनः कित्त्वान्न गुणः ।
4. निष्ठायाम् 'यस्य विभाषा' (7-2-15) इति इण्निषेधः ।
5. क्त्वायाम् 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणः । इड्विकल्पात् रूपद्वयं ज्ञेयम् ।

वारकः-रिका, वारकः-रिका, विवरीषकः-विवरिषकः-वुवूर्षकः-र्षिका, वोवुरकः-रिका;
वरिता-वरीता-त्री, वारयिता-त्री, विवरिषिता-विवरीषिता-वुवूर्षिता-त्री, वोवुरिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि जौहोत्यादिक**पिपर्ति**वत् (1055) ज्ञेयानि । [1]वर्विः ।

(1639) "**वृञ् वरणे**" (IX-क्र्यादिः-1486. सक. सेट्. उभ.)

**प्वादिः, ल्वादिश्च ।**

'वृवृञोरञितो धातोर्वृणाति वरणे भवेत् ।
**वृणाति च वृणीते वृञस्तत्रार्थ** इष्यते ॥' (श्लो. 37) इति **देवः** ।
'वृञ्-इति नन्दी' इति **क्षीरस्वामी** ।

वारकः-रिका, वारकः-रिका, विवरिषकः-विवरीषकः-वुवूर्षकः-र्षिका, वोवुरकः-रिका;
वरिता-त्री, वारयिता-त्री, विवरिषिता-विवरीषिता-वुवूर्षिता-त्री, वोवुरिता-त्री ;
इत्यादिकानि रूपाणि सर्वाणि जौहोत्यादिक**पिपर्ति**वत् (1055) ऊह्यानि ।
शतरि-[2]वृणन्-न्ती, शानचि-वृणानः, वारयमाणः, [3]वरः, [4]वूर्णिः, [5]वरुणः,
इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1640) "**वेञ् तन्तुसन्ताने**" (I-भ्वादिः-1006. सक. अनि. पर.)

**यजादिः ।**

'वयने वयतीत्येव **तन्तुसन्तान** इष्यते ॥' (श्लो. 10) इति **देवः** ।
'व्याप्तौ छादने चाह **भट्टिः**' इति **धा. का. व्याख्या** (2-43) ।

---

1. 'वृदृभ्यां विन्' (द. उ. 1-23) इति विन्प्रत्यये रूपमेवम् । वृणातीति **वर्विः**=धात्री । अत्र "'वृ' इत्यस्य 'पृ' इति **नारायणश्वेतनवासिनौ** । **अन्ये** तु'वृ' इत्येव पठन्ति" इति तत्र **टिप्पण्यामुक्तम्** ।
2. शतरि 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः । 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे '**प्वादीनां ह्रस्वः**' (7-3-80) इति ह्रस्वे च रूपमेवम् । एवं शानजन्तेऽपि प्रक्रिया ऊह्या ।
3. '**ॠदोरप्**' (3-3-57) इति भावे अप्प्रत्ययः । घञोऽपवादः ।
4. '**ॠल्वादिभ्यः**—' (वा. 8-2-44) इति निष्ठातकारस्य नकारादेशे णत्वे च रूपमेवम् ।
5. 'कृवृदृ—' (द.उ. 5-52) इति उनन्प्रत्यये रूपम् । 'वृ' इति **स्वामिसम्मतः** पाठः । **द. उ. वृत्त्याम् 'वृ'** इत्येव दृश्यते ।



[1]वायकः-यिका, [2]वायकः-यिका, [3]विवासकः-सिका, [4]वावायकः-यिका ;
वाता-त्री, वाययिता-त्री, विवासिता-त्री, वावायिता-त्री ;
[5]वयन्-न्ती, वाययन्-न्ती, विवासन्-न्ती ;—
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कायति**वत् (263) ज्ञेयानि । [6]तन्तुवायः, [7]प्रवाणी-निष्प्रवाणिः, [8]उतम्-उतः-उतवान्, प्रोतः, [9]प्रवयणम्, उत्वा, [10]प्रवाय, [11]ऊतिः, [12]विः=पक्षी, वेमा । [13]आवायः, [14]पटोत् ।

---

1. 'आदेच उपदेशे—' (6-1-45) इत्याकारः । 'आतो युक्—' (7-3-33) इति युगागमः ।
2. ण्यन्ते सर्वत्रादन्तलक्षणपुगपवादः 'शाच्छासाह्वाव्यावेपां युक्' (7-3-37) इति युगागमः ।
3. धातोरनिट्त्वात् रूपाण्येवम् । सन्नन्तेऽभ्यासस्येकारः ।
4. यङन्ते सर्वत्र औपदेशिकस्य एकारस्य आकार इति विशेषः । नच वाच्यम् । '**ग्रहिज्यावयि**—' (6-1-16) इत्यनेन यङन्ते ङित्त्वात् कथं न सम्प्रसारणमिति ; यतोऽत्र '**वयि**' ग्रहणात् '**वेञो वयिः**' (2-4-41) इति प्राप्तस्य वय्यादेशविशिष्टस्य **वेञ** एव ग्रहणम् ; न त्वस्येति यङन्ते ङित्त्वेऽपि प्रत्ययस्य न सम्प्रसारणमिति ज्ञेयम् । क्त्वादिषु तु यजादित्वात् सम्प्रसारणमिति विशेषः ।
5. '—अशिति' (6-1-45) इत्युक्तत्वात् शतरि न आकारः । अयादेशः ।
6. तन्तून् वयति इति **तन्तुवायः** । 'ह्वावामश्च' (3-2-2) इति कर्मणि उपपदे अण् प्रत्ययः । 'आतोऽनुपसर्गे कः' (3-2-3) इत्यस्यापवादः ।
"आत्वभाविन एजन्तात् आकारान्तनिमित्तकः । [(6-1-45) ।
प्रत्ययो ज्ञाप्यते सर्वो "ह्वावामश्चे" (3-2-2) त्यणा पुनः ॥" इति **पदमञ्जरी**
7. नवं वासः प्रवयन्त्यस्यामिति **प्रवाणी** तन्तुवायशलाका । 'ल्युट् च' (3-3-115) इति अधिकरणे ल्युट् । टित्वात् स्त्रियां ङीप् ।
8. निष्ठायाम् 'वचिस्वपियजादीनाम् किति' (6-1-15) इति सम्प्रसारणे, पूर्वरूपे च रूपमेवम् । एवं क्त्वाप्रभृतिष्वपि ज्ञेयम् ।
9. **प्रवयणम्** इत्यत्र ल्युट् । 'कृत्यचः' (8-4-29) इति णत्वम् ।
10. 'न ल्यपि' (6-1-49) इति सम्प्रसारणनिषेधः ।
11. '**ऊतियूति**—' (3-3-97) इति क्तिन्नन्तो निपातितः । **ऊतिः**=वयनम्—इति **क्षीरस्वामी** । **काशिकादिषु** तु अवतेरूठि स्वरार्थं निपातनम् इत्युक्तम् ।
12. '**वेञो** डित्' (द. उ. 1-62) इति इण्प्रत्ययः । प्रत्ययस्य डित्वात् टिलोपः । नीडं—वयतीति **विः** पक्षी ; तन्तुवायो वा ।
13. 'अवहाराधारावायानामुपसंख्यानम्' (वा. 3-3-122) इति आङ्पूर्वकादस्मात् घापवादो घञ् । आवयन्ति अस्मिन् इति **आवायः**=तन्तुवायवाटिका ।
14. पटं वयतीति **पटोत्** । 'क्विप् च' (3-2-76) इति क्विप् । सम्प्रसारणे पूर्वरूपे च 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक् । इति **प्रक्रियासर्वस्वम्** ।

(1641) "**वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु**"

(I-भ्वादि:-877. सक. सेट्. उभ.)

'वादित्रं वाद्यभाण्डम्, तस्य वादनार्थग्रहणम्' इति **क्षीरस्वामी**। 'वेणृ ज्ञानचिन्तानिशामनेषु' इति **काशकृत्स्नः**। तत्र भ्वादौ इतः पूर्वं णकारदण्डके '**वेणृ** गतिप्रेषणाश्लेषणेषु' इति दृश्यते। 'उत माता महिषमन्ववेनत्' (तै. सं. 3-2-113) इत्यत्र **भाष्यकारा**स्तवर्गपञ्चमान्तममुं पेठुः। 'वेनृ— इत्येके' इति पक्षमवलम्ब्य **धा. का. व्याख्यायां** (2-77) शानचि प्रयोगः दृश्यते- 'प्रबुन्धवेणीजव**वेनमाना**....' इति।

वेणकः-णिका, वेणकः-णिका, विवेणिषकः-षिका, वेवेणकः-णिका;
वेणिता-त्री, वेणयिता-त्री, विवेणिषिता-त्री, वेवेणिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**केलति**वत् (262) ऊह्यानि। [1]वेणिः, वेणिका, [2]वेणी, [3]वीणा इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1642) "**वेथृ याचने**" (I-भ्वादि:-34. द्विक. सेट्. आत्म.)

'वेदृ—' इति **कौशिकः** इति **मा. धा. वृत्तिः**। धातुरयं द्विकर्मकः इति च तत्रोक्तम्।

वेथकः-थिका, वेथकः-थिका, विवेथिषकः-षिका, वेवेथकः-थिका;
वेथिता-त्री, वेथयिता-त्री, विवेथिषिता-त्री, वेवेथिता-त्री;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**केलति**वत् (262) ज्ञेयानि।

(1643) "**टु वेपृ कम्पने**" (I-भ्वादि:-367. अक. सेट्. आत्म.)

'—चलने' इति **जैन-कातन्त्र-शाकटायन-हेमादयः**।

वेपकः-पिका, वेपकः-पिका, विवेपिषकः-षिका, वेवेपकः-पिका;
वेपिता-त्री, वेपयिता-त्री, विवेपिषिता-त्री, वेवेपिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**केपति**वत् (261) ज्ञेयानि। शानचि

1. औणादिके (द. उ. 1-46) इन्प्रत्यये रूपमेवम्। ततो ण्वुलि स्त्रियां टापि च **वेणिका** इति।
2. 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति ङीष्प्रत्यये रूपम्। **वेणी**=स्त्रीजटा।
3. 'रास्नासास्नास्थूणा**वीणाः**' (द. उ. 5-47) इति (नकारपाठपक्षे) नकारस्य णत्वं अगुणत्वं च निपात्यते। तेन रूपमेवम्। **वीणा**=वल्लकी।



[A]प्रवेपमानः, [1]वेपथुः[B], [2]प्रवेपनम्[C], [3]विपिनम् इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1644) "**वेल कालोपदेशे**" (X-चुरादि:-1881. सक. सेट्. उभ.)

**अदन्तः**।

'काल इत्यपि धातुः इति **मैत्रेयः**' इति **मा. धा. वृत्तिः**।
**धा. का. व्याख्याया**मपि (3-56) एवमेव। '—**कालोपयोगे**' इति **केचित्**। 'कालोपदेशे—काले सन्दर्भे च' इति **काशकृत्स्नः**।

वेलकः-लिका, विवेलयिषकः-षिका; वेलयिता-त्री, विवेलयिषिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**केतयति**वत् (260) ज्ञेयानि।

(1645) "**वेलृ चलने**" (I-भ्वादि:-535. सक. सेट्. पर.)

'**वेलेत्तु चलने** वेलेर्वरणे विलतीति शे॥' (श्लो. 157) इति **देवः**। '—**गतौ**' इति **काशकृत्स्नकातन्त्रौ** पठतः। '**वेल्ल—**' इति पठित्वा वेल्लेर्द्विर्बद्धो लकारः—वेल्लति' इति **क्षीरस्वामी**।

वेलकः-लिका, वेलकः-लिका, विवेलिषकः-षिका, वेवेलकः-लिका;
वेलिता-त्री, वेलयिता-त्री, विवेलिषिता-त्री, वेवेलिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**केलति**वत् (262) ज्ञेयानि।
[4]वेला, [5]वेलनः, 'वेलुः=हस्ताभरणम्' इति **काशकृत्स्नः**।

1. '**द्वितोऽथुच्**' (3-3-19) इति अथुच्प्रत्यये रूपमेवम्।
2. 'न भाभूपूकमिगमिप्यायी**वेपाम्**' (8-4-34) इति निषेधात् कृत्स्थस्य नकारस्य णकारादेशो न भवति।
3. '**वेपि**तुह्योः—' (द. उ. 5-18) इति इनन्प्रत्ययः, किच्च, प्रकृतेः ह्रस्वश्च भवति। **विपिनम्**=गहनम् अब्जं वा। 'अटव्यरण्यं **विपिनं** गहनं काननं वनम्' इत्य**मरः**।
4. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्यये रूपमेवम्। "**वेला** तु '**वेल** कालोपदेशे' (10-165) इत्यस्मात्" इति **क्षीरतरङ्गिण्यां** दृश्यते। तदेव न्याय्यम्।
5. '**चलन**शब्दार्थात्—'(3-2-148) इति ताच्छीलिके युच्प्रत्यये अनादेशे च रूपमेवम्।

A. '**प्रवेपमानो** नितरां स्मरारिमिदं वचो व्यक्तमथाध्युवाच॥' कु. सं. 9.6.
B. 'विलोलतां चक्षुषि हस्त**वेपथुं** भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम्।' भ. का. 11.37.
C. 'नाति**प्रवेपनं** वायोर्मया गोपायिते वने॥' भ. का. 9-107.

(1646) " **वेल्ल चलने** " (I-भ्वादिः-540. अक. सेट्. पर.)

**तरङ्गिण्यां** पाठोऽयं न दृश्यते । **मैत्रेयसम्मतः** पाठः इति **धातुवृत्तिदर्शनात्** ज्ञायते ।

वेल्लकः-ल्लिका, वेल्लकः-ल्लिका, विवेल्लिषकः-षिका, वेवेल्लकः-ल्लिका ;
वेल्लिता-त्री, वेल्लयिता-त्री, विवेल्लिषिता-त्री, वेवेल्लिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**केलति**वत् (262) बोध्यानि ।
[1]वेल्लः, कर्तरि क्तप्रत्यये प्रवेल्लितम्[A] इति ।

(1647) " **वेवीङ् वेतिना तुल्ये** "

(II. अदादिः-1077. सक. सेट्. आत्म.) [अ] **छान्दसः** ।

'—वी(धातु)समानार्थे' इति **हेमचन्द्रः** । 'कान्तिगतिव्याप्तिक्षेपप्रजनखादनेषु' इति **वोपदेवः** ।' इति **पा. धा. समीक्षा** । 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्युक्तेन वेतिना तुल्येऽर्थे इत्यर्थः ।' इति **धा. का. व्याख्याने** (2-52) । 'सेटावात्मनेभाषौ इमौ छान्दसौ' इति **भाष्यवार्त्तिकयोः** स्थितम् (महाभाष्यम् 1-1-6) । नेति **कातन्त्रीयाः** । **पाणिनिस्तु** न विशेषमाह' इति **क्षी. टिप्पण्यां** दृश्यते । '—वेतनातुल्ये कर्मकरवद् व्यवहारे' इति **काशकृत्स्नः** । अयं पाठोऽपपाठ इति **क्षीरस्वामिना** दूषितम् ।

वेवायकः-यिका, वेवायकः-यिका, [2]विवेविषकः-षिका ;
वेवयिता-त्री, वेवाय-यिता-त्री, विवेविषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**दीधीङ्**धातुवत् (845) बोध्यानि ।
[B]वेव्यानः इति शानचि ।

---

[अ] 'दरिद्राजागृदीधीङाम् एकाचां च चिरेर्जिरेः ।
अदन्तोर्णोति**वेवीङां** स्मर्यते नेत् तथा लङेः ॥' इति **वचनात्**
अस्य धातोरनेकाच्त्वात् यङ् न भवति ।

1. संज्ञायां घञि रूपमेवम् । **वेल्लः**=विषम् ।
2. सन्नन्तात् ण्वुलि सन इडागमे द्वित्वादिकेषु कृतेषु उत्तरखण्डे 'यीवर्णयोर्दीधीवेव्योः' (7-4-65) इतीकारलोपे षत्वे च रूपमेवम् ।

A. 'फणीश्वरक्ष्वेलरुधं **प्रवेल्लित**स्रजं मुहुः पेलववातफेलनात् ॥' धा. का. 1-69.
B. 'देवं स्फुरद्दीधितिमम्बुजाक्ष्यो **वेव्यान**मालोक्य विमोहमापुः ॥' धा. का. 2-52.



(1648) " **वेष्ट वेष्टने** " (I-भ्वादिः-255. सक. सेट्. आत्म.)

'**वेष्ट विलुठने**' इति **धा. का. व्या.** (1-34) पाठः अकर्मक इति च । 'वेष्टनम्—ग्रन्थनम्, लोटनम्—परिहाणिश्च [परिणाहश्च (हाणं)]' इति **क्षीरस्वामी** । **काशकृत्स्नः** धातुममुं न पपाठ ।

वेष्टकः-ष्टिका, वेष्टकः-ष्टिका, विवेष्टिषकः-षिका, वेवेष्टकः-ष्टिका ;
वेष्टिता-त्री, वेष्टयिता-त्री, विवेष्टिषिता-त्री, वेवेष्टिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि **गोष्टति**वत् (434) बोध्यानि । यङ्विषये न सारूप्यम् इति ज्ञेयम् । वेवेष्टकः इत्यादिकं यङन्ते सर्वत्र ऊह्यम् ।

(1649) " **वेसृ गतौ** " (I-भ्वादिः-720. सक. सेट्. पर.)

'पिसृ पेसृ' इत्यत्र भ्वादौ '....**वेसृ** इति **सभ्याः** । वेसरः-नासाभूषणम् । [A]वेसरोऽश्वतरः' इति **क्षीरस्वामी** । **धातुवृत्तावपि** 'इह **क्वचित्कोशे** विसृ **वेसृ**....इत्यपि पठ्यते' इत्युक्तम् । 'एते **मैत्रेयादिषु न दृश्येते**' इति चोक्तम् ।

वेसकः-सिका, वेसकः-सिका, विवेसिषकः-षिका, वेवेसकः-सिका ;
वेसिता-त्री, वेसयिता-त्री, विवेसिषिता-त्री, वेवेसिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**पेसति**वत् (1061) ज्ञेयानि ।

(1650) " **वेहृ प्रयत्ने** " (I-भ्वादिः-643. अक. सेट्. आत्म.)

'वेहृ—' **इत्येके** इति **धा. का. व्या.** (1-81) । "दन्त्यौष्ठ्यादिः । केवलौष्ठ्यादिः **इत्येके**," इति **मा. धा. वृत्तिः** ।

वेहकः-हिका, वेहकः-हिका, विवेहिषकः-षिका, वेवेहकः-हिका ;
वेहिता-त्री, वेहयिता-त्री, विवेहिषिता-त्री, वेवेहिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**पेसति**वत् (1061) ज्ञेयानि । [1]वेहत्, गोवेहत् ।

(1651) " **ओ वै शोषणे** " (I-भ्वादिः-921. सक. अनि. पर.)

'गतिगन्धनयोर्वाति **वायतीति तु शोषणे** ।' (श्लो. 10) इति **देवः** ।

---

1. 'संश्वत्तृपद्वेहत्' (द. उ. 6-6) इति क्तिप्रत्यये निपात्यते । तेन रूपमेवम् । **वेहद्**=गर्भोपघातिनी गौः । **गोवेहत्** इत्यत्र तु 'पोटायुवतिस्तोककतिपयगृष्टिधेनु-वशावेहद्—' (2-1-65) इत्यादिना कर्मधारयः ।

A. 'तूर्णं प्रणेत्रा कृतनादमुच्चकैः प्रणोदितं **वेसर**युग्यमध्वनि ।' शि. व. 12-9.

वायकः-यिका, [1]वापकः-यिका, विवासकः-सिका, वावायकः-यिका ;
वाता-त्री, वापयिता-त्री, विवासिता-त्री, वावायिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि विशेषरूपाणि विना भौवादिक**वायति**वत् (1062) ज्ञेयानि । [2]वानम् , [3]वायुः इमे रूपे विशेषेण भवतः ।

(1652) **"व्यच व्याजीकरणे"** (VI-तुदादिः-1293. सक. सेट्. पर.)
अत्र **क्षीरतरङ्गिण्यां** '**व्यच संभवे**' इति पठित्वा '**व्यज** व्याजीकरणे' इति पृथक् धातुत्वेन पठ्यते । किं च '–'**व्याजीकरणे**' लिङ्गाद् घञि कुत्वाभावः–व्याजः' इति च दृश्यते । '—व्याजीकरणे—निमित्ते' इति **काशकृत्स्नः** । **मैत्रेयचन्द्रकाशकृत्स्नशाकटायनहेमादयः** 'व्यच—' इत्येव पठन्ति । '**व्यच**—' इत्येव न्याय्यम् इति **धा. का. व्या.** (2-73) दर्शनाज्ज्ञायते ।
व्याचकः-चिका, व्याचकः-चिका, [4]विव्यचिषकः-षिका, वाव्य[वेवि]चकः-चिका ;
व्यचिता-त्री, व्याचयिता-त्री, विव्यचिषिता-त्री, वाव्य[वेवि]चिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**क्रुथति**वत् (280) **ज्ञेयानि** ।
[5]विचन्-ती, [6]विचिता-त्री,

---

1. णिजन्ते सर्वत्र आदन्तलक्षणः पुगागम इति विशेषः ।
2. 'ओदितश्च' (8-2-45) इति निष्ठातकारस्य नत्वे रूपमेवम् ।
3. '**कृवापा**—' [द. उ. 1-86] इति उण्प्रत्यये रूपमेवम् । वाति वायति वा द्रव्याणि इति **वायुः** । "**भाष्यकार**मते अजेरपि धातोः 'यजिमनि—' (द. उ. 1-134) इत्यादिना बहुलग्रहणाद् युचि 'वा यौ' (2-4-57) इत्यनेन वादेशे '**वायुः**' इति पदं सिद्ध्यति" इति प्रकृतसूत्रे (द. उ. 1-86) **टिप्पण्यामु**क्तम् । तथा च **भाष्ये** 'न तर्हीदानीमिदं 'वा यौ' (2-4-75) इति वक्तव्यम् । वक्तव्यं च । किं प्रयोजनम् ? नेयं विभाषा । किं तर्हि ? आदेशोऽयं विधीयते । 'वा' इत्ययमादेशो भवत्यजेर्यौ परतः—**वायु**रिति" इत्येवं दृश्यते ।
4. सनोऽकृत्त्वात् न सम्प्रसारणम् । '—अनसि' (वा. 1-2-1) इति प्रसज्यप्रतिषेध इति वादिनां मते तु सनोऽपि कित्त्वेन 'ग्रहिज्यावयिव्यधिवष्टि**विचति**—' (6-1-16) इत्यादिना सम्प्रसारणे,पूर्वरूपे च **विविचिषकः-षिका**, इत्यादीनि रूपाणीति बोध्यम्।
5. शतरि 'दिवादिभ्यः—' (3-1-69) इति श्यन । तस्य 'सार्वधातुकमपित्' (1-2-4) इति अपित्सार्वधातुकत्वात् ङिद्वद्भावः । तेन चकारात् किति च संप्रसारणम् भवति । अतो गुणाभावश्च । तेन रूपमेवम् ।
6. '**व्यचेः** कुटादित्वमनसीति वक्तव्यम्' (वा. 1-2-1) इति ङिद्वद्भावात् संप्रसारणमिति ज्ञेयम् । **उरुव्यचाः** इत्यत्र गतिकारकपूर्वस्यापि असुन् । '–अनसि'(वा.1-2-1) इति पर्युदासात् न ङित्त्वम् । **पदमञ्जर्याम् उद्विचिता** इति । **न्यासे**ऽपि एवमेव ।



घञि-[1]व्याचः, [2]विचित्वा इमानि रूपाण्यधिकान्यत्रेति विशेषः । अस्य धातोः ण्यन्ते सर्वत्र व्याचयिता-त्री, इत्येवमादीनि ऊह्यानि ।

(1653) **"व्यथ भयसंचलनयोः"** (I-भ्वादिः-764. सक. सेट्. आत्म.)
**घटादिः**, षित्च । '—**दुःखभयचलनयोः**' इति **काशकृत्स्नः** । '—दुःख-चलनयोः' इति **दुर्गः** । 'दुःखे चाले भये' इति **वोपदेवः** इति **पा. धा. समीक्षा** ।
व्याथकः-थिका, [3]व्यथकः-थिका, विव्यथिषकः-षिका, वाव्यथकः-थिका ;
व्यथिता-त्री, व्यथयिता-त्री, विव्यथिषिता-त्री, वाव्यथिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**क्रुथति**वत् (280) ऊह्यानि ।
[4]अव्यथ्यः[A], [5]अव्याथी, [6]अव्यथी[B], [7]व्यथनः, [8]व्यथा, [9]व्याथं-व्याथम्-व्यथं-व्यथम्,

---

1. घञि कुत्वाभावे रूपमेवम् ।
2. 'न क्त्वा सेट्' (1-2-18) इत्यकित्त्वेऽपि क्त्वः कृत्वाद् '**व्यचेः** कुटादित्वम्–' (वा. 1-2-1) इति ङित्त्वेन संप्रसारणं गुणाभावश्च । तेन रूपमेवम् इति ज्ञेयम् ।
3. धातोरस्य घटादित्वात् ण्यन्ते, '**घटादयो** मितः' (ग. सू. भ्वादिः) इति मित्त्वात् 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वे रूपमेवम् । ण्यन्ते सर्वत्र एवमेव प्रक्रिया ऊह्या ।
4. 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्य**अव्यथ्याः**' (3-1-114) इति कर्तरि क्यप्प्रत्यये निपात्यते । न व्यथते—**अव्यथ्यः** ।
5. '...**व्यथ**वदवसां प्रतिषिद्धानाम्' (ग. सू. 3-1-134) इति ग्रहादिपाठात् णिनिप्रत्यये **अव्याथी** इति रूपं सिद्ध्यति इति **क्षीरस्वामी** । प्रकृतगणसूत्रे '**व्यथ**' इत्यत्र 'व्रज' इत्येव दृश्यते ।
6. 'जिदृक्षिविश्रीण्वमा**व्यथ**—' (3-2-157) इति तच्छीलादिषु कर्तृषु इनिप्रत्यये रूपमेवम् ।
7. तच्छीलादिषु कर्तृषु युच्प्रत्यये रूपमेवम् ।
8. अस्य धातोः षित्वाद् '**षिद्**भिदादिभ्योऽङ् (3-3-104) इति स्त्रियामङ्प्रत्ययः ।
9. णमुलि, 'चिण्णमुलोः—' (6-4-93) इति णौ परत उपधायाः दीर्घः विकल्पेन भवति । तेन रूपद्वयं बोध्यम् ।

A. 'समुत्तरन्ता**वव्यथ्यौ** नदान् भिद्योद्ध्यसन्निभान् ।' भ. का. 6-60.
B. 'न्याय्यं परिभवी ब्रूहि पाप**मव्यथिनं** कपिम् ॥' भ. का. 7-20.

विथुरः, [1]विधुरः इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्ति । शानचि- [A]व्यथ्यमानः ।

(1654) "**व्यध ताडने**" (IV-दिवादिः-1181. सक. अनि. पर.)

'—**ताडनं**—प्रायेण विदारणपर्यन्तम्' इति **धा. का. व्या.** (2-63) ।

व्याधकः-धिका, व्याधकः-धिका, विव्यत्सकः-त्सिका, [2]वेविधकः-धिका ;
व्यद्धा-व्यद्ध्री, व्याधयिता-त्री, विव्यत्सिता-त्री, वेविधिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि प्लीधातुवत् (1081) बोध्यानि । [3]मृगावित्-[B]मर्मावित्-दैत्यावित्-हृदयावित्, व्यद्धा, [4]व्यधः, आव्याधः, [5]आविधम्, विध्यन्,

1. '**व्यथेः** संप्रसारणं धः किच्च' (द. उ. 8-22) इति उरच्प्रत्यये, संप्रसारणे, धातुथकारस्य धकारादेशे च रूपमेवम् । **विधुरः**=चोरः, अनग्निकः, राक्षसश्च । **धातुवृत्ता**वपि एवमेव स्थितम् । "...**व्यथ**धातौ न त्वेतद् युक्तम् । 'त्वमेषां **विथुरा** शवांसि' (ऋ. 6-25-3) 'अतिविद्धा **विथुरेणा** चिदस्रा' (ऋ. 8-96-2) इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात् । यदपि **माधवे**नोक्तम्— 'विदिभिदि ' (3-2-162) इत्यत्र '**व्यथेः** संप्रसारणं च' इति वचनात् कुरचि थान्तं रूपमिति तदतिस्थवीयः । कुरज्विधायके सूत्रे **व्यथे**रुपसंख्यानस्याप्रसिद्धत्वात् । तस्मादिह 'धः किच्च' इति **दशपादी**पाठं पुरस्कुर्वन्तः **प्रसादकारादयो**ऽप्युपेक्ष्याः । कथं तर्हि **विधुर** इति प्रयोगस्य निर्वाह इति चेत्—धुरो विगत इति प्रादिसमासेनेत्यवधेहि । 'समासान्ताः' (5-4-69) इति सूत्रे **वृत्तिपदमञ्जर्यो**स्तथैवोक्तत्वात्।" इति **प्रौढमनोरमाकारः** । एवं **तत्त्वबोधिनीकारो**ऽपि । (द. उ. 8-22) **टिप्पण्य**पीहानुसन्धेया । **काशिकायां** तु (3-2-162) '**व्यधेः** सम्प्रसारणं कुरच्च वक्तव्यः' इति दृश्यते ।
2. यङन्ते 'ग्रहिज्यावयि**व्यधि**—' (6-1-16) इति सम्प्रसारणम् । तच्च 'न सम्प्रसारणे सम्प्रसारणम्' (6-1-37) इति निषेधात् पूर्वस्य वकारस्य न । यकारस्य सम्प्रसारणे पूर्वरूपादिकेषु च कृतेषु रूपमेवम् ।
3. मृगं आविध्यतीति **मृगावित्** । 'ग्रहिज्यावयि**व्यधि**—' (6-1-16) इति संप्रसारणे, 'नहिवृतिवृषि**व्यधि**रुचि—' (6-3-116) इति क्विप्प्रत्ययान्तेषु उत्तरपदेषु पूर्वपदस्य दीर्घः संहितायां विषये । **दैत्यावित्** इत्यादिष्वपि एवमेव प्रक्रिया ज्ञेया ।
4. '**व्यध**जपोरनुपसर्गे' (3-3-61) इति अनुपसर्गे अप्प्रत्ययः । घञोऽपवादः । उपसर्गे तु **आव्याधः** इति ।
5. 'घञर्थे कविधानं स्थास्नापा**व्यधि**—' (वा. 3-3-58) इति अकर्तरि च कारके संज्ञायाम् कप्रत्ययो भवति । घञोऽपवादः । सम्प्रसारणादिकम् । आविध्यन्ति अनेनेत्य**आविधम्** शस्त्रम् ।

A. 'मन्मथायुधसंपात**व्यथ्यमान**मतिः पुनः ॥' भ. का. 4-30.
B. 'तापिञ्छनीकाशरुचिप्रतीचि स्ववैरि**मर्माविधि** पुंसि रागात् ।' वा. वि. 3-21.



[1]व्याधः, णमुलि-व्याधं-व्याधम्[A], [2]विधुः, [3]विधुरः इमानि रूपाण्यधिकान्यत्रेति विशेषः । यगन्ते[B] विध्यमानः आविद्धम्-आविद्धः, आविद्धवान्, विद्धिः, विद्ध्वा ।

(1655) "**व्यय गतौ**" (I-भ्वादिः-881. सक. सेट्. उभ.)

'वित्तत्यागे व्यययति **व्ययति व्ययते गतौ** ।' (श्लो. 150) इति **देवः** ।

व्यायकः-यिका, व्यायकः-यिका, विव्ययिषकः-षिका, वाव्ययकः-यिका ;
व्ययिता-त्री, व्याययिता-त्री, विव्ययिषिता-त्री, वाव्ययिता-त्री ;
व्ययन्[C]-न्ती, व्याययन्-न्ती, विव्ययिषन्-न्ती, वाव्ययन्-न्ती ; —
व्ययिष्यन्-न्ती-ती, व्याययिष्यन्-न्ती-ती, विव्ययिषिष्यन्-न्ती-ती ; —
व्ययमानः, व्याययमानः, विव्ययिषमाणः, वाव्यय्यमानः ;
व्ययिष्यमाणः, व्याययिष्यमाणः, विव्ययिषिष्यमाणः, वाव्ययिष्यमाणः ;
[4]व्यत्-व्ययौ-व्ययः ; — —
व्ययितम्-तः, व्यायितम्-तः, विव्ययिषितः, वाव्ययितः-तवान् ;
व्ययः, प्रव्ययी, व्ययः, विव्ययिषुः, वाव्ययः ;
व्ययितव्यम्, व्याययितव्यम्, विव्ययिषितव्यम्, वाव्ययितव्यम् ;
व्ययनीयम्, व्यायनीयम्, विव्ययिषणीयम्, वाव्ययनीयम् ;
व्याय्यम्, व्याय्यम्, विव्ययिष्यम्, वाव्यय्यम् ;
व्यय्यमानः, व्याय्यमानः, विव्ययिष्यमाणः, वाव्यय्यमाणः ;
ईषद्व्ययः-दुर्व्ययः-सुव्ययः ; — —
व्ययः, व्यायः, विव्ययः, वाव्ययः ;
व्ययितुम्, व्याययितुम्, विव्ययिषितुम्, वाव्ययितुम् ;

1. 'श्याद्व्यध—' (3-1-141) इत्यनुपसर्गे धातोः णप्रत्ययो भवति ।
2. 'पृभिदिव्यधि—' (द. उ. 1-108) इति कुप्रत्यये संप्रसारणे च रूपमेवम् । विध्यतीति **विधुः**=आयुधः, विष्णुशशिवाय्वग्नयश्च ।
3. 'विदिभिदि—' (3-2-162) इत्यत्र '**व्यधेः** संप्रसारणं कुरच्च' (वा. 3-2-162) इति कुरच्प्रत्यये संप्रसारणे च **विधुरः** इति रूपं भवति । **प्रक्रियासर्वस्वे** तु औणादिके कुरच्प्रत्यये रूपमिदं साधितम् ।
4. क्विपि वलिलोपे तुकि रूपमेवम् ।

A. '**व्याधं व्याध**ममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥' भ. का. 5-3.
B. '**मर्मविद्भि**स्तमस्काण्डैः **विध्यमानो**ऽप्यनेकधा ॥' भ. का. 9-66.
C. 'वाप्या **व्ययद्**दाशविलोकमेषभ्रेषज्झषा यासदघं स्पशन्ती ॥' धा. का. 2-27.

[1]व्यतिः, व्यायना, विव्ययिषा, वाव्यया ;
व्ययनम्, व्यायनम्, विव्ययिषणम्, वाव्ययनम् ;
व्ययित्वा, व्याययित्वा, विव्ययिषित्वा, वाव्ययित्वा ;
प्रव्यय्य, प्रव्याय्य, प्रविव्ययिष्य, प्रवाव्यय्य ;
व्ययम् २, व्ययित्वा २, } व्यायम् २, व्याययित्वा २, } विव्ययिषम् २, विव्ययिषित्वा २, } वाव्ययम् २ ; वाव्ययित्वा २. }

(1656) **" व्यय वित्तसमुत्सर्गे "** (X-चुरादिः-1932. सक. सेट्. उभ.)

**अदन्तः ।**

**'वित्तत्यागे व्यययति** व्ययति व्ययते गतौ ।' (श्लो. 150) इति **देवः** । 'व्यय गतौ' इति, 'वित्तसमुत्सर्गे' **समुत्सर्गस्त्यागः** । वित्तयति,........ **व्यय** वित्तसमुत्सर्गे इति **सभ्याः** " इति **क्षीरतरङ्गिण्यां** दृश्यते । इतः पूर्वं चुरादावग्रे 'व्यय क्षये' इति पठित्वा '**व्यप व्यय इति कौशिकः**, व्युदि व्यय इति **नन्दी**' इति च तत्रोपात्तमपीहानुसन्धेयम् । 'षट्ट हिंसायाम्' (चुरादौ) इत्यत्र "इह 'व्यय क्षये' इति **नन्दी** पठति । व्यपेत्य**परे** । **मैत्रेयदेवादयस्तु** उभयमपि न पठन्ति" इति **धातुवृत्तौ** दृश्यते । **काशकृत्स्नेना**पि 'व्यय क्षये' 'व्यय वित्तसमुत्सर्गे' इति पृथक्त्वेन पठितम् ।

व्ययकः-यिका, विव्यययिषकः-षिका, व्यययिता-त्री, विव्यययिषिता-त्री ; इत्येवमादीनि रूपाणि ऊह्यानि । अस्य धातोः अदन्तपाठसामर्थ्यात् ण्यन्ते ण्यन्तप्रकृतिकसन्नन्ते च सर्वत्र अल्लोपस्य स्थानिवत्त्वात् उपधावृद्धिः नेति ज्ञेयम् । बाहुलकात् णिजभावपक्षे शानचि-[A]अपव्ययमानः इति ।

(1657) **" व्युष दाहे "** (IV-दिवादिः-1114. सक. सेट्. पर.)

धातुरयं "दन्त्योष्ठ्यादिः मूर्धन्यान्तश्च । तथा च **वैद्यके** (सुश्रुते 1-44) त्रिकटुकपर्याये **व्योषशब्दः** पठ्यते । अयमन्त्ये पुषादौ विभागे (अर्थे) पठिष्यते । **क्वचित् (तरङ्गिण्यादौ)** उभयत्र **विभागार्थो** दन्त्यान्त ओष्ठ्यादिश्च

1. क्तिनि वलिलोपे रूपमेवम् ।

A. 'पृष्टोऽपव्ययमानस्तु.......।' मनुः (8-60) ।



(प्युस इति) पठ्यते । तत्र पुनःपाठे फलमेकत्रैवार्थे रूपद्वयसिद्धिः" इति **धातुवृत्तौ** उक्तमिहानुसन्धेयम् । अयं धातुः **काशकृत्स्नीये न** पठितः ।

व्योषकः-षिका, व्योषकः-षिका, वुव्योषिषकः-वुव्युषिषकः-षिका, वोव्युषकः-षिका; व्योषिता-त्री, व्योषयिता-त्री, वुव्योषिषिता-वुव्युषिषिता-त्री, वोव्युषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**कुप्यति**वत् (224) बोध्यानि । कित्त्वविकल्पनात् क्त्वायां व्युषित्वा-व्योषित्वा इति रूपद्वयमिति ज्ञेयम् ।

(1658) **" व्युष विभागे "** (IV-दिवादिः-1215. सक. सेट्. पर.)

**पुषादिः** । अयं दाहार्थे पठितः, अर्थभेदेन अन्यर्थे दिवादावेव पुनः पठ्यते । '**प्युस**—' इति पठित्वा, "**प्युष** इति **दुर्गः, पुस इत्येके**—पुस्तकम्, पुस्तं लेप्यादि कर्म" इति **क्षीरस्वामी** । "**केचिदमु**मोष्ठ्यादिं दन्त्यान्तमिच्छन्ति—**व्युसेति** । **अपरे** त्वयकारं **बुसेति**" इति **सायणः** । '**व्युस—वुस**' इति **सि. कौमुदी** । '**पुष**—' इति **काशकृत्स्नः** । '**प्युष**' इति **कातन्त्राः, अन्ये च वैयाकरणाः**' इति तत्र **टिप्पण्यां** दृश्यते । युक्तायुक्तत्वे त्वत्र सूरयः प्रमाणम् ।

व्योषकः-षिका, व्योषकः-षिका, वुव्योषिषकः-वुव्युषिषकः-षिका, वोव्युषकः-षिका ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**पोषति**वत् (1026) ज्ञेयानि ।

(1659) **" व्येञ् संवरणे "** (I-भ्वादिः-1007. सक. अनि. उभ.)

**यजादिः** । '**—संवरणे**—उपयोगितायाम्' इति **काशकृत्स्नः** । '**—संवरणम्**—आच्छादनम्' इति **क्षीरस्वामी** ।

व्यायकः-यिका, [1]व्यायकः-यिका, विव्यासकः-सिका, [2]वेवीयकः-यिका ; व्याता-त्री, व्याययिता-त्री, विव्यासिता-त्री, वेवीयिता-त्री ;

1. णौ परतः 'शाच्छासाह्वाव्यावेपां युक्' (7-3-37) इति युगागमो भवति । आदन्तलक्षणपुकोऽपवादः ।

2. 'स्वपिस्यमिव्येञां यङि' (6-1-19) इति यङि परतः संप्रसारणे पूर्वरूपत्वे, 'हलः' (6-4-2) इति दीर्घे द्विर्वचने च रूपमेवम् ।

इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिकवयतिवत् (1640) ज्ञेयानि। शतरि व्ययन्-न्ती, [1]वीतम्-तः, क्विपि-संवीः-संव्यौ-संव्यः; [2]दोषवीः, [3]संव्याय, [4]परिवीय-परिव्याय, संवीय-संव्याय, [5]नीवी[A], [6]नीविः, इत्यादिकानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम्।

(1660) "**व्रज गतौ**" (I-भ्वादिः-253. सक. सेट्. पर.)

व्राजकः-जिका, व्राजकः-जिका, विव्रजिषकः-षिका, वाव्रजकः-जिका;
व्रजिता-ती, व्राजयिता-त्री, विव्रजिषिता-त्री, वाव्रजिता-त्री;
इत्यादिकानि रूपाणि समस्तान्यपि भौवादिकध्रजतिवत् (926) ज्ञेयानि।
[7]व्रजः, [8]व्रज्या, [9]व्राज्यम्, [10]परिव्राट्-परिव्राड्-परिव्राजौ-परिव्राजः, इमानि रूपाण्यधिकान्यत्रेति विशेषः। [11]व्राजिः, [12]वज्रम्।

---

1. निष्ठायाम् **यजादि**त्वात् संप्रसारणे, दीर्घे च रूपमेवम्।
   'वपादेस्तु यवोव् विश्वोद् **दोषवी**श्च पटोत्तुकि।' इति **प्र. सर्वस्वे**।
2. दोषान् व्ययते इति **दोषवीः**। क्विपि रूपमेवम्।
3. ल्यपि '**व्यश्च**' (6-1-43) इति संप्रसारणनिषेधः। तेन एवं रूपम्।
4. **परि**पूर्वकात् **व्येञ**स्तु 'विभाषा परेः' (6-1-44) इति ल्यपि सम्प्रसारणनिषेधविकल्पात् रूपद्वयमिति बोध्यम्। 'समो वा इत्**येके**' इति; तेन **संवीय—संव्याय** इति **प्र. सर्वस्वे**।
5. '**कृदिकारादक्तिनः**' (ग. सू. 4-1-45) इति ङीषि रूपमेवम्। **नीवी** मूलधनम् इति **केचित्**। **नीवी**—वस्त्रग्रन्थिः।
6. 'नौ **व्यो** यलोपः पूर्वपदस्य च दीर्घः' (द. उ. 1-64) इति नावुपपदे धातोः इण्-प्रत्ययः, डिच्च यलोपः पूर्वपदस्य च दीर्घः। निवीयतेऽसाविति **नीविः**।
7. '**गोचरसञ्चरवहव्रज—**' (3-3-119) इत्यधिकरणे घप्रत्ययान्तो निपातितः। **व्रजः**=गोकुलम्।
8. '**व्रजयजोर्भावे क्यप्**' (3-3-98) इति भावे स्त्रीलिङ्गे क्यप्प्रत्ययः। क्तिनोऽपवादः। **परिव्रज्या** सन्न्यासः।
9. ण्यति, '**अजिव्रज्योश्च**' (7-3-60) इति कुत्वनिषेधः।
10. परावुपपदे औणादिके (द. उ. 9-8) क्विप्प्रत्यये, दीर्घे जकारस्य षकारे च रूपमेवम्। परित्यज्य सर्वं व्रजति इति **परिव्राट्**=यतिः।
11. औणादिके (द. उ. 1-53) ञिप्रत्यये, ञित्त्वादुपधावृद्धिः। तेन रूपमेवम्। **व्राजिः**=मनः [मुनिः]।
12. व्रजति सर्वत्र प्रेरित इति औणादिके (द. उ. 8-46) रन्प्रत्यये निरूढः। रेफलोपो निपातनात्। **वज्रम्**=पविः।

A. '**नीवी**मतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः॥' कु. संभवे 1-38.



(1661) "**व्रज मार्गसंस्कारगत्योः**" (X-चुरादिः. सक. सेट्. उभ.)

"**वजि** (व्रजि ?) मार्गसंस्कारयोर्गतौ चेति **मैत्रेयादयः**। **स्वामी** तु व्रजस्थाने **वजि** पठित्वा **मार्गे**ति द्वितीयं धातुमाह" इति **धातुवृत्तावुक्तम्**। '—मार्गणे' इति **धनपालः**। 'द्वौ धातू इत्यन्ये' इति **क्षीरस्वामी**। '**व्रज**—' इति **चन्द्रः**। '**व्रज** मार्गसंस्कारे' इति **दुर्गः**। उभयोरप्यनयोर्वज-व्रजपक्षयोर्मार्गणं संस्कार इत्येवार्थस्तन्त्रान्तरे पठ्यते" इति **पुरुषकारे** प्रोक्तम् (**दैवश्लो**. 57)।

व्राजकः-जिका, विव्राजयिषकः-षिका; व्राजयिता-त्री, विव्राजयिषिता-त्री; व्राजयन्-न्ती, विव्राजयिषन्-न्ती; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक-**क्रूपयति**वत् (282) ज्ञेयानि।

(1662) "**व्रण शब्दार्थः**" (I-भ्वादिः-451. अक. सेट्. पर.)

'**व्रणेच्छब्दार्थविषये** व्रणयेद् गात्रचूर्णने।' (श्लो. 93) इति **देवः**।
'अयं **वशादित्वेन** **क्वचित्** पठ्यते। **सर्वत्र** दन्त्योष्ठ्यादिरेव।' इति **धातुवृत्तिः**।
व्राणकः-णिका, व्राणकः-णिका, विव्रणिषकः-षिका, वंव्रणकः-णिका;
व्रणिता-त्री, व्राणयिता-त्री, विव्रणिषिता-त्री, वंव्रणिता-त्री;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**क्वणति**वत् (293) ज्ञेयानि।
'व्रण **क्रिमिभक्षणे**' इति **काशकृत्स्नः**।

(1663) "**व्रण गात्रविचूर्णने**" (X-चुरादिः-1937. सक. सेट्. उभ.)

**अदन्तः**। '**व्रणेच्छब्दार्थविषये** व्रणयेद् **गात्रचूर्णने**' (श्लो. 93) इति **देवः**। **धातुवृत्तौ** 'व्रणति इति **दीप्त्यर्थे शपि**' इति दृश्यते। भ्वादौ तु **शब्दार्थे** एव पठितः।

व्रणकः-णिका, विव्रणयिषकः-षिका, व्रणयिता-त्री, विव्रणयिषिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कलयति**वत् (176) ऊह्यानि।

(1664) "**ओ व्रश्चू छेदने**" (VI-तुदादिः-1292. सक. वेट्. पर.)

[1]व्रश्चकः-श्चिका, व्रश्चकः-श्चिका,

---

1. अनुबन्धद्वयं विहाय धातुरयं उपदेशे सकारोपधः। तदुक्तम्—'नकारजावनुस्वार-पञ्चमौ झलि धातुषु। सकारजः शकारश्चेष्टाद्वर्गस्तवर्गजः॥' इति। एवञ्च 'स्तोः श्चुना श्चुः' (8-4-40) इति श्चुत्वेन सर्वत्र शकारश्रवणमिति ज्ञेयम्।

[1]विव्रश्चिषक:-विव्रक्षक:-क्षिका, [2]वरीवृश्चक:-श्चिका ;
व्रश्चिता-त्री, [3]व्रष्टा-ष्ट्री, व्रश्चयिता-त्री, विव्रश्चिषिता-विव्रक्षिता-त्री,
वरीवृश्चिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकमज्जतिवत् (1235) ज्ञेयानि । [4]व्रश्चित्वा, [5]वृक्ण:-वृक्णवान् , [6]व्रस्चय:, [7]व्रस्क:, [8]मूलवृट् , [9]वृश्चिक:, [10]वृक्ष: इति विशेषरूपाणि ।

1. ऊदित्त्वादिड्विकल्पः । इडभावपक्षे 'स्कोः संयोगाद्योरन्ते च' (8-2-29) इति सकारलोपे, '**व्रश्चभ्रस्ज—**' (8-2-36) इत्यादिना चकारस्य षकारे, 'षढोः कः सि' (8-2-41) इति ककारे, सनः सकारस्य षत्वे च **विव्रक्षकः** इत्यादीनि रूपाणि सन्नन्तेषु बोध्यानि ।
2. यङन्ते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' (परि. 129) इति वचनात् प्रथमं सम्प्रसारणपूर्वरूपे, अनन्तरम्, 'रीग् ऋत्वतः' (वा. 7-4-90) इति रीगागमः ।
3. ऊदित्त्वेनेड्विकल्पनात् तृजादिषु रूपद्वयम् । इडभावपक्षे 'स्कोः—' (8-2-29) इति सलोपे, '**व्रश्च—**' (8-2-36) इत्यादिना षत्वे, तृचस्तकारस्य ष्टुत्वेन टकारे च **व्रष्टा** इति रूपम् ।
4. धातोरूदित्त्वेनेड्विकल्पे प्राप्ते बाधित्वा, 'जॄव्रश्च्योः क्त्वि' (7-2-55) इति नित्यमिट् । 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् न सम्प्रसारणम् ।
5. निष्ठायाम् 'यस्य विभाषा' (7-2-15) इतीण्निषेधः । सम्प्रसारणपूर्वरूपादिकम् । 'स्कोः—' (8-2-29) इति सकारलोपः । ओदित्त्वात् निष्ठातकारस्य नकारः । 'चोः कुः' (8-2-30) इति कुत्वम् । 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः' (वा. 8-2-3) इति वचनेन '**व्रश्च—**' (8-2-36) इति षत्वं प्रति निष्ठानत्वस्य सिद्धत्वात्, झल्परकत्वाभावात् न षत्वम् । णत्वम् । इयमत्र गहना प्रक्रिया ।
6. ण्यति 'चजोः—' (7-3-52) इति कुत्वे, अझल्परकत्वात् 'स्कोः—' (8-2-29) इति न सकारलोपः । 'निमित्तापाये नैमित्तिकस्याप्यपायः' (परि. 57) इति वचनेन चकारमाश्रित्य श्रुतः शकारः, शकारविगमे स्वयमेव सकारतां प्रत्यापद्यते ।
7. घञि चकारस्य कुत्वे पूर्ववत् शकारस्य सकारभावे च रूपमेवम् ।
8. मूलं वृश्चतीति **मूलवृट्** । 'क्विप् च' (3-2-76) इति क्विपि, सम्प्रसारणपूर्वरूपयोः सकारलोपे, व्रश्चादिषत्वे तस्य जश्त्वेन डकारे चर्त्वे च रूपमेवम् । **मूलवृत्** इति **क्षीरतरङ्गिण्यां** दृश्यते । स च अपपाठ इति भाति, तुक्कोऽप्रसिद्धेः ।
9. '**व्रश्चिकृषोः** किकन्' (द. उ. 3-12) इति किकन्प्रत्यये सम्प्रसारणादिके च रूपमेवम् । **वृश्चिकः**=दन्दशूकविशेषः ।
10. '**स्नुव्रश्चि—**' (द. उ. 9-25) इति क्सप्रत्ययः । सम्प्रसारणादिकम् ।



(1665) "**व्री वरणे**" (IX-क्र्यादिः-1504. सक. अनि. पर.)

**प्वादिः** । '—वरणे - आवरणे' इति 'व्रीतः-व्रीतवान् आवारकेऽर्थे' इति च **काशकृत्स्नः** । '—गतौ च द्रुमे' इति **धा. का. व्या** (3. 9.) । '**व्रीणाति वरणे** तत्र व्रीडो व्रीयेत तु श्यनि ।' (श्लो. 19) इति **देवः** ।

व्रायक:-यिका, व्रायक:-यिका, विव्रीषक:-षिका, वेव्रीयक:-यिका ;
व्रेता-त्री, व्राययिता-त्री, विव्रीषिता-त्री, वेव्रीयिता-त्री ;
[1]व्रिणन्-न्ती, व्राययन्-न्ती, विव्रीषन्-न्ती ; —
व्रेष्यन्-न्ती-ती, व्राययिष्यन्-न्ती-ती, विव्रीषिष्यन्-न्ती-ती ; —

इत्यादिकानि रूपाणि सर्वाण्यपि क्रैयादिक**प्लिनाति**वत् (1081) ज्ञेयानि । [2]व्रेपयति ।

(1666) "**व्रीङ् वृणोत्यर्थे**" (IV-दिवादिः-1140. सक. अनि. आत्म.)

'—वरणे-आवरणे सामीप्ये' इति **काशकृत्स्नः** ।
'व्रीणाति वरणे तत्र **व्रीडो व्रीयेत तु श्यनि** ।' (श्लो. 19) इति **देवः** ।
'—छादनं परिग्रहो वा तत्' इति **धा. का. व्याख्यायाम्** (1-58) ।

व्रायक:-यिका, व्रायक:-यिका, विव्रीषक:-षिका, वेव्रीयक:-यिका ;
व्रेता-त्री, व्राययिता-त्री, विव्रीषिता-त्री, वेव्रीयिता-त्री ;

इत्यादीनि रूपाणि सर्वाण्यपि दैवादिकधीङ्धातुवत् (901) ज्ञेयानि । धातोरस्य आत्मनेपदित्वात् शानचि व्रीयमाणः, व्रेष्यमाणः इति ज्ञेयम् ।

## (1667) "व्रीड चोदने लज्जायां च"

(IV-दिवादिः-1126. अक. सेट्. पर.)

**धातुवृत्तौ** तु '—चोदने' इत्येव । **तरङ्गिण्याम्** '—चोदने' इति पठित्वा

1. शतरि, 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः । तस्य 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे '**प्वादीनां** ह्रस्वः' (7-3-80) इति ह्रस्वे च रूपमेवम् । ये तु प्वादित्वमस्य नाभ्युपगच्छन्ति, तेषां मते **व्रीणन्** इति दीर्घघटितमेव रूपम् ।
2. "**स्वामिकाश्यपादयः** 'अर्तिह्रीव्री—' (7-3-36) इति पठन्तो **व्रेपयती**ति पुकं प्रतिपन्नाः" इति **धातुवृत्तिः** । **क्षीरतरङ्गिण्यां** तु अत्र नैतादृशः पाठः उपलभ्यते । इतः पूर्वं 'व्ली वरणे' इत्यत्र (धातौ) **व्लेपयती**ति पुग्विशिष्टत्वेन उदाह्रियते ।

'**चोदनं**=लज्जा' इति दृश्यते। 'लज्जायामप्यधीयते' इति **मैत्रेयः**। **भट्टोजिदीक्षित-काशकृत्स्न-आत्रेयादयस्तु** '—चोदने लज्जायां च' इत्येव पठन्ति। '—**प्रेरणे** च **द्रुमे**' इति **धा. का. व्याख्यायाम्** (1-57)।
व्रीडकः-डिका, व्रीडकः-डिका, विव्रीडिषकः-षिका, वेव्रीडकः-डिका;
व्रीडिता-त्री, व्रीडयिता-त्री, विव्रीडिषिता-त्री, वेव्रीडिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**क्रीडति**वत् (275) बोध्यानि। व्रीडः-[1]आव्रीडः, [2]व्रीडा।

(1668) "**व्रुड संवरणे**" (VI-तुदादिः-1393. सक. सेट्. पर.) [अ]

**कुटादिः।**

व्रोडकः-डिका, व्रोडकः-डिका, [3]वुव्रुडिषकः-षिका, वोव्रुडकः-डिका;
[4]व्रुडिता-त्री, व्रोडयिता-त्री, वुव्रुडिषिता-त्री, वोव्रुडिता-त्री;
इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि। व्रुडन्-न्ती-ती, इति शतरि विशेषः।

(1669) "**व्ली वरणे**" (IX-क्र्यादिः-1502. सक. अनि. पर.)

**प्वादिः, ल्वादिश्च।** अयं धातुः **काशकृत्स्नीये** न दृश्यते।
व्लायकः-यिका, [5]व्लेपकः-पिका, विव्लीषकः-षिका, वेव्लीयकः-यिका;
व्लेता-त्री, व्लेपयिता-त्री, विव्लीषिता-त्री, वेव्लीयिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि क्रैयादिक**प्लिनाति**वत् (1081) बोध्यानि। [6]व्लीनः-व्लीनवान्, "'प्रहीणं व्लीनाति, नैनं दक्षिणा व्लीनाति' इत्यादौ दीर्घः

---

[अ] '**व्रुड**—' इति व्रश्चादिषु (तुदादौ) यः पठितः तस्य पाठभेदोऽयम्।

1. घञ्प्रत्यये रूपमेवम्। लघूपधत्वाभावात् न गुणः।
2. 'गुरोश्च हलः' (3-3-103) इत्यकारः स्त्रियां भवति।
3. सन्नन्ते नित्यङित्त्वात् गुणनिषेधः। अन्यथा रलन्तत्वात् उकारोपधत्वाच्च वैकल्पिकं कित्त्वं स्यात्।
4. 'गाङ्**कुटादिभ्यः**—' (1-2-1) इति तृचो ङित्त्वात् गुणनिषेधः। एवं तव्यदादीनामपि ङित्त्वं ज्ञेयम्।
5. ण्यन्ते, 'अर्तिह्रीव्ली—' (7-3-36) इत्यादिना पुगागमे '**पुगन्त**लघूपधस्य च' (7-3-86) इति गुणे च रूपमेवम्।
6. **ल्वादित्वात्** 'ल्वादिभ्यः' (8-2-44) इति निष्ठानत्वे रूपमेवम्।



छान्दसः" इति **धातुवृत्तिः**। [1]व्लिनन्-ती।

(1670) "**शक विभाषितो मर्षणे**"

(IV-दिवादिः-1187. सक. अनिट्. उभ.)

'—क्षमायाम्' इति **कातन्त्रकाशकृत्स्नौ**। '—शक्तौ' इति **वोपदेवः**। '**शक्यते शक्यती**त्येवं शपि श्नौ **श्यनि** च क्रमात्॥' (श्लो. 43) इति **देवः**।
शाककः-किका, शाककः-किका, [2]शिक्षकः-क्षिका, शाशककः-किका;
[3]शक्ता-त्री, शाकयिता-त्री, शिक्षिता-त्री, शाशकिता-त्री;
इत्येवमादीनि रूपाणि सर्वाण्यपि दैवादिक**नश्यति**वत् (667) ज्ञेयानि।
[4]शक्यन्-शक्यमानः, [5]भोक्तुं शक्यते, [6]शक्तो घटः कर्तुम्-शकितो घटः कर्तुम्,
[7]शक्तिः, शक्तिः, [8]शक्यम्, [9]शक्वा-शक्वरी, [10]शकलम्,

---

1. शतरि श्नाप्रत्यये '**श्नाभ्यस्तयोः**—' (6-4-112) इत्याकारलोपे, '**प्वादीनां**—' (7-3-80) इति ह्रस्वे च रूपमेवम्।
2. '**सनि मीमाघुरभलभशक**—' (7-4-54) इति अकारस्य इस्। 'स्कोः—' (8-2-29) इति सकारलोपः। 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपः। षत्वम्। इक्समीपात् हलः परस्य झलादेः सनः कित्त्वात् न गुणः इति बोध्यम्। एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
3. धातोरनिट्त्वं **सर्वसम्मतम्**। तेनैवं तृजादिषु रूपम्। **क्षीरस्वामी** तु '**विभाषितः**' इत्यस्य 'इड् वा इति मतभेदः........**शकिता शक्ता**।' इत्याह।
4. '**विभाषितः**' इत्यस्य **तन्त्रान्तर**प्रसिद्ध्या उभयपदित्वं **क्षीरस्वामि-शाकटायनदेव**प्रभृतिभिरुक्तम्। तत्पक्षे शता श्यन् च। एतत्पक्षखण्डकानां **पुरुषकारधातुवृत्तिकारादीनां** मते तु **शक्यन्** इति एकमेव **परस्मैपदं** रूपम्।
5. '**शकधृष**—' (3-4-65) इत्यनेन धातावस्मिन् उपपदभूते सति धात्वन्तरस्य तुमुन् भवति।
6. '**सौनागाः** कर्मणि निष्ठायां **शकेर**निटमिच्छन्ति विकल्पेन' (काशिका 7-2-17) इति वचनादत्रेड्विकल्पः। इति **धातुवृत्तिः**।
7. स्त्रियां क्तिनि **शक्तिः**। 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति क्तिचि **शक्तिः**=ऋषिविशेषस्य संज्ञा। पुंल्लिगोऽयं शब्दः। **शक्तिः**=आयुधविशेषस्य संज्ञा।
8. '**शकि**सहोश्च' (3-1-99) इति ण्यदपवादो यत्प्रत्ययः।
9. 'अन्येभ्योऽपि दृश्यन्ते' (3-1-99) इति वनिप्प्रत्यये रूपमेवम्। स्त्रियां तु '**वनो र च**' (4-1-7) इति ङीप्, तत्सन्नियोगेन रेफश्चान्तादेशः। तेन **शक्वरी** इति सिद्ध्यति। **शक्वरी** छन्दोविशेषः।
10. औणादिके [द. उ. 8-112] कलप्रत्यये रूपमेवम्। 'भित्तं **शकलम्**' (8-2-59); सारोऽपि।

[1]शक्रः, [2]शकुनः-शकुन्तः-शकुन्तिः-शकुनिः, [3]शकृत्, शकटः, इति विशेषरूपाणि ।

(1671) **" शकि शङ्कायाम् "** (I-भ्वादिः-86. अक. सेट्. आत्म.)

'—त्रासशङ्कयोः' इति **वोपदेवः** ।

'**शङ्कते शकि शङ्कायां** शक्तौ शक्नोति मर्षणे' (श्लो. 43) इति **देवः** ।

शङ्ककः-ङ्किका, शङ्ककः-ङ्किका, शिशङ्किषकः-षिका, शाशङ्ककः-ङ्किका ;

शङ्किता-ती, शङ्कयिता-त्री, शिशङ्किषिता-त्री, शाशङ्किता-त्री ;

इत्येवमादीनि रूपाणि सर्वाण्यपि भौवादिक**कङ्कति**वत् (140) ज्ञेयानि ।

शङ्कः, शङ्का-आशङ्का, शानचि [A]आशङ्कमानः, [4]शङ्कुः, [5]शङ्कुला, इत्यादिकानि रूपाण्यस्य धातोः अधिकानीति ज्ञेयम् ।

(1672) **" शक्लृ शक्तौ "** (V-स्वादिः-1261. अक. अनि. पर.)

'शङ्कते शकि शङ्कायां **शक्तौ शक्नोति** मर्षणे ।' (श्लो. 43) इति **देवः** ।

'**शक्लृञ्** —' इति **काशकृत्स्नः** । 'उभयपदी' इति **कातन्त्रशाकटायन-वोपदेवादयः** ।

शाककः-किका, शाककः-किका, शिशक्षकः-क्षिका, शाशककः-किका ;

शक्ता-त्री, शाकयिता-त्री, शिशक्षिता-त्री, शाशकिता-त्री ;

शक्नुवन्-ती, शाकयन्-न्ती, शाकयमानः, [6]शिक्षमाणः, शाशक्यमानः ;

शक्तम्-क्तः, शक्तवान्, शक्तिः, हरिः द्रष्टुं शक्तिः, शक्तो वा, शाक्तिः, शिक्षितः, शाशक्तिः-तवान् ;

---

1. औणादिके (द. उ. 8.31) रक्प्रत्यये रूपम् । **शक्रः**=इन्द्रः ।
2. '**शकेरुनोन्तोन्त्युनयः**' (द. उ. 10-5) इति उन-उन्त-उन्ति-उनिप्रत्ययाः । पक्षिनामान्येतानि ।
3. औणादिके (द. उ. 6-26) ऋतिन्प्रत्यये रूपमेवम् । **शकृत्**=गोपुरीषम् ।
4. औणादिके (द. उ. 1-20) कुप्रत्यये रूपमेवम् । **शङ्कुः**=जलजन्तुभेदः, स्थाणुः, शल्यं च । '...... **शङ्कवो** मकरादयः ।' इत्य**मरः (१. १०. २०)** ।
5. '**हृषेरुलच्**' (द. उ. 8-106) इत्यत्र बाहुलकाद् उलच्प्रत्यये रूपमेवम् । **शङ्कुला**=आयुधम्, कुमारक्रीडा च ।
6. '**शिक्षेर्जिज्ञासायाम्**' (वा. 3-2-1) इति सन्नन्तात् जिज्ञासार्थे तङ्त्र । 'पूर्ववत् सनः' (1-3-62) इत्यस्यापवादः । अभ्यासलोपादिकं **शक**धातुवत् बोध्यम् ।

A. '**आशङ्कमानो** वैदेहीं खादितां निहतां मृताम् ।' भ. का. 6-6



इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**शक्यति**वत् (1670) ज्ञेयानि । शक्यम्, [1]शक्नुवानः, शक्तिः, [2]शका, [3]शेकिवान्, [4]शकः [देशः], शक्तिः, [5]शाकः, शकटम्, शकृत्, शक्वा-शक्वरी, शक्या, शक्रः, शकलम्, शक्लम्, शकुनः-शकुनिः-शकुन्तः-शकुन्तिः, इमानि रूपाण्यधिकान्यत्रेति विशेषः । एतेषां रूपाणां निष्पत्तिप्रकारो दैवादिकधातावेव लिखितः । तत्रैव द्रष्टव्यः ।

(1672-A) **" शक्वृ गतौ "** (1. भ्वादिः.....सक. सेट्. आत्म.)

**काशकृत्स्नेन** धातुरयं पठितः । 'शक्वरते-वृषभ इव शब्दयति; शक्वरः—वृषभः, शक्वरी-गौः, छन्दोविशेषश्च' इति तत्र दृश्यते । अन्यत्र धातुरयं न दृश्यते ।

(1673) **" शच व्यक्तायां वाचि "** (I-भ्वादिः-165. सक. सेट्. आत्म.)

शाचकः-चिका, शाचकः-चिका, शिशचिषकः-षिका, शाशचकः-चिका ;

शशिता-त्री, शाचयिता-त्री, शिशचिषिता-त्री, शाशचिता-त्री ;

इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कचति**वत् (144) ऊह्यानि । शचिः [6]शची[A] ।

(1674) **" शट रुजाविशरणगत्यवसादनेषु "**

(I-भ्वादिः-299. सक. सेट्. पर.) [अ]

शाटकः-टिका, शाटकः-टिका, शिशटिषकः-षिका, शाशटकः-टिका ;

---

[अ] अत्र **काशकृत्स्न**धातुपाठे '**शट निवासे**—आवासे, आच्छादने च' इति पठित्वा तदनन्तरम् 'रुट विशरणे गत्यवसादनेषु' इति पृथग्धातुत्वेन पठितम् ।

1. शतरि स्वादित्वात् श्नुप्रत्ययः । उवङादेशः ।
2. स्त्रियां भिदादिपाठात् (3-3-104) अङ् ।
3. लिटः क्वसुप्रत्यये, 'अत एकहल्मध्ये—' (6-4-120) इति एत्वाभ्यासलोपयोः, '**वस्वे**काजाद्घसाम्' (7.2-67) इतीडागमः । छान्दसोऽपि क्वसुः लोके बहुलं प्रयुज्यते इत्यसकृदधस्तात् प्रतिपादितमस्माभिः । **काशिकायाम्** (7-2-67) उदाहृतोऽयं शब्दः ।
4. पचाद्यचि रूपमेवम् । **शकः** देशविशेषः । राजविशेषो वा ।
5. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । **शाकः**=वार्ताकादिः ।
6. इन्नन्तात्, 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति ङीषि रूपमेवम् । **शची**=इन्द्राणी ।

A. 'सुलोचना यत्र **शची**समप्रभाः अशाश्वचुः श्वञ्चितसौरभाः कचे ।' धा. का. 1-23.

शटिता-त्री, शाटयिता-त्री, शिशटिषिता-त्री, शाशटिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कठति**वत् (148) ज्ञेयानि ।
[1]शाटकः, [2]शाटी इति रूपे भवतः । शाट्यायनः=मुनिविशेषः ।

(1675) **" शठ शाठ्ये कैतवे च "** (1-भ्वादिः-340. अक. सेट्. पर.)
**' कैतवे शठतीति** स्यात् श्लाघायां शाठयेत णौ । ' (श्लो. 82) इति **देवः** ।
' शठ कैतवे च ' चकारात्—(पूर्वधात्वर्थभूतौ) ' हिंसासंक्लेशनयोः ' इत्युक्तावर्थौ गृह्येते ।' इति **पुरुषकारः** । **धातुवृत्ता**वपि एवमेव । **क्षीरस्वामिशाकटायनादयः** पुनश्चकारं नैव पठन्ति । **काशकृत्स्न**धातुपाठे तु ' —कैतवे च —द्यूते स्पर्धायां च ' इति दृश्यते । ' —हिंसायां कैतवे च ' इति **चन्द्रः** ।
' —वधक्लेशकैतवे ' इति **वोपदेवः** ।
शाठकः-ठिका, शाठकः-ठिका, शिशठिषकः-षिका, शाशठकः-ठिका ;
शठिता-त्री, शाठयिता-त्री, शिशठिषिता-त्री, शाशठिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कठति**वत् (148) ऊह्यानि । शठः=नैकृतिकः ।

(1676) **" शठ असंस्कारगत्योः "** (X-चुरादिः-1564. सक. सेट्. उभ.)
**' गत्यसंस्कारधात्वर्थे शाठये**च्छ्वाठयेदिति ॥ ' (श्लो. 81) इति **देवः** ।
' —संस्कारगत्योः ' इति **मैत्रेय-काशकृत्स्न-कातन्त्रादयः** ।
' —संस्कारगत्योः—अनृतभाषणे गतौ च ' इति **काशकृत्स्नः** ।
' —आलस्ये च' इति **धा. का. व्याख्यायाम्** (3-16)
' —आलस्ये गत्यसंस्कृतसंस्कृते ' इति **वोपदेवः** ।
शाठकः-ठिका, शिशाठयिषकः-षिका ; शाठयिता-त्री, शिशाठयिषिता-त्री ;
शाठयन्-न्ती, शिशाठयिषन्-न्ती, शाठयिष्यन्-न्ती-ती, शिशाठयिषिष्यन्-न्ती-ती ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**काणयति**वत् (159) ऊह्यानि ।

(1677) **" शठ श्लाघायाम् "** (X-चुरादिः-1692. सक सेट्. आत्म.)
**आकुस्मीयः ।**

1. घञन्तात् संज्ञायां कन्प्रत्यये रूपमेवम् । **शाटकः**=वस्त्रम् ।
2. घञन्तात् ' जातेरस्त्री— ' (4-1-63) इति जातिलक्षणे ङीषि **शाटी** इति रूपम् ।



' ........श्लाघायां शाठयेत णौ । ' (श्लो. 82) इति **देवः** ।
' शल— ' इति **कौशिकः** इति **क्षीरतरङ्गिण्याम्** ।
शाठकः-ठिका, शिशाठयिषकः-षिका ; शाठयिता-त्री, शिशाठयिषिता-त्री ;
इत्यादीनि रूपाणि सर्वाणि चौरादिक**काणयति**वत् (159) ऊह्यानि । यत्प्रत्यये [A]शाठ्यम् ।

(1678) **" शठ सम्यगवभाषणे "** (X-चुरादिः-1855. सक. सेट्. उभ.)
**कथादिः, अदन्तश्च ।**

**' शठयेत्** श्वठयेदेते द्वे **सम्यगवभाषणे** ।' (श्लो 81) इति **देवः** ।
' —सम्यगाभाषणे सम्यग्वचनक्रियायामिति **क्षीरस्वामी** ' इति **पुरुषकारः** ।
**क्षीरतरङ्गिण्यां** तु ' —**असम्यगाभाषणे** ' इत्येव दृश्यते ।
शठकः-ठिका, शिशठयिषकः-षिका ; शठयिता-त्री, शिशठयिषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कलयति**वत् (176) ज्ञेयानि ।

(1679) **" शडि रुजायां संघाते च "** (I-भ्वादिः-279. सक. सेट्. आत्म.)
' —**हिंसागत्योः** ' इति **काशकृत्स्नः** । किंच भ्वादौ इत उत्तरत्र
' —रुजायाम् ' इति पृथक् धातुत्वेन पठितः ।
शण्डकः-ण्डिका, शण्डकः-ण्डिका, शिशण्डिषकः-षिका, शाशण्डकः-ण्डिका ;
शण्डिता-त्री, शण्डयिता-त्री, शिशण्डिषिता-त्री, शाशण्डिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कण्ठति**वत् (149) ऊह्यानि । शण्डः-असुरपुरोहितः, शण्डिलः, ल्युटि[B]शण्डनम् । इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1680) **" शण दाने "** (I-भ्वादिः-797. सक. सेट्. पर.) **घटादिः** ।
' दाने च ' इति पठित्वा **चकारात् गतौ** इति **मा. धा. वृत्तिः** ।
**क्षीरतरङ्गिण्याम्** अयं धातुः न दृश्यते । ' —**गतौ** इत्येके इति **मैत्रेयः** ' इति **धा. का. व्याख्यायाम्** (2-97) । ' —दाने इत्यपि **दुर्गः** ' इति **क्षीरस्वामी** ।

A. ' आकूणिताक्षमपि च स्मिततूणितास्यं भ्रूणस्य **शाठ्य**जनयक्ष्यमवेक्ष्य गात्रम् ।' धा. का. 3-35.
B. ' असुण्डितोच्चण्डगतीन**शाण्डनान्**......। ' धा. का. 1-37

शाणकः-णिका, शणकः-णिका, शिशणिषकः-षिका, शंशणकः-णिका ;
शणिता-त्री, शणयिता-त्री, शिशणिषिता-त्री, शंशणिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि ण्यन्तं विना भौवादिक**क्रणति**वत् (157) ज्ञेयानि। ण्यन्ते तु (158 धातुवत्) ऊह्यानि। शतरि-[A]शणन्, [1]शणः, शाणः, शाणा, शाणिः-बुद्धिमान्, शाणी[B], शणिः-शनिः, शणुः-पत्रम् ; इमानि रूपाणि विशेषेण भवन्तीति विशेषः।

### (1681) " शद्लृ शातने " (I-भ्वादिः-855. सक. अनि. पर.)

**ज्वलादिः**।'—अवशातने' इति **जैनः**। शातनम्-तनूकरणमिति **क्षीरस्वामी**।
'—शातनम्-तीक्ष्णीभावः। विशीर्णतायामित्ये**के**। [2]**गता**वप्यस्ति' इति **धा. का. व्याख्यायाम्** (2-24)। " '—**विशातने**' विशीर्णतायां वर्तते, **शातनं**-विषयभावेन निर्दिश्यते प्रसिद्धत्वात्" इति **मैत्रेयः**-इति **मा.धा.वृत्तिः**।
शादकः-दिका, शादकः-दिका, पुष्पाणां [3]शातकः-तिका, शिशत्सकः-त्सिका, [शाशदकः-दिका ;
शत्ता-शत्त्री, शादयिता-शातयिता-त्री, शिशत्सिता-त्री, शाशदिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिकगत्यर्थक**पत्लृ** (968) धातुवत् ऊह्यानि।
[4]शादः, शद्रः, शाद्वलम्,

---

1. संज्ञायां घप्रत्ययः। **शणः**=रज्जुसाधनीभूत ओषधिविशेषः। घञि **शाणः**= घर्षणशिला।
2. '**शदे**रगतौ तः' (7-3-42) इति गतिभिन्नार्थे तकारविधानाज्ज्ञाप्यते, धातोरस्य **गति**रप्यर्थ इति।
3. णिजन्ते सर्वत्र '**शदे**रगतौ तः' (7-3-42) इति दकारस्य तकारः। गत्यर्थकत्वे तु 'गाः **शादयन्** गोपालकः' इत्यादिप्रयोगे न तकारः। 'पुष्पाणि **शातयन्**' इत्यादिषु तु भवत्येव। एवं सर्वत्र ज्ञेयम्।
4. संज्ञायां घञ्। **शादः**= तृणविशेषः। **शद** इति तु आयुधविशेषः। संज्ञायामत्र घः। **शाद्वलम्** इति तु **शादाः** सन्त्यस्मिन् देशे इत्यर्थे 'नड**शादाद्** ड्वलच्' (4-2-88) इति मत्वर्थीयो ड्वलच्प्रत्ययः। प्रत्ययस्य डित्त्वात् टिलोपः।

A. 'चणन् विषादं **विशणन्** विचिन्तां श्रणन् विमोहं श्रथितोऽस्तु सयः॥'
धा. का. 2-9.

B. 'वस्त्राणां प्रवरा **शाणी**......' म. भारते 3-120-27.



शद्रुः, [2]शत्रुः। [3]शीयमानः।

### (1682) " शद्लृ शातने " (VI-तुदादिः-1428. सक. अनि. पर.)

शादकः-दिका, शादकः-दिका-शातकः-तिका, शिशत्सकः-त्सिका, शाशदकः-दिका ; शीयमानः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**शीयति**वत् (1681) ज्ञेयानि। भौवादिकधात्वपेक्षया नास्य धातो रूपेषु भेदः। '**शदेः शितः**' (1-3-60) इति तङ्विधानात् नापि शताऽस्तीति प्रयोजनं कल्पयितुं शक्यते, येन 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः प्रयोजयितुं शक्येत। ततश्च विफलत्वे सति यथाकथञ्चित् स्वरभेदः प्रयोजनत्वेन कल्प्यः इति **प्राञ्चः**। वस्तुतस्तु शपः-शप्रत्ययस्य च प्रसक्त्यभावात्—शब्निमित्तकः पित्स्वरोऽनुदात्तः, शनिमित्तकः प्रत्ययस्वरोऽपि लक्ष्याभावादेव दुर्लभ इति नैतदपि प्रयोजनं वक्तुं शक्यमित्यास्तां तावत्।

### (1683) " शप आक्रोशे " (I-भ्वादिः-1000. अक. अनि. उभ.)

'**आक्रोशे** शप्यते शप्येत्, **शपते शपतीति** च।
उपालम्भे शपेर्वाक्यात्तङि स्यात् शपते पदम्॥' (श्लो. 132) इति **देवः**।
'**आक्रोशो**-विरुद्धानुध्यानम्' इति **क्षीरस्वामी**।
शापकः-पिका, शापकः-पिका, शिशप्सकः-प्सिका, शाशपकः-पिका ;
शप्ता-त्री, शापयिता-त्री, शिशप्सिता-त्री, शाशपिता-त्री ;
शपन्-न्ती, शापयन्-न्ती, शिशप्सन्-न्ती ; — —
शप्स्यन्-न्ती-ती, शापयिष्यन्-न्ती-ती ; — —

---

1. 'दाधेट्सिशदसदो रुः' (3-2-159) इति रुप्रत्ययः ताच्छीलिकः।
2. शातयतीति **शत्रुः** = अरिः। णिजन्तात् गतिभिन्नार्थे तकारान्तात् धातोः '**रुशादि**भ्यां त्रुन्' (द. उ. 1-159) इति त्रुन्प्रत्ययः ; बाहुलकात् णेर्लोपः, वृद्ध्यभावश्च। प्रत्ययलक्षणेन णिजाश्रिता वृद्धिः ; इत्यादिकमूह्यम्।
3. '**शदेः** शितः' (1-3-60) इति आत्मनेपदम्। शिद्भावी यः **शदिधातुः** स तङं लभते इति निष्कृष्टोऽर्थः। विस्तरस्तु **न्यासपदमञ्जर्यो**र्द्रष्टव्यः। 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशद**सदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौ**शीय**सीदाः' (7-3-78) इति शिति प्रत्यये परे प्रकृतेः '**शीय**' इति सर्वादेशः। एवञ्चास्य धातोः शता नेति अवधेयम्।

कृष्णाय [1]शपमानः, शापयमानः, शिशप्समानः, शाशप्यमानः ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**तपति**वत् (703) ऊह्यानि। शपनम्, [2]शप्यम्, [3]शपथः, [4]शब्दः, शाब्दिकः, [5]शबलः, [6]शप्वः, इत्यादीनि रूपाणि अस्य धातोः विशेषेण भवन्ति।

(1684) "**शप आक्रोशे**" (IV-दिवादिः-1168. अक. अनि. उभ.)

'**आक्रोशे शप्यते शप्येत्** शपते शपतीति च।
[7]उपालम्भे शपेर्वाक्यात्तङि, स्याच्छपते पदम्॥' (श्लो. 132.) इति **देवः**।

शापकः-पिका, शापकः-पिका, शिशप्सकः-प्सिका, शाशपकः-पिका ;
शप्ता-त्री, शापयिता-त्री, शिशप्सिता-त्री, शाशपिता-त्री ;
शप्यन्-न्ती, शापयन्-न्ती, शिशप्सन्-न्ती ;—
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**तपति**वत् (703) ऊह्यानि।

---

1. धातोरुभयपदित्वेऽपि '**शप** उपलम्भने' (वा. 1-3-21) इत्यकर्त्रभिप्रायेऽपि तङेव। 'श्लाघह्नुङ्स्था**शपां**—' (1-4-34) इति ज्ञीप्स्यमानस्य सम्प्रदानता। तेन 'कृष्णाय' इत्यत्र चतुर्थी। **वार्तिके** 'वाचा शरीरस्य स्पर्शनम्=**उपलम्भनम्**' इति **काशिका**। अत्र **हरदत्तः** "—'त्वत्पादौ स्पृशामि—नैतत् मया कृतम्' इत्येतद्रूपः शपथविशेष उपलम्भः" इति। **कैयटस्तु** '**उपलम्भनम्**=प्रकाशनम्' इत्याह। **शाकटायन**स्तु प्रकाशनार्थमङ्गीकृत्य, 'स्वाभिप्रायस्य परत्र आविष्करणं तत्'—इत्यप्याह। "**चन्द्रभोजकौमारा**स्तु 'प्रोषितस्य देवदत्तस्य भावाभावयोरुपलब्धव्ययोः किञ्चिदासेवनमुपलम्भनम्। 'देवदत्ताय **शपते**—' प्रोषितस्य देवदत्तस्य भावाभावयोरुपलब्धव्ययोः किञ्चिदासेवते इत्यर्थः—" इति **धातुवृत्तिः**। विस्तरस्तु **माधवीये** द्रष्टव्यः।
2. '**पोरदुपधात्**' (3-1-98) इति ण्यदपवादो यत्प्रत्ययः।
3. 'शीङ्**शपि**—' (द. उ. 6-38) इत्यथप्रत्ययः। **शपथः**=प्रतिज्ञा।
4. '**शाशपिभ्यां**—' (द. उ. 6-48) इति दन्प्रत्ययः। '**शब्दवैर**—' (3-1-17) इति निपातनात् पकारस्य दकारः।
5. '**शपेर्बश्च**' (द. उ. 8-108) इति कलप्रत्ययः, पकारस्य बकारश्च।
6. '**शपेर्वन्**' (द. उ. 8-131) इति वन्प्रत्ययः। शप्यते इति **शप्वः**=आक्रोशः।
7. '**शप उपलम्भने**' इत्येव **भाष्यादिषु** पाठः। '**उपालम्भने**' इत्यपि प्रायपाठ इति **पुरुषकारे** प्रतिपादितम्। प्रकृते **दैव**श्लोकेऽपि '**उपालम्भे**' इत्येव दृश्यते। पाठनिर्णये विद्वांसः प्रमाणम्।



(1685) "**शमु उपशमने**" (IV-दिवादिः-1201. अक. सेट्. पर.)

**शमादिः।**

'आलोचने शमयते **शाम्यत्युपशमे श्यनि**।' (श्लो. 149) इति **देवः**।

[1]शमकः-मिका, [2]निशामकः-मिका, शमकः-मिका, शिशमिषकः-षिका, शंशमकः, शम्शमकः-मिका ; शमिता-त्री, निशामयिता रूपम्, निशमयिता वचः, शिशमिषिता-त्री, शंशमिता-शम्शमिता-त्री ;
[3]शाम्यन्[A]-न्ती, निशामयन्[B]-न्ती, निशमयन् वचः, शिशमिषन्-न्ती ;—
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**दाम्यति**वत् (819) ज्ञेयानि। [4]शान्तः, [5]शान्तः[C]-शमितः[D], [6]प्रशान्, [7]शमी, [8]शमनः, [9]शान्तिः[E], [10]शमित्वा-शान्त्वा,

---

1. ण्वुलि 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिनिषेधः।
2. धातोरमन्तत्वेन 'जनीजॄष्क्नसुरञ्जोऽ**मन्ताश्च**' (ग. सू. भ्वादिः) इति मित्त्वम्। तेन 'मितां ह्रस्वः' (6-4-92) इति णौ सर्वत्र ह्रस्वः। '**शमो** दर्शने' (ग.सू. भ्वादिः) इति दर्शनार्थे मित्त्वं निषिद्धम्। एवञ्च '**निशामयति** रूपम्' इत्यत्र मित्त्वाभावात् दीर्घः, '**निशमयति** वचः' इत्यत्र मित्त्वम्, इति बोध्यम्।
3. शतरि, शपः श्यनि, '**शमा**मष्टानां—' (7-3-74) इति दीर्घः।
4. निष्ठायां 'यस्य विभाषा' (7-2-15) इति इण्निषेधः। 'अनुनासिकस्य क्विझलोः—' (6-4-15) इति दीर्घः। अनुस्वारपरसवर्णौ।
5. ण्यन्तात् निष्ठायां 'वा दान्त**शान्त**—' (7-2-27) इति सूत्रे निपातनात् णिलुक्, अनिट्त्वं च पक्षे भवतः। 'निष्ठायां सेटि' (6-4-52) इति णिलोपः। दीर्घोऽपि नित्यो निपातनादेव। पक्षे **शमितः** इति।
6. प्रशाम्यतीति **प्रशान्**। क्विपि 'अनुनासिकस्य—' (6-4-15) इति दीर्घः। 'मो नो धातोः' (8-2-64) इति पदान्ते नकारः। स्वरादिषु पाठात् अव्ययत्वम्।
7. तच्छीलादिषु कर्तृषु '**शमि**त्यष्टाभ्यो घिनुण्' (3-2-141) इति घिनुण्प्रत्ययः। प्रत्ययस्य णित्त्वेऽपि धातोर्मान्तत्वात् न वृद्धिः।
8. शमयतीति **शमनः**=यमः। बाहुलकात् नन्द्यादित्वात् कर्तरि ल्युप्रत्ययः।
9. क्तिचि, 'तितुत्र—' (7-2-9) इतीण्निषेधः। दीर्घानुस्वारपरसवर्णाः।
10. उदित्त्वात् क्त्वायामिड्विकल्पः। इडभावपक्षे दीर्घानुस्वारपरसवर्णादिकं यथाशास्त्रमूह्यम्।

A. '**अशाम्य**दात्माधि तमी नमामि दमिप्रियं श्रान्तिहरं भवन्तम्।' धा. का. 2-65.
B. 'रथेन तं राजपथे प्रयान्तं निर्व्याजसङ्गेन **निशामयन्ती**।' या. अ. 13-58.
C. 'दमितारिः **प्रशान्तौ**जा नादापूरितदिङ्मुखः।' भ. का. 9-20.
D. '**शमित**तापमपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम्।' शि. व. 6-33.
E. 'प्रायोपासनया **शान्तिं** मन्वानो वालिसम्भवः।' भ. का. 7-73.

[A]निशाम्य-निशम्य, [B]शमं शमं, [1]शण्ढः, [2]शमलम्, [3]शम्बलम्, [4]शङ्कुः, शम्भुः, इत्यादीनि रूपाण्यधिकान्यत्रेति विशेषः। णिजन्तात् ल्यपि-प्रशमय्य इति च विशेषः।

(1686) " **शम आलोचने** " (X-चुरादिः-1696. सक. सेट्. आत्म.)

**आकुस्मीयः।**

'**आलोचने शामयते** शाम्यत्युपशमे श्यनि।' (श्लो. 149) इति **देवः।**
शामकः-मिका, शिशामयिषकः-षिका; शामयिता-त्री, शिशामयिषिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कालयति**वत् (175) ऊह्यानि।
शामा-कृष्णवर्णा, शाकविशेषः।

(1687) " **शम्ब संबन्धे** " (X-चुरादिः-1556. अक. सेट्. उभ.)

**क्षीरतरङ्गिण्यां** '**साम्ब**—' इति पठित्वा '**चन्द्रः शम्ब** इत्याह' इति दृश्यते। "**षम्ब** संबन्धने' इति पठित्वा '**शम्ब** चेति **मैत्रेयः।** शम्बेत्येके इति **स्वामी।**" इति **मा. धा. वृत्तौ।**
शम्बकः-म्बिका, शिशाम्बयिषकः-षिका; शाम्बयिता-त्री, शिशाम्बयिषिता-त्री;
इत्यादिकानि ण्यन्ते तत्प्रकृतिकसन्नन्ते च ऊह्यानि। रूपाणि सर्वाण्यपि भौवादिक**कमु**धातुवत् (168) [5]शम्बरः[C], [D]शाम्बरी, शम्बलम्।

---

1. औणादिके (द. उ. 5-11) ढप्रत्यये रूपमेवम्। शान्तमस्य स्पर्शनेन्द्रियमिति **शण्ढः**=नपुंसकः।
2. औणादिके (द. उ. 8-112) कलप्रत्यये रूपम्। शमयति शाम्यते वा तत् प्रायश्चित्तादिभिरिति **शमलम्**=दुरितम्।
3. औणादिके (द. उ. 8-114) कलप्रत्यये रूपम्। अस्य बुगागमश्च निपातनात्। शाम्यते मार्गपरिश्रान्तोऽनेनेति **शम्बलम्**=पाथेयम्, सम्बयश्च।
4. औणादिके (द. उ. 10-15) इति खप्रत्यये रूपमेवम्। शाम्यतीति **शङ्कुः**=प्रसिद्धः।
5. बाहुलकादरप्रत्यये रूपमेवम्। **शम्बरः**=असुरविशेषः। 'अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इत्यमरः।

A. 'रतौ ह्रिया यत्र **निशाम्य (निशम्य)** दीपाञ्जालगताभ्योऽधिगृहं गृहिण्यः।' शि. व. 3-45.
B. '**शमं शमं** नभस्वन्तः पुनन्ति परितो जगत्।' भ. का. 18-27.
C. '**शम्बरं** पर्वतेषु क्षियन्तम्' (ऋग्-2-12-11) इति।
D. '........आसम्बयन् जनमतिं निज**शाम्बरी**भिः॥' धा. का. 3-15.



(1688) " **शर्द कुत्सिते शब्दे** " इति **काशकृत्स्नेन** (भ्वादौ) पठितम्। स धातुः आत्मनेपदी इति च ज्ञायते। यथा शर्दते—अपानं **त्यजति।**

(1689) " **शर्ब गतौ** " (I-भ्वादिः- 423. सक. सेट्. पर.)

'**एकः** शर्बस्तालव्यादिः, **अपरः** षोपदेशः, **अन्यो** दन्त्यादिः।'
इति **क्षीरतरङ्गिण्याम्।** '—गतौ हिंसायां च' इति **कातन्त्रः।** '**नोपधः** इति **कौशिकः**' इति **माधवः।** '**शर्व**—' इति **काशकृत्स्नः।**
शर्बकः-र्बिका, शर्बकः-र्बिका, शिशर्बिषकः-षिका, शाशर्बकः-र्बिका;
शर्बिता-त्री, शर्बयिता-त्री, शिशर्बिषिता-त्री, शाशर्बिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि गत्यर्थक**कर्बति**वत् (173) ऊह्यानि।

(1690) " **शर्व हिंसायाम्** " (I-भ्वादिः-585. सक. सेट्. पर.)

शर्वकः-र्विका, शर्वकः-र्विका, शिशर्विषकः-षिका, शाशर्वकः-र्विका;
शर्विता-त्री, शर्वयिता-त्री, शिशर्विषिता-त्री, शाशर्विता-त्री;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कर्वति**वत् (173-A) ज्ञेयानि।
शर्वः-[1]शर्वाणी।

(1691) " **शल चलनसंवरणयोः** " (I-भ्वादिः-490. सक. सेट्. आत्म.)

'गतौ शलति **संवृत्यां चलने शलते** शलेः।' (श्लो. 154) इति **देवः।**
शालकः-लिका, शालकः-लिका, शिशलिषकः- षिका, शाशलकः-लिका;
शलिता-त्री, शालयिता-त्री, शिशलिषिता-त्री, शाशलिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कलति**वत् (174) ज्ञेयानि। शलः, शाला=गृहपर्यायः, [2]शलभः, [3]शल्यम्, शालिः-धान्यम्, णिनिप्रत्यये-शाली। इमानि रूपाण्यधिकान्यत्रेति विशेषः।

---

1. शर्वति हिनस्तीति **शर्वः** शिवः। शर्वस्य स्त्री इत्यर्थे 'इन्द्रवरुणभव**शर्व**—' (4-1-49) इति पुंयोगे ङीषानुकौ भवतः। 'शिवा भवानी रुद्राणी **शर्वाणी** सर्वमङ्गला' **इत्यमरः।**
2. औणादिके (द. उ. 7-18) अभच्प्रत्यये रूपमेवम्। **शलभः**=पतङ्गः।
3. औणादिके (द. उ. 10-17) यक्प्रत्यये **शल्यमिति** रूपम्। शरीरान्तर्गतं शस्त्रमित्यर्थः।

(1692) "शल गतौ" (I-भ्वादिः-843. सक. सेट्. पर.) ज्वलादिः।
'गतौ शलति संवृत्यां चलने शलते शले:।' (श्लो. 154) इति देवः।
तरङ्गिण्यां 'शल गतौ' इति पठित्वा इतः पूर्वं भ्वादौ 'शल आशुगमने' इति दृश्यते। 'शल आशुगमने इति ज्वलादौ क्षीरस्वामी' इति पुरुषकारः। क्षीरतरङ्गिण्यां ज्वलादौ न दृश्यते। '—श्लाघायाम्' इति कौशिकः' इति हेमचन्द्रः।
सर्वाण्यपि रूपाणि भौवादिककलतिवत् (174) ऊह्यानि।

(1693) "शल्भ कत्थने" (I-भ्वादिः-390. सक. सेट्. आत्म.)
समस्तान्यपि रूपाणि भौवादिकगल्भतिवत् (389) ज्ञेयानि।

(1694) "शव गतौ" (I-भ्वादिः-725. अक. वेट्. पर.)
'शवतिर्गतिकर्मा कम्बोजेषु भाष्यते; विकार एवैनमार्या आहुः' इति निरुक्तम् (2-2) महाभाष्यं च (1-1-1)। '—विकारे' इत्येव वोपदेवः। पचाद्यचि शवः। बवयोरभेदात् औणादिके (द. उ. 8-100) शबरः=वन्यजातिविशेषः। क्विपि, ऊठि शौः इति भवति। इतररूपाणि सर्वाण्यपि कैयादिकखवतिवत् (345) बोध्यानि।

(1695) "शश प्लुतगतौ" (I-भ्वादिः-726. सक. सेट्. पर.)
'—प्लुतिगतौ। प्लुतिर्निर्गमने' इति क्षीरस्वामी। पचाद्यचि—शशः=मृगविशेषः। शश एव शशकः। शशनः—'चलनशब्दार्थात्—' (3-2-148) इति युच्। समस्तान्यपि रूपाणि भौवादिककशतिवत् (178) बोध्यानि।

(1696) "शष हिंसार्थः" (I-भ्वादिः-690. सक. सेट्. पर.)
[1]शष्पम्=बालतृणम्, श्मश्रु च। इतराणि समस्तान्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिककषतिवत् (179) ज्ञेयानि।

---

1. 'खष्पशिल्पशष्प—' (द. उ. 7-7) इत्यादिना पप्रत्यये सिद्धयतीति माधवः। दशपाद्युणादिवृत्तौ तु (7-7) "'शिष हिंसायाम्' अस्योपधाया अत्वं निपात्यते। शिष्यते गवादिभिरिति शष्पम्= घासः, वीरुच।" इत्युक्तम्।



(1697) "[आङः] शसि इच्छायाम्"
(I-भ्वादिः-629. सक. सेट्. आत्म.)
'आशंसे स्यादिच्छायां शंसतीति स्तुतौ भवेत्।
हिंसायां शसति—' (श्लो. 183, 184) इति देवः।
"आङः शसि' इति पाठात् अयमाङ्पूर्व एव प्रयोक्तव्यः। तथा च काश्यपः 'अयमाङ्पूर्व एव प्रयोक्तव्यः' इति। सम्मतायाम् 'न च केवलो नाप्युपसर्गान्तरपूर्वः' इति॥" इति माधवः। "दुर्गः 'आङः शासु—' इत्याह।.... आशासित्वा-आशास्त्वा।" इति क्षीरस्वामी। एतेन क्त्वायां आङा सह समासेऽपि न ल्यप् दुर्गमते, इति सिद्धयति। माधवस्तु नैतदनुमेने; य एवमाह—'आशस्य; क्त्वो ल्यप्' इति। उदित्त्वेन क्त्वायामिड्विकल्पपक्षः परं दुर्गाणामधिकः। [1]आशंसुः। 'शन्सु' इति दुर्गपाठ इति मा. धा. वृत्तिदर्शनाज्ज्ञायते। इदित्पक्षपाती माधवोऽपि ल्यपि आशस्य इति कथं रूपसिद्धिमभिप्रैतीति विचार्यं वर्तते; यतः स एव निष्ठायां आशंसितम् इत्याह। ईदृशेषु स्थलेषु प्रयोगाः पाठाश्च अनियता दृश्यन्ते। सर्वाण्यपि रूपाणि चौरादिककुंशयतिवत् (232) बोध्यानि।

(1698) "शसु हिंसायाम्" (I-भ्वादिः-727. सक. सेट्. पर.)
'हिंसायां शसति—' (श्लो. 184) इति देवः। '—वधे' इति वोपदेवः।
[2]क्वसौ-शशसिवान्, क्त्वायाम्-[3]शसित्वा-शस्त्वा, [4]विशस्तः-विशसितः, [5]शस्त्रम्-शस्त्री, [6]विशसिता-वैशस्त्रम्,

---

1. 'सनाशंसभिक्ष उः' (3-2-168) इति कर्तरि उप्रत्ययस्ताच्छीलिकः।
2. लिटः क्वसौ, 'न शस—' (6-4-126) इत्यादिना एत्वाभ्यासलोपनिषेधः।
3. उदित्त्वेन क्त्वायामिड्विकल्पः; तेन रूपद्वयम्।
4. 'धृषिशसी वैयात्ये' (7-2-19) इति वैयात्ये (= अविनीते) अर्थे एव 'यस्य विभाषा' (7-2-15) इतीण्निषेधः; इति नियमात् 'शस्तो वृषलः' इत्यविनीतार्थे एवेण्निषेधः। 'विशसितः पशुः' इत्यत्र न।
5. 'दाम्नीशस—' (3-2-182) इत्यादिना करणे ष्ट्रन्प्रत्ययः। षित्त्वात् स्त्रियां ङीष्।
6. ताच्छीलिकः 'तृन्' (3-2-135) इति तृन्प्रत्ययः। विशसितुर्धर्म्यं इत्यर्थे 'विशसितुरिड्लोपश्च' (वा. 4-4-49) इतीड्लोपसंयोगविशेषोऽण्प्रत्ययः। आदिवृद्धिः।

[1]शस्यम्-शास्यम् इति विशेषः। इतराणि सर्वाण्यपि रूपाणि भौवादिक**कसति**वत् (180) बोध्यानि।

(1699) “ **शंसु स्तुतौ** ” (I-भ्वादिः-728. सक. अनि. पर.)

‘आशंसे स्यादिच्छायां शंसतीति स्तुतौ भवेत्। हिंसायां शसति—’ (श्लो. 183, 4) इति **देवः**। ‘अयं **हिंसायामपि**’ इति **दुर्गः**।

[2]शस्यम्-शंस्यम्, [3]शंसित्वा, शस्त्वा, [4]शस्तम्, [5]नृशंसः, [6]नराशंसः, [7]ब्राह्मणाच्छंसी, [8]प्रशस्तिं विन्दन्ति, [9]प्रशंसा, आशंसा, [10]आशंसुः,

---

1. ‘तकि**शसि**—’ (वा. 3-1-97) इति ण्यदपवादो यत्प्रत्ययः। **शास्यम्** इति तु ‘हन्त्यर्थाश्च’ (ग. सू. चुरादौ) इति वचनात् स्वार्थे णौ, णिजन्ताद्यति बोध्यम्।
2. ‘**शंसि**दुहिगुहिभ्यो वा’ (काशिका 3-1-109) इति वचनात् क्यब्विकल्पः। क्यप्पक्षे प्रत्ययस्य कित्त्वेनोपधानकारलोपः। अनुस्वारोपधत्वेऽपि, उपदेशे ‘नकारजावनुस्वारपञ्चमौ झलि धातुषु’ **इत्यभियुक्त**वचनात् नोपधः। क्यबभावपक्षे ण्यति **शंस्यम्** इति भवति। ‘**प्रशस्यस्य** श्रः’ (5-3-60) इति निर्देशबलात् क्यब्विकल्पपक्षः सिद्ध इति बोध्यम्।
3. उदित्त्वेन क्त्वायामिड्विकल्पः। इडभावपक्षे उपधानकारलोपः। इट्पक्षे ‘न क्त्वा सेट्’ (1-2-18) इति नियमात् न कित्त्वम्; तेन नोपधानकारलोपः।
4. ‘यस्य विभाषा’ (7-2-15) इति निष्ठायामिण्निषेधः।
5. नॄन् शंसतीति **नृशंसः**=क्रूरः। ‘कर्मण्यण्’ (3-2-1) इत्यण्। अत्र **दुर्गो**क्तरीत्या हिंसैव धात्वर्थः।
6. नरा एनं शंसन्ति इति, नराः अस्मिन् आसीनाः शंसन्ति इति वा **नराशंसः**=अग्निः, देशविशेषो वा। ‘हलश्च’ (3-3-121) इति संज्ञायां घञ्। अत्र पूर्वपदस्य वनस्पत्यादिषु (6-2-140) पाठाद् दीर्घ इति **माधवः**। **काशिकायां** तु (6-2-140) ‘अन्येषामपि—’ (6-3-137) इति दीर्घ उक्तः।
7. अत्र ब्राह्मणादादाय शंसति इति वृत्तिपक्षे ‘साधुकारिण्युपसंख्यानम्’ (वा. 3-2-78) इति णिनिः। **माधवस्तु** ‘सुप्यजातौ—’ (3-2-78) इति णिनिमाह। तत्तु रूढिशब्देष्वसङ्गतमिति बोध्यम्। ‘**ब्राह्मणाच्छंसिन** उपसंख्यानम्’ (वा. 6-3-2) इति पञ्चम्या अलुक्। यदा तु ब्राह्मणानि शंसति इति वृत्तिः, तदा ‘बहुलमाभीक्ष्ण्ये’ (3-2-81) इति णिनिः। द्वितीयायाः पञ्चमी निपातनादेव। पञ्चम्या अलुक् तु ‘तत्पुरुषे कृति—’ (6-3-14) इति। उभयथाऽपि **ब्राह्मणाच्छंसी** कश्चन ऋत्विग्विशेषः।
8. स्त्रियां क्तिनि नलोपे रूपमेवम्।
9. ‘**प्रशंसा**वचनैश्च’ (2-1-66) इति निर्देशात् क्तिनं पक्षे बाधित्वा अकारप्रत्ययोऽपि भवतीति बोध्यम्। तेन **प्रशस्तिः, प्रशंसा** इत्युभयमपि साधु।
10. ‘**सनाशंस**भिक्ष उः’ (3-2-168) इति तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु उप्रत्ययः।



[1]अभिमतफलशंसी[A], इति विशेषरूपाणि। सामान्यरूपाणि तु ण्यन्तप्रकृतिकसन्नन्तं विना चौरादिक**कुंशयति**वत् (232) बोध्यानि।

(1700) “ **शाखृ व्याप्तौ** ” (I-भ्वादिः-126. अक. सेट्. पर.)

[2]शाखा, विशाखा। सर्वाण्यपि रूपाणि भौवादिक**द्राखति** (879) वत् बोध्यानि। [3]शाखोटकः=वृक्षविशेषः।

(1701) “ **शाडृ श्लाघायाम्** ” (I-भ्वादिः-289. सक. सेट्. आत्म.)

[4]शाला, [5]रूपशाली, [6]शालिः, [7]शालूकम्। सर्वाण्यपि रूपाणि भौवादिक**काशति**वत् (186) बोध्यानि।

(1702) “ **शान तेजने** ” (I-भ्वादिः-995. सक. सेट्. उभ.)

**तेजनम्**=आयुधानां तीक्ष्णीकरणम्। [8]शीशांसकः-सिका;

---

1. अत्र ‘सुप्यजातौ—’ (3-2-78) इति णिनिः।
2. ‘गुरोश्च हलः’ (3-3-103) इति स्त्रियामकारप्रत्ययः। विशिष्टा शाखा **विशाखा**=नक्षत्रविशेषः। शाखाशब्दादेव **शाखी**, प्रतिशाखं भवं **प्रातिशाख्यं** इत्यादीनि तद्धितरूपाणि भवन्तीति बोध्यम्।
3. औणादिकप्रत्ययविशेषनिष्पन्नोऽयं शब्दः।
4. शालते (शाडते) इति **शाला** इति **क्षीरस्वाम्यादिभिः** उदाहृतम्। ‘गुरोश्च हलः’ (3-3-103) इत्यकारप्रत्ययोऽत्रेति तेषामाशयः। **भाष्यकैयटयो**स्तु ‘लस्य’ (3-4-77) इत्यत्र ‘शो तनूकरणे’ इत्यस्मात् औणादिके लन्प्रत्यये **शाला**-शब्दो निष्पन्न इति स्पष्टमेव प्रतिपादितम्। अतश्च ‘उपायस्य उपायान्तरादूषकत्वम्’ इति न्यायेन साम्प्रतमस्माकमुभयमपि प्रमाणमेवेति बोध्यम्।
5. डकारलकारयोरेकत्वस्मरणात् रूपेण शाडते=शालते, इत्यर्थे **रूपशाली** इति **मैत्रेये**णात्रोदाहृतमिति **माधवः**। एवं **काश्यपो**ऽपीति स एवाह। अत्र णिनिप्रत्ययः।
6. ‘इन्’ (द. उ. 1-46) इतीन्प्रत्यये रूपम्। **शालिः**=व्रीहिविशेषः। अत्रापि डलयोरेकत्वस्मरणात् लकारश्रवणम्।
7. औणादिके (द. उ. 3-47) ऊकण्प्रत्यये रूपम्। **शालूकम्**=उत्पलादीनां कन्दः। अत्रापि डलयोरेकत्वस्मरणात् लकारस्य श्रवणम्।
8. ‘मान्बधदान्**शान्भ्यो** दीर्घश्चाभ्यासस्य’ (3-1-6) इत्यत्र ‘**शानेर्निशाने**’ (वा. 3-1-6) इति अर्थविशेषे धातोः स्वार्थे सन्, अभ्यासस्य दीर्घश्च विधीयेते। अभ्यासकार्याणि, हलादिशेषाभ्यासेत्वादीनि भवन्ति। अस्य सनः ‘धातोः’ (3-1-91) इति अधिकृत्य विहितत्वाभावात् नेडागम इति विशेषः। विस्तरस्तु **दान**धातौ (832) द्रष्टव्यः।

A ‘**अभिमतफलशंसी** चारु पुस्फोर बाहुः...............॥’ भ. का. 1-27

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकदीदांसतिवत् (832) ज्ञेयानि ।

(1703) " [आङः] शासु इच्छायाम् "

(II-अदादिः-1022. सक. सेट्. आत्म.)

" **आत्रेय-मैत्रेय-स्वामि-काश्यपाः** अमुमुदितं पठन्ति । **वर्धमान-सम्मता-कारहरदत्तगर्गादयः** अनुदितं पठन्ति " इति **माधवः** ।

'—इच्छायामाशास्ते, शास्ति शासने ।' (श्लो. 184) इति **देवः** । 'नमोवाकं **प्रशास्महे** ।' इति **भवभूति** (उत्तररामचरिते 1-1) प्रयोगात् प्रायेणायम् आङ्पूर्वः । [1]आशीः, [2]आशिषा, [3]अन्यदाशीः-अन्याशीः, [4]आशासा-आशास्तिः, [5]आशास्यम्, [6]आशासितः,[A]

1. '**आङः शासः** क्वौ' (वा. 6-4-34) इति आङ्पूर्वकादस्मात् क्विपि, उपधाया इत्वम् । '**आशिषि** लिङ्लोटौ' (3-3-137), 'क्षिया**शीः**—' (8-2-104) इत्यादिनिर्देशाद्वा उपधाया इकारः । धातुसकारस्य 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः । **मित्रशीः आर्यशीः** इत्यादि तु नास्माद्धातोः, किन्तु 'शासु अनुशिष्टौ' इत्यस्मादिति **न्यासपदमञ्जर्यादिषु** स्पष्टम् ।
2. 'आपं चैव हलन्तानाम्—' इति वचनात् क्विबन्तात् टाप् । क्विबन्तात्, धातोः इत्वे, '**शासि**वसि—' (8-3-60) इत्यादिना षत्वे च एवं सम्पद्यते ।
3. अन्या आशीः **अन्यदाशीः** । 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुग् **आशीराशा**—' (6-3-99) इत्यादिना दुगागमः । षष्ठीतृतीयान्तत्वे तु **अन्याशीः** इत्येव ।
4. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्यये रूपमेवम् । एतच्च **माधव**-मतेनोक्तम् । **क्षीरस्वामी** तु " **आशास्तिः** । 'गुरोश्च हलः' (3-3-103) इति नास्ति ; निष्ठायां सेटोऽकारवचनात् (द्रष्टव्यम् वा. 3-3-94) ।" इत्याह । अत्र प्रयोगः प्रमाणम् ।
5. 'एतिस्तु**शास्**—' (3-1-109) इत्यत्र उदितो निर्देशात् न अस्मात् क्यपः प्रसङ्ग इति **आशास्यम्** इति ण्यदेव—इति **माधवः** । अयमाशयः—'निरनुबन्धकग्रहणे न सानुबन्धकस्य' (परि-82) इति वचनात् प्रकृतसूत्रे 'शासु अनुशिष्टौ' इत्यस्यैव ग्रहणम्, नास्येति । तेनात्र ण्यदेवेति । '**शास** इद् अङ्हलोः' (6-4-34) इत्यनेनात्र ण्यत्प्रत्यये इत्वं नाशङ्क्यम् ; संयोगस्य 'संयोगो विप्रयोगश्च साहचर्यं...... विशेषस्मृतिहेतवः ॥' (वाक्यपदीयम् 2-315) इति विशेषस्मृतिहेतुत्वात् अङ्सम्बन्धिन एव **शासेः** इकारविधौ ग्रहणात्, अस्य च अङभावात् ।
6. '**आङः शास**' इति **दुर्ग**सम्मतपाठे निष्ठायामिटि एवं रूपम् । उदित्पक्षपातिनौ **आत्रेयमैत्रेयौ** तु **आशास्तः आशास्तवान्** इति निष्ठायां रूपमाहतुरिति **माधवीये** स्पष्टम् । अयं भावः—उदित्पक्षे क्त्वायामिड्विकल्पनात् निष्ठायाम् 'यस्य विभाषा' (7-2-15) इतीण्निषेधः, इति तेषां मतम् ।

A. 'ईड्योऽयमीशः समुपास्तिशीलै**राशासितः**—।' धा. का. 2-45.



[1]आशासनः, [2]आशासित्वा-आशास्त्वा, इति विशेषरूपाणि । इतररूपाणि सर्वाण्यपि आदादिकासधातुवत् (61) बोध्यानि ।

(1704) " शासु अनुशिष्टौ "

(II. अदादिः-1075. द्विकर्म. सेट्. पर.) **जक्षित्यादिः** ।

'**अनुशिष्टिः**=नियोगः' इति **क्षीरस्वामी** । विविच्य ज्ञापने प्रसिद्धः ।

'—इच्छायामाशास्ते, शास्ति शासने ।' (श्लो. 184) इति **देवः** ।

[3]शिष्यः, [4]शास्यम्, [5]दुश्शासनः - दुश्शासः, [6]आशीः, [7]शिष्ट्वा—शासित्वा, [8]शिष्टः, [9]शिष्टिः-शास्तिः, [10]शास्ता प्रशास्ता, माणवकं धर्मं

1. तच्छीलादिषु कर्तृषु 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच्प्रत्ययः ।
2. " 'क्त्वाऽपि च्छन्दसि' (7-1-38) इति ल्यपोऽपवादे क्त्वादेशे **आशास्त्वा आशासित्वा** इतीड्विकल्पः " इति **आत्रेयमैत्रेया**वाहतुरिति **माधवः** । छन्दसि एवं सम्भवेऽपि लोके 'समासेऽनञ्पूर्वे—' (7-1-37) इति क्त्वाप्रत्ययस्य ल्यबादेशे **आशास्य** इत्येव न्याय्यमिति बोध्यम् ।
3. 'एतिस्तु**शास्**—' (3-1-109) इति क्यप् । '**शास** इदङ्हलोः' (6-4-34) इत्युपधाया इकारः । '**शासि**वसि—' (8-3-60) इत्यादिना षत्वम् ।
4. **शास्यम्** इति तु 'शसु हिंसायाम्' इति भौवादिकधातोः 'हन्त्यर्थाश्च' (ग. सू. चुरादिः) इति वचनाण्णिचि, णिजन्ताद् यति ज्ञेयम् ।
5. 'भाषायां **शासि**—' (वा. 3-3-130) इत्यादिना खलपवादो युच्प्रत्ययः । तस्य वैकल्पिकत्वं **प्रक्रियाकौमुद्यामुक्तम्** ; तेन **दुश्शास** इति खलपीति **केचित्** ।
6. भावे सम्पदादित्वात् (वा. 3-3-94) क्विपि '**आशासः** क्वावुपधायाः—' (वा. 6-4-34) इति उपधाया इकारः ।
7. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इडभावपक्षे इत्वमुपधायाः, इट्पक्षे धात्वाकारस्य उपधात्वाभावाद् नेकार इति विशेषः । अत एव षत्वमपीकाराश्रयं न भवति ।
8. 'यस्य विभाषा' (7-2-15) इति इण्निषेधात् एकमेव रूपं निष्ठायाम् ।
9. **शिष्टिः** इत्यत्र 'तितुत्र—' (7-2-9) इतीण्निषेधः । **शास्तिः** इति तु अस्मादेव धातोः क्तिच्प्रत्यये, यद्वा, धातुनिर्देशे श्तिप्प्रत्यये वा ज्ञेयम् । णिजन्तात् **शासना** इति भवति । णिजन्तादेव **शास्तिः** इत्यपि **माधवः** । तस्यायमाशयः—बाहुलकात् युचा न बाधः, इति ।
10. 'तृन्' (3-2-135) इति ताच्छीलिकः तृन्प्रत्ययः । **प्रशास्ता** इत्यप्येवमेव । **प्रशास्ता**=ऋत्विग्विशेषः । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां च अनिटौ' (वा. 3-2-135) इत्यनिट्त्वम् । संज्ञाभिन्नस्थलेषु '**प्रशासितारं** सर्वेषाम्—' (मनुः 12-1-22) इत्यादिषु इड् भवत्येवेति विशेषः ।

[1]शासत्, [2]मित्रशीः-आर्यशीः, इति विशेषरूपाणि। सामान्यरूपाणि तु आदादिक**चकास्ति**वत् (485) बोध्यानि।

(1705) " **शिक्ष विद्योपादाने** " (I-भ्वादिः-605. सक. सेट्. आत्म.)

[3]शिक्षा। 'शिक्षेर्जिज्ञासायाम्' (वा. 1-3-21) इति **वार्तिकं** नियमार्थम् इत्यभिप्रयन्तः, अयं धातुः शिक्षाभिन्नार्थे परस्मैपदी इति **क्षीरस्वामिप्रभृतय** आहुः। [4]शक्लधातोः सन्नन्तस्य विध्यर्थत्वसम्भवात् नैतन्नियमार्थमिति **कैयटन्यासपदमञ्जरीधातुवृत्त्यादिषु** स्पष्टम्। अतः सर्वत्रात्मनेपदमेवेति सिद्धान्तः। सर्वाण्यपि रूपाणि यथासम्भवमूह्यानि।

(1706) " **शिखि गत्यर्थः** " (I-भ्वादिः (पा.) सक. सेट्. पर.)

भ्वादिषु 'उख उखि—' इति दण्डके **केश्चित्** पठितो धातुरयम्। भौवादिक**कण्ठति**वत् (149) रूपाणि ज्ञेयानि।

(1707) " **शिघि आघ्राणे** " (I-भ्वादिः-161. सक. सेट्. पर.)

**भौवादिककण्ठति**वत् (149) सर्वाण्यपि रूपाण्यस्यापि ज्ञेयानि।

**शिङ्घान[ण]कः** रोगविशेषः। 'लङ्शिङ्घि—' [द. उ. 3-27] इत्यादिना आन[ण]कप्रत्ययः। **शिङ्घाणम्** नासामलम्। बाहुलकात् आनक्प्रत्ययः।

(1708) " **शिजि अव्यक्ते शब्दे** " (II-अदादिः-1027.अक. सेट्. आत्म.)

शिञ्जानः-शानच्। 'तालैः शिञ्जद्वलय—' (मेघदूतम् 2-19) इति तु 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' इति परिभाषया (98) साधुरिति **माधवः**। 'अव्यक्ते शब्दे' इत्युक्तावपि भूषणध्वनावेवायं **कविभिः** प्रयुज्यते—यथाह**अमरसिंहः**— 'भूषणानां तु शिञ्जितम्' इति। एतच्च शब्दशक्तिस्वाभाव्यादुपपद्यते।

1. शतरि रूपमेवम्। 'जक्षित्यादयः षट्' (6-1-6) इत्यभ्यस्तसंज्ञायाम्, 'नाभ्यस्ताच्छतुः (7-1-78) इति नुम्निषेधः।
2. मित्राणि शास्तीति **मित्रशीः**। आर्यान् शास्तीति **आर्यशीः**। कर्तरि 'क्विप् च' (3-2-76) इति क्विप्। अत्राप्युपधाया इकार इति विशेषः।
3. '**गुरोश्च हलः**' (3-3-103) इत्यकारप्रत्ययः।
4. शक्लधातोः सन्नन्ते '**शिशिक्ष**' इति स्थिते '**अत्र लोपोऽभ्यासस्य**' (7-4-58) इत्यभ्यासलोपः। तेन '**शिक्ष**' इति सन्नन्ता प्रकृतिः सम्पन्नेति ज्ञेयम्।



शिञ्जिनी—आवश्यकार्थे 'आवश्यकाधमर्ण्ययोः—' (3-3-170) इति णिनिप्रत्यये तदन्तात् ङीष्। शिञ्जा-पचाद्यचि टाप्। इतराणि समस्तान्यपि रूपाणि आदादिक**णिजि**धातुवत् (672) बोध्यानि।

(1709) " **शिञ् निशाने** " (V-स्वादिः-1249. सक. अनि. उभ.)

**निशानम्**=तीक्ष्णीकरणम्। सर्वाण्यपि रूपाणि सौवादिक**चिनोति**वत् (519) बोध्यानि। शिन्वन्-ती; शिन्वानः।

(1710) " **शिट अनादरे** " (I-भ्वादिः-303. सक. सेट्. पर.)

शेटकः-शेटकः-शिशिटिषकः-शिशेटिषकः-षिका, शेशेटकः, इत्यादीनि रूपाणि भौवादिक**केटति**वत् (190) बोध्यानि। शेटनीयम्।

(1711) " **शिल उञ्छे** " (VI-तुदादिः-1362. अक. सेट्. पर.)

'**उञ्छः**=उद्धृतसस्यशेषाहरणम्' इति **दुर्गः**। पचाद्यचि—शिलम्। भिदादित्वादङि—शिला। सर्वाण्यपीतराणि रूपाणि तौदादिक**केलति**वत् (193) बोध्यानि।

(1712) " **शिष हिंसार्थः** " (I-भ्वादिः-687. सक. अनि. पर.)

'शिषोऽसर्वोपयोगे यौ शेषयेत् शेषतीत्युभे ॥
लुङ्घमावादङोऽशेषीत् शिनष्टीति विशेषणे।' (श्लो. 178-9) इति **देवः**।
'**शिषिं** पिषिं श्लिष्यतिपुष्यती त्विषिम्' इति **व्याघ्रभूति**वचनात् (काशिका 7-2-10) अनिट्त्वं धातोरस्य बोध्यम्।

शेषकः-षिका, शेषकः-षिका, शिशिक्षकः-क्षिका, शेशिषकः-षिका, [1]शिष्पः, [2]शेषः, इत्यादीनि समस्तान्यपि रूपाणि रौधादिक**पिनष्टि**वत् (1002) बोध्यानि। '**शिष्यति**' 'तल्लोकं **शिषति**' (गोपथब्राह्मणम् 3-82-2) इत्याद्यः प्रयोगाः यथासम्भवं दिवादिषु तुदादिगणेऽवसाने मुचाद्यन्तर्गणे च छान्दसत्वेन पठित्वा साधुत्वसम्भावनार्हाः। अतो न तदर्थं तुदादिपाठावश्यकतेति बोध्यम्।

(1713) " **शिष असर्वोपयोगे** " (X-चुरादिः-1818. अक. सेट्. उभ.)

'शिषोऽसर्वोपयोगे यौ शेषयेत् शेषतीत्युभे। [**आधृषीयः**।

1. "'खष्प**शिल्प**—' (द.उ. 7-7) इति निपातनात् पप्रत्ययः। **शिष्पः**=कलायोगः" इति **माधवः**।
(द. उ. वृत्तौ 7-7) उपधाया अत्वे **शष्पम्**=घासः इति दृश्यते।
2. शेषति=हिनस्तीति **शेषः**=नागः। कर्तरि बाहुलकात् घञ्।

लुङ्यभावादङोऽशेषीत् शिनष्टीति विशेषणे ॥' (श्लो. 178-9) इति **देवः** ।
विपूर्वोऽयमतिशये वर्तते—यथा—**विशेषः** । आधृषीयत्वेन णिजभावपक्षे अनिट्त्वमस्यापि धातोरिति **माधवीये** स्पष्टम् । [1]शष्पम् । सर्वाण्यपि रूपाणि यथासम्भवं **चेतयति**वत् (522), पूर्वलिखितधातुवच्च स्वयमेवोह्यानि । आधृषीयत्वात् णिज्विकल्पः ।

(1714) "**शिष्लृ विशेषणे**" (VII-रुधादिः-1451. अक. अनि. पर.)

'**विशेषणम्**=उपरञ्जनम्' इति **दुर्गादासः** ।
[2]विशेषः-वैशेषिकः, शेषः, [3]महाविशिष्टः। यथासम्भवं सर्वाण्यपि रूपाणि रौधादिक**पिनष्टि**वत् (1002) बोध्यानि ।

(1715) "**शीक आमर्षणे**" (X-चुरादिः-1827. सक. सेट्. उभ.)

**आधृषीयः ।**

'शीकरः' इत्यादिषु जलसेचनार्थकलाभार्थं **वोपदेव**प्रभृतिभिः धातुरयं 'सेके आमर्षे च' इति पठितः । तत्तु 'शीकृ सेचने' इति भ्वादिधातोः सम्पद्यत इति व्यर्थमेव । तथा चोक्तम्—'मर्षणे शीकयेत् शीकेत्; सेचने शपि शीकते' (श्लो. 42) इति **देवेन** । आधृषीयत्वेन णिज्विकल्पः । रूपाणि यथासम्भवं चौरादिक**चीकयति**वत् (529) बोध्यानि ।

चुरादिष्वेव '**शीक भाषार्थः**' इति धात्वन्तरं अनाधृषीयं **स्वामिकाश्यपादयः** पठन्ति । तस्य प्रायपाठविरलत्वात् नास्माभिरुल्लेखः कृतः ।

(1716) "**शीकृ सेचने**" (I-भ्वादिः-75. सक. सेट्. आत्म.)

गत्यर्थकोऽपि कश्चित् **शीकृ**धातुः **क्षीरस्वामिना** भ्वादिषु पठितः । "'**सीकृ**'

---

1. औणादिके (द. उ.7-7) पप्रत्यये उपधाया अकारे च रूपमेवम् । **शष्पम्**=बालतृणम् ।
2. विशिष्यते इति **विशेषः**—**कणाद**संमतः पदार्थविशेषः । विशेष एव **वैशेषिकः** विनयादित्वात् (5-4-34) स्वार्थे ठक् । ठस्य इकादेशः ।
3. विपूर्वकात् निष्ठायां **विशिष्टः** इति सिद्धम् । महत्या विशिष्टः **महाविशिष्टः** । संज्ञाविशेषः । 'महदात्वे घासकर**विशिष्टे**षूपसंख्यानम्' (वा. 6-3-46) इत्यात्वम्; पुंवद्भावश्च ।



इति **आर्याः**" इति **धनपालः** । [1]शीकायमानः । अयम् अनुदित् इति **केचित्** ।
सर्वाणि रूपाणि भौवादिक**चीभति**वत् (530) ऊह्यानि ।

(1717) "**शीङ् स्वप्ने**" (II-अदादिः-1032. अक. सेट्. आत्म.)

शायकः-यिका, शायकः-यिका, [2]शिशयिषकः-षिका, [3]शाशय्यकः-य्यिका ;
[4]शयिता-त्री, शाययिता-त्री, शिशयिषिता-त्री, शाशय्यिता-त्री ;
— शाययन्-न्ती, — शाययिष्यन्-न्ती-ती ; —
[5]शयानः,[A] [6]शाययमानः, शिशयिषमाणः, शाशय्यमानः ;
शयिष्यमाणः, शाययिष्यमाणः, शिशयिषिष्यमाणः, शाशय्यिष्यमाणः ;
[7]सुखशीः-सुखश्यौ-सुखश्यः ; — — —
[8]शयितम्-तः[B]-तवान्, शायितः, शिशयिषितः, शाशयितः-तवान् ;
[9]शयः, [10]विशयी,

---

1. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्यये **शीका** इति सिद्ध्यति । शीकां करोति इत्यर्थे 'अटाट्टा**शीका**—' (वा. 3-1-17) इत्यादिना क्यङ् । अयं च क्यङ् 'तत्करोति' (वा. 3-1-26) इति णिचोऽपवादः । 'णिजपीष्यते' इति **न्यासकारः** । क्यङन्तात् शानचि रूपमेवम् । **शीकायमानः**=सेचक इत्यर्थः ।
2. सन्नन्तात् द्विर्वचनादिकेषु कृतेषु सर्वत्र रूपमेवं बोध्यम् ।
3. यङन्ते प्रत्ययस्य ङित्त्वात् 'अयङ् यि क्ङिति' (7-4-22) इत्ययङ् सर्वत्र बोध्यः ।
4. 'इवर्णान्त्वथ **शीङ्**श्रिञावपि' (व्याघ्रभूतिकारिका; काशिका 7-2-10) इति वचनाद् धातोः इड् भवतीति बोध्यम् ।
5. शानच्प्रत्ययस्य 'सार्वधातुकमपित्' (1-2-4) इति ङिद्भावेन यद्यपि 'क्ङिति च' (1-1-5) इति गुणनिषेधोऽत्र प्राप्तः; तथापि '**शीङः** सार्वधातुके गुणः' (7-4-21) इति विशेषविधानाद् गुणो भवतीति बोध्यम् । '**शयाना** भुञ्जते यवनाः' इत्यत्र 'लक्षणहेत्वोः क्रियायाः' (3-2-126) इति शानच् इति ज्ञेयम् ।
6. अचित्तवत्कर्तृकत्वे एवं शानजपि ण्यन्तात् भवतीति **माधवः** । चित्तवत्कर्तृकत्वे तु 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति नित्यं परस्मैपदमेव ।
7. सुखं शेते इति **सुखशीः** । द्विवचनादौ 'एरनेकाचोऽसंयोगपूर्वस्य' (6-4-82) इति यणि **सुखश्यौ सुखश्यः** इत्यादीनि बोध्यानि ।
8. 'निष्ठा **शीङ्**—' (1-2-19) इति वचनात् धातोरत्र निष्ठाया अकित्त्वम् । तेन गुणः ।
9. पचादिपाठादच्प्रत्ययः । गुणायादेशौ ।
10. '**विशयी** देशे' [ग. सू. 3-1-134] इति ग्रह्यादिपाठात् विपूर्वकात् णिनिप्रत्ययः । निपातनात् देशविशेषवाचकत्वे वृद्ध्यभावः । अन्यत्र **विशायी** इत्येव ।

A. '**शयानां** कुड्मले तारां दिधिषामिव निर्मलाम् ॥' भ. का. 9-84.
B. 'मणिरत्नाधि**शयितं** प्रत्युदैक्षन्त तोयधिम् ॥' भ. का. 7-103.

[1]खेशयः-खशयः, [A]बिलेशयः, [2]पूर्वाह्णशयः, [3]पार्श्वशयः, उरश्शयः, उदरशयः, पृष्ठशयः, हस्तशयः,

ऊर्ध्वशयः, [4]उत्तानशयः,[B] अवमूर्धशयः, [5]दिग्धसहशयः, [6]गिरिशः,[C] [7]शयालुः,[D]

[8]शयितः, [9]अतिशयितो गुरुं शिष्यः-अतिशयितो गुरुः शिष्येण,

---

1. खे शेते इति **खेशयः—खशयः**। 'अधिकरणे **शेतेः**' (3-2-15) इति अच्प्रत्ययः। '**शय**वासवासिष्वकालात्' (6-3-18) इति पाक्षिकः सप्तम्या अलुक्। एवं **रङ्गेशयः अद्रिशयः बिलेशयः कुशेशयम्** इत्यादयो बोध्याः।
2. पूर्वाह्णे शेते इति **पूर्वाह्णशयः**। अत्र कालार्थकत्वात् न सप्तम्याः पाक्षिकोऽप्यलुक्—'—अकालात्' (6-3 18) इत्युक्तेः।
3. पार्श्वाभ्यां शेते **पार्श्वशयः**। उरसा शेते **उरश्शयः**। एवं **उदरशयः पृष्ठशयः** इत्यादयो ज्ञेयाः। अत्र सर्वत्र 'पार्श्वादिषूपसंख्यानम्' (वा. 3-2-15) इति अच्प्रत्ययः।
4. उत्तानः शेते **उत्तानशयः**। अवमूर्धा शेते **अवमूर्धशयः**। अत्र 'उत्तानादिषु कर्तृषु' (वा. 3-2-15) इति अच्प्रत्ययः।
5. दिग्धेन सह शेते इति **दिग्धसहशयः**। 'दिग्धसहपूर्वाच्च' (वा. 3-2-15) इति अच्प्रत्ययः। '**दिग्धसह**' इत्यत्र, मयूरव्यंसकादित्वात् (2-1-72), अस्मादेव निर्देशाद्वा तत्पुरुषसमासः। तत उपपदसमासः।
6. 'गिरौ डश्छन्दसि' (वा. 3-2-15) इति गिरावुपपदे **शेतेर्ड**प्रत्ययः। प्रत्ययस्य डित्त्वेन टेर्लोपः। गिरिरस्यास्तीत्यर्थे लोमादित्वात् (5-2-100) शप्रत्ययेन प्रसाध्य **भाष्ये वार्त्तिक**मिदं प्रत्याख्यातम्। निमित्तावधिसंकरत उभयमपि प्रमाणमथत्वे इति सिद्धान्तः।
7. 'आलुचि **शीङो** ग्रहणम्' (वा. 3-2-158) इत्यालुच् ताच्छीलिकः। शयनशीलः **शयालुः**।
8. 'मतिबुद्धि—' (3-2-188) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् अस्मादपि धातोः वर्तमाने क्तप्रत्ययः।
9. 'गत्यर्थाकर्मकश्लिषशीङ्—' (3-4-72) इत्यादिनाऽत्र कर्तृकर्मणोर्यथासम्भवं क्तप्रत्ययो ज्ञेयः। उपसर्गवशादत्र धातुस्सकर्मक इत्यवधेयम्।

A. 'अभ्रेण खे सञ्चरमाण आरात् **बिलेशय**द्वेषिसमानजूतिः। वा. वि. 2-23.
B. 'शौरिर्यशोदा**शयने** न्यधात्ताम् आदत्त **चोत्तानशयां** कुमारीम्।' वा.वि. 3-40.
C. 'आरोपितं य**द्गिरिशेन** पश्चादनन्यनारीकमनीयमङ्कम्॥' कु. सं. 1-37.
D. 'हन्ति **नोपशय**स्थोऽपि **शयालु**र्मृगयुर्मृगान्॥' शि. व. 2-80.



ग्रामम् [1]अधिशयानः, [2]स्थण्डिलशायी[A] तरुस्थलशायी, [3]शेषशायी-अब्धिशायी,[B] रङ्गशायी, [4]शयानो भुङ्क्ते यवनः, शायः, शिशयिषुः-शिशाययिषुः, शाशयः;

शयितव्यम्, शाययितव्यम्, शिशयिषितव्यम्, शाशयितव्यम्;

[5]शयनीयम्[C], शायनीयम्, शिशयिषणीयम्, शाशय्यनीयम्;

शेयम्, शाय्यम्, शिशयिष्यम्, शाशय्यम्;

ईषच्छयः- दुश्शयः- सुशयः; — —

[6]शय्यमानः, शाय्यमानः, शिशयिष्यमाणः, शाशय्यमानः;

[7]शयः, तव [8]उपशायः[D]-विशायः, उपशयः, विशयः, [9]संशयः - सांशयिकः,

---

1. अत्र '**अधिशीङ्**स्थाऽऽसां कर्म' (1-4-46) इत्याधारस्य कर्मत्वम्।
2. 'व्रते' (3-2-80) इति णिनिः। स्थण्डिल एव शेते **स्थण्डिलशायी**। यस्स्थण्डिल एव व्रतविशेषानुपालनार्थं शेते स एवमुच्यते। यस्तु कदाचित् कटाद्यभावात् स्थण्डिले शेते सः **स्थण्डिलशय** इत्युच्यते इति बोध्यम्।
3. 'सुप्यजातौ—' (3-2-78) इति णिनिः।
4. 'लक्षणहेत्वोः क्रियायाः' (3-2-126) इति लक्षणार्थे शानच्। शयानानामेव सतां भोजनकरणं यवनलक्षणमिति समुदितार्थः।
5. अधिकरणेऽप्यनीयर्प्रत्ययो भवति, बाहुलकात्। शेरतेऽस्मिन् इति **शयनीयम्**।
6. यकि, 'अयङ् यि क्ङिति' (7-4-22) इति अयङ् आदेशः। आदेशस्य अनेकाल्त्वेऽपि 'ङिच्च' (1-1-53) इत्यन्त्यस्यैकारस्यादेशः।
7. 'एरच्' (3-3-56) इति भावेऽच्प्रत्ययः।
8. पर्यायार्थे गम्यमाने, वि, उप इत्युपसर्गाभ्यां परस्यास्य 'व्युपयोः **शेतेः** पर्याये' (3-3-39) इति घञ् प्रत्ययः, इवर्णान्तत्वलक्षणाच्प्रत्ययस्यापवादः। तव **विशायः**। मम **राजोपशायः**, राजानमुपशयितुं पर्याय इत्यर्थः। पर्यायभिन्नार्थे तु **उपशयः, विशयः** इत्यजेव।
9. संशय्यते इति **संशयः** =सन्देहः। संशयं आपन्नोऽर्थः **सांशयिकः**। '**संशयमाप**न्नः' (5-1-73) इति ठञ्। **सांशयिकः** स्थाणुः। स्थाणुः संशयं=पुरुष इति सन्देहमापन्न इत्यर्थः। **अमरसिंहस्तु** '**सांशयिकः** संशयापन्नमानसः' (3-1-5) इति संशयकर्तर्यपि प्रयोगमनुमेने; द्वितीयान्तप्रकरणे पुनः '**संशयं**—' (5-1-73) इति द्वितीयान्तत्वेनैव पाठात् कर्मण्येव प्रत्ययो न तु कर्तरि इति **न्यासपदमञ्जर्यादिषु** स्पष्टम्।

A. 'वाचंयमान् **स्थण्डिलशायि**नश्च युयुक्षमाणाननिशं मुमुक्षून्।' भ. का. 3-41
B. 'पृक्ताग्रजः पृञ्जितगोपसूनुर्दृष्टोऽ**ब्धिशायी** स जनैर्युवद्भिः॥' धा. का. 2-46
C. 'गतमाभरणप्रयोजनं **शयनीयं** परिशून्यमद्य मे॥' रघु. 8-65
D. '**निशोपशायः** कर्तव्यः फलोच्चायश्च संहतैः॥' भ. का. 7-41

[1]अतिशय:-आतिशायिक:-आतिशयिक:, शाय:, शिशयिष:, शाशय्य: ;
शयितुम्, शाययितुम्, शिशयिषितुम्, शाशय्यितुम् ;
[2]संशीति: [3]शय्या[A], [4]सुखशायिका, [5]सुशयिका, शायना, शिशयिषा-
शिशाययिषा, शाशय्या ;
शयनम्, [6]सुखशयनम्-सौखशायनिक:, श्मशानम्[7], [8]अतिशायनम्-अतिशय-
नम्-आतिशायनिकम्, शायनम्, शिशयिषणम्, शाशय्यनम् ;
[9]शयित्वा,[B] शाययित्वा, शिशयिषित्वा, शाशय्यित्वा ;

---

1. अतिशेते **इत्यतिशय:**। उपसर्गवशाद्धातोरर्थान्तरे वृत्ति:। अतिशये भव: **आतिशायिक:**, अध्यात्मादित्वात् (5-4-44) ठञ्। अनुशतिकादित्वात् (7-3-20) उभयपदवृद्धि:। '*व्याप्त***मातिशयिकेन** रसेन' (माघ: 10-23) इत्यत्र तु विनयादित्वात् (5-4-34) ठक्।
2. भावे क्तिन्। **संशीति:**=संशय:। 'तितुत्र—' (7-2-9) इतीण्निषेध:।
3. 'संज्ञायां समजनिषदनिपतमनविदषुञ्**शीङ्**भृञिण:' (3-3-99) इति संज्ञायां गम्यमानायां स्त्रियां भावादौ क्यप्प्रत्यय:। शेरतेऽस्यामिति **शय्या**। क्त्वादयङ्।
4. सुखशयनम् **सुखशायिका**। धात्वर्थनिर्देशे स्त्रियां ण्वुल्।
5. शोभन: शयोऽस्या: **सुशयिका**। 'प्रत्ययस्थात् कात्—' (7-3-44) इतीकार:।
6. सुखेन शयनम्—**सुखशयनम्**। सुखशयनं पृच्छतीति **सौखशायनिक:**। 'पृच्छतौ सुस्नातादिभ्य:' (वा. 4-4-1) इति ठक्। 'भृग्वादीन् अनुगृह्णन्तं **सौखशायनिकान्** ऋषीन् ॥' (रघुवंश: 10-14)
7. शवानां शयनम्=**श्मशानम्**। पृषोदरादित्वात् (6-3-109) शवशब्दस्य श्मादेश:, **शयन**शब्दस्य '**शान**' इत्यादेश:। **काशिका** (6-3-9) द्रष्टव्या।
8. अतिशयनम् एव **अतिशायनम्**। '**अतिशायने** तमबिष्ठनौ' (5-3-55) 'नित्ययोगेऽ**तिशायने**।' (वा. 5-2-94) इति **सूत्रवार्त्तिकादि**निर्देशात् ल्युडन्ते दीर्घ: पाक्षिक: ; तेन **अतिशयनम् अतिशायनम्** इत्युभयमपि साधु। न च वाच्यम्— 'बाधकान्येव निपातनानि' (परिभाषा. 119) इति वचनात् **अतिशायनम्** इत्यसाध्वेवेति ; यत: 'अबाधकान्यपि निपातनानि' (परि 120) इति वचनात् उभयमपि साध्वेवेति **माधव:**। वस्तुत: 'अजिविधौ भयादीनामुपसंख्यानम्—नपुंसके क्तादिनिवृत्त्यर्थम्' (वा. 3-3-56) इति वचनात् अस्य धातो: अतिपूर्वस्य ल्युटि रूपस्यानभिधानमेव ; अत एव च निर्देशात् **अतिशायनम्** इत्येकमेव रूपं साधु इति प्रतीम:।
9. 'न क्त्वा सेट्' (1-2-18) इति सेट: क्त्वाया: कित्त्वनिषेधात् गुणोऽत्र।

A. '**शय्योत्थायं** मृगान् विध्यन्नातिथेयो विचक्रमे ॥' भ. का. 4-8

B. '.........**शयित्वा** रजनीं सपौर:।' भ. का. 3-16



उपशय्य, विशाय्य, प्रशिशयिष्य, प्रशाशय्य ;
शायम् २ } शायम् २ } शिशयिषम् २ } शाशय्यम् २; }
शयित्वा २ } शाययित्वा २ } शिशयिषित्वा २ } शाशय्यित्वा २; }
[1]शयु:, [2]शयानक:, [3]शीधु:-शीलम्-शैवालम्-शेवल:, [4]शेव:, शेप:, [5]शिखा, [6]शिनि:, [7]निशीथ:।

(1718) "**शीभृ कत्थने**" (I-भ्वादि:-383. सक. सेट्. आत्म.)

शीभर:-बाहुलकात् औणादिकोऽरप्रत्यय:। कत्थन इत्यर्थ:। समस्तान्यपि रूपाणि भौवादिक**चीभति**वत् (530) ज्ञेयानि।

(1719) "**शील समाधौ**" (I-भ्वादि:-523. अक. सेट्. पर.)

'समाधौ श(शी ? )लतीति स्यात् शीलयत्युपधारणे ॥' (श्लो. 154) इति **देव:**। '**समाधि:** ऐकाग्र्यम्' इति **क्षीरस्वामी**। [8]अनुशीलित:-शीलित:, [9]स्तुतिशील:-स्तुतिशीला, [10]शैलूष:=नट:, [11]शीलम्-शैली। इतराणि रूपाणि भौवादिक**कीलति**वत् (195) ज्ञेयानि।

---

1. अत्यर्थं शेरते इति **शयु:**=अजगर:। औणादिक: [द. उ. 1-92] उप्रत्यय:।
2. औणादिके (द. उ. 26) आकप्रत्यये **शयानक:** इति भवति।
3. '**शीङो** धुक्लग्वलञ्वालन:' (द. उ. 10-9) इति क्रमेण धुगादिप्रत्ययेषु रूपाणीमानि सिद्धानि। **शीधु:**=मदिरा। **केचित् शीथु:** इति पठन्ति। **शीलम्**=स्वभाव:। **शेवल-शैवालौ** जललताविशेषवाचकौ।
4. औणादिके (द. उ. 8-126) वन्प्रत्यये रूपम्। **शेव:** सर्प:। **शेवा** इति **केचित्**। औणादिके (द. उ. 6-69) इति क्वनिप्प्रत्यये तु **शीवा** इति भवति।
5. औणादिके (द, उ. 3-55) खप्रत्यये **शिखा** केशबन्ध:।
6. औणादिके निप्रत्यये धातोर्ह्रस्वे च रूपम्। **शिनि:** क्षत्रियविशेष इति **माधव:**।
7. नितरां शेरतेऽस्मिन् प्राणिन इति **निशीथ:**=अर्धरात्रम्। औणादिकस्थक्प्रत्ययोऽत्र।
8. 'मतिबुद्धिपूजार्थेभ्यश्च' (3-2-188) इति वर्तमाने क्तप्रत्यय:। तदुक्तं **भाष्ये** (3-2-188) '**शीलितो** रक्षित: क्षान्त: आक्रुष्टो जुष्ट इत्यपि' इति। 'भूते' (3-2-84) इत्यस्यापवाद:।
9. स्तुतिं शीलति, इति **स्तुतिशील:**। 'शीलिकामि—' (वा. 3-2-1) इत्यादिना कर्मण्युपपदे णप्रत्यय:। अणोऽपवाद:। तेन स्त्रियां ङीपं बाधित्वा टाप् इति विशेष:। एवं **मांसशील:**, इत्यादयोऽपि बोध्या:।
10. बाहुलकात् ऊषन्प्रत्यये साधु:। **शैलूष:** नट:।
11. इगुपधलक्षणे कप्रत्यये, घञि वा साधु:। घञ्यपि नोपधाया गुण:, गुरूपधत्वादिति बोध्यम्। शीले भवा वृत्ति: **शैली**। भवार्थेऽणि ङीष्।

(1720) “**शील उपधारणे**” (X-चुरादिः-1879. सक. सेट्. उभ.)

**अदन्तः ।**

‘समाधौ शीलतीति स्यात् शीलयत्युपधारणे ॥’ (श्लो. 154) इति **देवः** ।

**उपधारणम्**=अभ्यासः । चौरादिक**कीटयति**वत् (194) रूपाणि बोध्यानि ।

(1721) “**शु गतौ**” (I-भ्वादिः....सक.अनि.पर.)

**शाकटायन-क्षीरस्वाम्यादयो** धातुममुं पठन्ति । ‘सु’ इति **देवादयः** । ‘श्रु’ इति प्रसिद्धः पाठः । ‘**शवति**र्गतिकर्मा **कम्भोजेषु**, विकार एवैनम् **आर्याः** पठन्ति’ (भाष्यम् 1-1-1) इत्यत्रोपात्तः शवतिस्तु ‘शव’ धातुप्रकृतिकः, न त्वयम् । रूपाणि सर्वाणि **कवति**वत् (198) बोध्यानि। **शुङ्गा**—औणादिकोऽयम्।

(1722) “**शुक गतौ**” (I-भ्वादिः....सक.सेट्.पर.)

**मैत्रेयक्षीरस्वामिप्रभृतिभिः** पठितोऽयं धातुः । **माधवस्तु** अमुं नानुमेने ।

[1]शुकः, [2]शुक्रः । इतराणि रूपाणि भौवादिक**कुकति**वत् (197) बोध्यानि ।

(1723) “**शुच शोके**” (I-भ्वादिः-183. अक. सेट्. पर.)

‘शुच्यते शुच्यतीत्येवं पूतीभावे शुचेः श्यनि ।
**शोके शोचति**—॥’ (श्लो. 53) इति **देवः** ।

---

1. इगुपधलक्षणे कप्रत्यये रूपम् । **शुकः**=मुनिः, पक्षिविशेषश्च ।
2. औणादिके रक्प्रत्यये **शुक्र** इति सिद्ध्यति । **शुक्रः**=ग्रहविशेषः, अग्निः, शुद्धो वा । उभावपि शब्दौ **मैत्रेयाद्यनुसारेण** अस्माद् व्युत्पादितौ । **माधवस्तु** न सहतेऽमुम् । यदाह—“अस्मिन् (धातौ) हि सति ‘**शुक**वल्कोल्काः’ (द. उ. 3-20) इति **शुभेः** कनि भलोपे **शुक**शब्दनिपातनम् अनर्थकं स्यात्; इगुपधलक्षणकप्रत्ययेनैव सिद्धत्वात् । तथा **शुचेः** रग्विधानेनापि **शुक्र**शब्दसिद्धेः ‘ऋज्रेन्द्र—’ (द. उ. 8-46) इत्यादौ **शुचे**र्निपातनम् अनर्थकं स्यात्; इति अस्य पाठोऽनार्ष एव प्रतीयते ।” इति । **प्राचीनैः** वैयाकरणैः **मैत्रेय**प्रभृतिभिः पठितत्वात् उणादिरूपाणां बहुधातुप्रकृतिकत्वस्य बहुत्र दृष्टत्वात्, तदनुसारेणैतन्निराकरणस्यान्याय्यत्वादेतन्न सारम् इति **युधिष्ठिरमीमांसक**प्रभृतय अभिप्रयन्ति (द्रष्टव्या **क्षीरतरङ्गिणीटीका** पृ. 32) ।



[1]शुचिः, [2]शोकः-हृच्छोकः, [3]शोच्यम्, [4]शोचनः, [5]शुक्, [6]शुक्रः, [7]शोशुच्यमानः, [8]शोचिः, [9]शुचित्वा-शोचित्वा, शुशुचिषकः-शुशोचिषकः, [10]शुचितः-शोचितः, [11]शूद्रः-शूद्रा, महाशूद्री । इतराणि सर्वाण्यपि रूपाणि भौवादिक**कोचति**वत् (200) ऊह्यानि ।

(1725) “**ई शुचिर् पूतीभावे**” (IV-दिवादिः-1165. अक. सेट् उभ)

**पूतीभावः** = क्लेदः ।

[12]शुचित्वा-शोचित्वा, [13]शुक्तम्, [14]शुक्तिः-शुक्तिका, इतीमानि रूपाण्यस्माद् भवन्ति ।

---

1. ‘इगुपधात् कित्’ (द. उ. 1-48) इति इन्प्रत्ययः । तस्य कित्त्वात् न गुणः । अहरहः क्रियमाजनं दृष्ट्वा शोचतीति **शुचिः**=विद्वान् । **शुचिः** दक्षश्च ।
2. घञि रूपमेवम् । ‘**तुन्दशोकयोः**—’ (3-2-5) इति निपातनात् कुत्वम् । अन्यथा **वार्त्तिक**मते ‘निष्ठायामनिटः—’ (सि. कौ. वा. 7-3-52) इति संकोचितत्वात् धातोरस्य निष्ठायां सेट्त्वात् कुत्वाप्रसक्तेः । **प्रक्रियासर्वस्वे** तु न्यङ्क्वादित्वं (7-3-53) आश्रित्यात्र कुत्वं समर्थितम् । **हृच्छोकः** इत्यत्र ‘वा **शोक**ष्यञ्रोगेषु’ (6-3-51) इति हृदयशब्दस्य हृदादेशः ।
3. ण्यति, ‘चजोः कु घिण्ण्यतोः’ (7-3-52) इति **सूत्रकार**मते यद्यपि प्राप्तं कुत्वम्; तथापि ‘निष्ठायामनिटः—’ (वा. 7-3-56) इति नियमान्निवर्तते ।
4. ‘जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वल**शुच**—’ (3-2-150) इत्यादिना तच्छीलादौ युच् ।
5. भावे स्त्रियां सम्पदादित्वात् (वा. 3-3-108) क्विप् । क्तिनोऽपवादः ।
6. ‘ऋज्रेन्द्र—’ (द. उ. 8-46) इत्यत्र निपातनात् रक्प्रत्ययान्तः साधुः । **शुक्रः**=भार्गवः ।
7. यङन्तात् शानचि रूपमेवम् ।
8. शोचति इति **शोचिः**=दीप्तिः, शोको वा । सकारान्तः शब्दः । ‘अर्चि**शुचि**—’ (द. उ. 9-30) इति इसिप्रत्ययः ।
9. ‘रलो व्युपधात्—’ (1-2-26) इति सेटोः क्त्वासन्प्रत्यययोः कित्त्वविकल्पः; तेन रूपद्वयम् ।
10. ‘उदुपधात् भावादिकर्मणोः—’ (1-2-21) इति सेटो निष्ठायाः कित्त्वविकल्पः । तेन रूपद्वयम् ।
11. ‘**शुचे**र्दक् रश्च’ इति **उणादिसूत्रेण** रक्प्रत्ययो दकारादेशः, उपधादीर्घश्च इति **माधवः**। **दशपाद्युणादौ** तु ‘शदेरू च’ (द. उ. 8-34) इति शदेर्धातोरिदं पदं निष्पाद्यते । **माधव**पक्ष एव प्राचीनः ।
12. ‘न क्त्वा सेट्’ (1-2-18) इति प्राप्तं कित्त्वनिषेधं बाधित्वा, ‘रलो व्युपधात्—’ (1-2-26) इति कित्त्वविकल्पः । एवं सन्नन्तेऽपि **शुशोचिषकः-शुशुचिषकः-षिका** इत्यादीनि रूपाणि ज्ञेयानि ।
13. ईदित्त्वात् निष्ठायामिण्निषेधः । **शुक्तम्**=स्फोटः ।
14. क्तिन्नन्तोऽयम् । मुक्तास्फोटः **शुक्तिः** । शुक्तिरेव **शुक्तिका** ।

इतराणि सर्वाण्यपि रूपाणि दैवादिक**दीप्यति**वत् (846) ज्ञेयानि ।

(1726) " शुच्य अभिषवे " ( I-भ्वादिः-513. सक. सेट्. पर.)

'**अभिषवः**-द्रवेणाद्रवणम्, परिवासनम्' इति **स्वामी** । '—स्नानम्' इति **चान्द्राः** । '**शुच्यी**—' इति **क्षीरस्वामी** । '**चुच्यी**—' इति **दुर्ग**सम्मतः पाठः । '**चुच्य**' इत्यपि पठति **मैत्रेयः** । "अवयवानां शिथिलीकरणं, सुरायाः सन्धानं वाऽ**भिषवः** ; यथा 'सोममभिषुणोत्यृजीषमभिषुणोति' इति । सुराप्रकरणे च 'सन्धानं स्याद**भिषवः**' इति" **माधवः** । '**अभिषवः**=निष्पीडनस्नपनसुरासन्धानस्नानादिः' इति **धातुकाव्यव्याख्या** (1-66) ।

शुच्यकः-च्यिका, शुच्यकः-च्यिका, शुशुच्यिषकः-षिका, शोशुच्यकः-च्यिका ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**चुच्यति**वत् (534) ऊह्यानि । [1]शुक्तिः, [A]प्रशुच्य ।

(1727) " शुठ गतिप्रतीघाते " (I-भ्वादिः-341. सक. सेट्. पर.)

'**गतिप्रतिहतौ शोठति**, आलस्ये शोठयेदिति ।' (श्लो. 80) इति **देवः** । '—**प्रतिघाते**' इत्येव **धनपालः** । '**शूठ**—' इति **क्षीरस्वामी** इति **पुरुषकारे** उक्तम् । **क्षीरतरङ्गिण्यां** तु '**शुठि**—' इत्येव दृश्यते ।

शोठकः-ठिका, शोठकः-ठिका, शुशुठिषकः-शुशोठिषकः-षिका, शोशुठकः-ठिका ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कुकति**वत् (197) बोध्यानि ।

(1728) " शुठ आलस्ये " (X-चुरादिः-1645. अक. सेट्. उभ.)

'— **आलस्ये शोठयेदिति** ।' (श्लो. 80) इति **देवः** ।

'**शठ इत्येके**' इति **क्षीरस्वामी** ।

शोठकः-ठिका, शुशोठयिषकः-षिका ; शोठयिता-त्री, शुशोठयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाणि चौरादिक**कोटयति**वत् (205) ऊह्यानि । कर्तरि क्तप्रत्यये [B]अविशोठितः ।

1. अत्र 'लोपो व्योर्वलि' (6-1-66) इति वलिलोपे 'तितुत्र—' (7-2-9) इत्यादिना इण्निषेधे, कुत्वे च रूपम् ।

A. '**प्रशुच्य** सोमं कृतहर्यतैर्गुतं समालितं फुल्लसरोजमालया ॥' धा. का. 1-66.

B. 'अकर्येण तेन समरेष्व**विशोठित**स्त्वं......॥' धा. का. 3-27.



(1729) " शुठि खण्डनप्रमर्दनयोः "

(I-भ्वादिः-341-. सक. सेट्. पर.)

'—गतिप्रतिघाते' इति **क्षीरस्वामी** । '**शुठ**—' इति **दुर्गः** । **पुरुषकारे** तु "'**शूठ** गति....' इति **क्षीरस्वामी**" इत्युक्तम् ; परं तु **क्षीरतरङ्गिण्यां** 'शुठ' इत्येव दृश्यते ।

शुण्ठकः-ण्ठिका, शुण्ठकः-ण्ठिका, शुशुण्ठिषकः-षिका, शोशुण्ठकः-ण्ठिका ; इत्यादिकानि सर्वाण्यपि रूपाणि भौवादिक**कुण्ठति**वत् (209) ऊह्यानि । **शुण्ठी** ओषधिमूलिकाविशेषः ।

(1730) " शुठि शोषणे " (I-भ्वादिः-344. सक. सेट्. पर.)

'शुण्ठयेत् **शुण्ठती**त्येवं **शोषणे** णौ **शपि** क्रमात् ॥' (श्लो. 80) इति **देवः** ।

शुण्ठकः-ण्ठिका, शुण्ठकः-ण्ठिका, शुशुण्ठिषकः-षिका, शोशुण्ठकः-ण्ठिका ; इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कुण्ठति**वत् (209) ज्ञेयानि ।

(1731) " शुठि शोषणे " (X-चुरादिः-1646. सक. सेट्. उभ.)

'**शुण्ठयेत्** शुण्ठतीत्येवं **शोषणे णौ** शपि क्रमात् ।' (श्लो. 80) इति **देवः** ।

शुण्ठकः-ण्ठिका, शुशुण्ठयिषकः-षिका ; शुण्ठयिता-त्री, शुशुण्ठयिषिता-त्री ; इत्यादिकानि सर्वाण्यपि रूपाणि चौरादिक**कुण्ठयति**वत् (210) ऊह्यानि । कर्मणि क्तप्रत्यये [A]संशुण्ठितः ।

(1732) " शुध शौचे " (IV-दिवादिः-1191. सक. अनि. पर.)

**शौचम्**=नैर्मल्यम् इति **क्षीरस्वामी** ।

'शुद्धौ शुन्धति भूवादेः शुधेः **शौचे तु शुध्यति** ॥' (श्लो. 117) इति **देवः** । शोधने, व्यवस्थिते, अन्वेषणे नाशने च दृश्यते । यदाह **मनुः** 'वेदाभ्यासेन **शुध्यति** ।' (11-46) इति । 'अत्र नश्यति इत्यर्थः' इति **कुल्लूकभट्टः** ।

शोधकः-धिका, शोधकः-धिका, शुशुत्सकः-त्सिका, शोशुधकः-धिका ; शोद्धा-शोद्ध्री, शोधयिता-त्री, शुशुत्सिता-त्री, शोशुधिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**क्षुध्यति**वत् (315) ऊह्यानि ।

A. '**संशुण्ठिता**हितमदेन विजोडितोऽसि ॥' धा. का. 3-27.

(1733) " शुन गतौ " (VI-तुदादिः-1336. सक. सेट्. पर.)

शोनकः-निका, शोनकः-निका, शुशुनिषकः-षिका, शोशुनकः-निका ; इत्यादिकानि रूपाणि सर्वाणि **कुटति**वत् (204) ज्ञेयानि ।

औणादिके क्वुन्प्रत्यये—शुनकः[A], शुनासीरः इति च विशेषः ।

(1734) " शुन्ध शुद्धौ " (I-भ्वादिः-74. अक. सेट्. पर.)

' शुन्धयेत् शुन्धते शुन्धेद्यौ वा णौ शौचकर्मणि ।
**शुद्धौ शुन्धति भूवादेः** ........ ॥ ' (श्लो. 117.) इति **देवः** ।

' **शुन्धन्ते** ........ ।' (काण्वब्रा. 1-2-3-7) इति आत्मनेपदेऽपि दृश्यते ।

' **शुन्धध्वं** दैव्याय कर्मणे— ' ( तैत्तिरीयसंहिता 1-1-1-4) इत्यत्रापि ।

शुन्धकः-न्धिका, शुन्धकः-न्धिका, शुशुन्धिषकः-षिका, शोशुधकः-धिका ; इत्यादीनि रूपाणि सर्वाण्यपि **कुश्नाति**वत् (222) ऊह्यानि । [1]शुधितम्-तः-[B] तवान्, शुन्धित्वा[2], शुन्ध्युः (शुध्युः इति **केचित्**), इतीमानि रूपाणि विशेषेण भवन्ति ।

(1735) " शुन्ध शौचकर्मणि "

(X-चुरादिः-1833. सक. सेट्. उभ.) **आधृषीयः** ।

' —शौचकरणे ' इति **क्षीरस्वामी** ।

' **शुन्धयेत् शुन्धते** शुन्धेद् यौ वा णौ **शौचकर्मणि** ।' (श्लो. 117) इति **देवः** ।

' **शाकटायनस्य** त्वात्मनेपदी ' इति **पुरुषकारे** ।

शुन्धकः-न्धिका, शुशुन्धयिषकः-षिका, शुन्धकः-न्धिका, शुशुन्धिषकः-षिका, शोशुः-धकः-धिका ; इत्यादिकानि रूपाणि सर्वाण्यपि ण्यन्तात् सन्नन्तं विना, **कुश्नाति**वत् (222) ज्ञेयानि ।

1. निष्ठायां 'अनिदितां हलः—' (6-4-24) इत्युपधानकारलोपः । 'उदुपधात्—' (1-2-21) इति (निष्ठायाः) अत्र कित्त्वविकल्पो न भवति । 'सन्निपातलक्षण—' (परि-86) विरोधात् ।

2. सेटः क्त्वायाम्, कित्त्वाभावात् नकारलोपो न भवति ।

A. '......मल्लाश्च यत्र चुकुणुः **शुनका** इवोच्चैः ।' धा. का. 2-76.

B. ' अक्लिन्दनीयान् **शुधिता**त्मनो जनान् प्रशीकते यः करुणावलोकनैः । ' धा. का. 1-11.



(1736) " शुन्भ भाषणे " I-भ्वादिः-433. सक. सेट्. पर.)

' —दीप्तौ हिंसने च ' इति **बोपदेवः** । ' —भासने ' इति **दुर्गः** ।

' —भाषणे हिंसायां च ' इति **क्षीरस्वामी** । एवं **देवमैत्रेयादयो**ऽपि ।

' शोभते शपि दीप्त्यर्थे शुम्भेरन्यत् तङः समम् । ' (श्लो. 114) इति **देवः** ।

" **स्वामी** तु निरनुषङ्गं न पपाठ । इदमेव **आत्रेयस्या**पि मतम् ; तुदादौ ' शोभत इति शपि ' इति वचनात् । **दुर्गस्तु** भासने इत्यस्यार्थमाह । एवं **धनपालशाकटायनौ** । **गुप्तस्तु** ' सावष्टम्भनिशुम्भ(शुम्भ) संभ्रमनमद्-भूकोलम् ' मालतीमाधवम् (5-22) इत्यादिदर्शनान्मूर्धन्यादित्वमाह " इति **माधवः** । शुम्भकः-म्भिका, शुम्भकः-म्भिका, शुशुम्भिषकः-षिका, शोशुभकः-भिका ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कुश्नाति**वत् (222) ज्ञेयानि । इगुपधलक्षणकप्रत्यये कित्त्वादुपधानकारलोपे शुभः, ' स्फायितञ्चि— ' (द. उ. 8-31) इत्यादिना रक्प्रत्यये नकारलोपे च शुभ्रम् इति च विशेषः ।

(1737) " शुन्भ शोभार्थे "

(VI-तुदादिः-1322. अक. सेट्. पर.) **तृम्फादिः** ।

' —हिंसायां च **द्रुमे** ' इति **धा. का. व्याख्या** (2-75) । ' —दीप्तौ हिंसने च ' इति **बोपदेवः** ।

' हिंसाभाषणयोः शोभेत् **शोभार्थे शुभतीति शे** ॥ ' (श्लो. 143) इति **देवः** ।

सर्वाण्यपि रूपाणि भौवादिक**कुश्नाति**वत् (222) ऊह्यानि ।

(1738) " शुभ भाषणे " (I-भ्वादिः-432. अक. सेट्. पर.)

**क्षीरस्वामि-चन्द्र-जैन-कातन्त्र-हेमचन्द्रादयः** न पठन्ति ।

'**हिंसाभाषणयोः शोभेत्**, शोभार्थे शुभतीति शे ॥' (श्लो. 143) इति **देवः**।

शोभकः-भिका, शोभकः-भिका, शुशुभिषकः-शुशोभिषकः-षिका, शोशुभकः-भिका ;

शोभिता-त्री, शोभयिता-त्री, शुशुभिषिता-शुशोभिषिता-त्री, शोशुभिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**कुप्यति**वत् (224) ऊह्यानि । णिनिप्रत्यये शोभी[A] इति । शोभनः-शब्दार्थत्वप्रयुक्तयुच्प्रत्ययः ।

A. ' द्विरदान् सिंहलेन्द्रस्य द्विचतुर्दन्त**शोभिनः** ।' या. अ. 22. 190.

(1739) " **शुभ दीप्तौ** " (I-भ्वादिः-750. अक. सेट्. आत्म.)

'**शोभते शपि दीप्त्यर्थे** शुम्भेरन्यत् तङः समम् ।' (श्लो. 144) इति **देवः** ।
'—हिंसने च ' इति **वोपदेवः** । अर्थभेदात् पुनः पाठः ।
शोभकः-भिका, शोभकः-भिका, शुशुभिषकः-शुशोभिषकः-षिका, शोशुभकः-भिका ; इत्यादिकानि रूपाणि सर्वाण्यपि **कुप्यति**वत् (224) ज्ञेयानि ।
शुभम्, शोभनः, शोभनम्, शोभा[A], इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

(1740) " **शुभ शोभार्थे** " (VI-तुदादिः-1321. अक. सेट्. पर.)

'हिंसाभाषणयोः शोभेत् **शोभार्थे शुभतीति शे** ॥' (श्लो. 143) इति **देवः** ।
सर्वाण्यपि रूपाणि दैवादिक**कुप्यति**वत् (224) ऊह्यानि ।
'**शोभा**[1] इति साधुः ' इति **स्वामी** । औणादिके [द. उ. 8-31] रक्प्रत्यये **शुभ्र**मिति रूपम् । [2]शोभनः[B] ।

(1741) " **शुल्क अतिस्पर्शने** " (X-चुरादिः-1619. अक. सेट्. उभ.)

'—**सर्जने** ' इति **स्वामी** । '—भाषणे ' इति **काशकृत्स्नः** । किं च अन्यत्र चुरादौ '**शुक्ल** सर्जने ' इति च तत्र दृश्यते । '—अतिसर्जने ' इति **केचित्** । '—सर्जने, वर्जने (वर्णने)' इति **वोपदेवः** । '**सर्जनम्**=आर्जनम् ; वर्जनभाषणयोश्च द्रुमे ' इति **धा. का. व्याख्या** (3-23) ।
शुल्ककः-ल्किका, शुल्ककः-ल्किका, शुशुल्कयिषकः-षिका ; शुल्कयिता-त्री, शुशुल्कयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कुत्सयति**वत् (217) ऊह्यानि । '**शुल्काय** देयाम् ' [ऋक् 8-1-5] इति । 'शुल्कम्-शुल्कशाला-करः, मांसम् ' इति **काशकृत्स्नीये** ।

(1742) " **शुल्ब माने** " (X-चुरादिः-1611. सक. सेट्. उभ.)

'**शूर्प माने** इति **चन्द्रः** ' इति **क्षीरतरङ्गिण्याम्** । 'शूर्प माने ' इति

---

1. '**शोभे**ति निपातनात् ' (काव्यालंकारसूत्रे 5-2-41) इति **वामनः** ।
2. 'ल्युट् च ' (3-3-115) इति भावे (कर्तरि च) ल्युट् ।

A. 'कृष्णोऽपि तापोल्लुठिताङ्ग**शोभा** आश्वास्य मारक्षुभिता महेलाः ।' धा. का. 2-2. "'नाम्नि तु पुंस्त्वं प्रायिकम् ' इति घञन्तस्यापि स्त्रीत्वम् " इति अत्र दृश्यते ।

B. 'अशमीग्रमिवाशंसुर्महानायाद**शोभनः** ॥' भ. का. 7-81.



**श्रीभद्रमैत्रेयादयः** इति **माधवीयधातुवृत्तौ** । '—सर्जने ' इति **कातन्त्रशाकटायनौ** । '—माने सर्जने च ' इति **हेमचन्द्रः** । सर्वाण्यपि रूपाणि चौरादिक**कुट्टयति**वत् (207) ज्ञेयानि ।

(1743) " **शुष शोषणे** " (IV-दिवादिः-1183. सक. अनि. पर.)

शोषकः-षिका, शोषकः-षिका, शुशुक्षकः-क्षिका, शोशुषकः-षिका ;
शोष्टा-ष्ट्री, शोषयिता-त्री, शुशुक्षिता-त्री, शोशुषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**तुष्यति**वत् (758) ऊह्यानि । [1]शुष्कः, शुष्कवान्, [2]आतपशुष्कः, [3]ऊर्ध्वशोषं[A] शुष्यति, [4]शुष्कम्, [5]शुष्णम्, [6]शुष्मं, शुष्मा-बर्हिः, [7]शुषिरम्, इत्यादिकानि रूपाणि अधिकान्यत्रेति विशेषः ।

(1744) " **शूर विक्रान्तौ** " (X-चुरादिः-1902. अक. सेट्. आत्म.)

**आगर्वीयः, अदन्तश्च** ।

'**शूरयेतेति विक्रान्तौ,** शूर्यते स्तम्भहिंसयोः ॥' (श्लो. 151) इति **देवः** ।
शूरकः-रिका, शुशूरयिषकः-षिका ; शूरयिता-त्री, शुशूरयिषिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कूटयति**वत् (240) ज्ञेयानि । तृचि [B]शूरयिता ।

(1745) " **शूरी हिंसास्तम्भनयोः** "

(IV-दिवादिः-1157. सक. सेट्. आत्म.)

'शूरयेतेति विक्रान्तौ, **शूर्यते स्तम्भहिंसयोः** ॥' (श्लो. 151) इति **देवः** ।

---

1. '**शुषः** कः ' (8-2-51) इति निष्ठातकारस्य ककारः ।
2. 'सिद्ध**शुष्क**पक्वबन्धैश्च ' (2-1-41) इति सप्तमीसमासः ।
3. 'ऊर्ध्वे **शुषि**पूरोः ' (3-4-44) इत्यूर्ध्वे कर्तरि णमुल्प्रत्यये रूपमेवम् । ऊर्ध्वं शुष्यतीत्यर्थः । 'कषादिषु यथाविध्यनुप्रयोगः ' (3-4-46) इति णमुल्प्रयोजकस्यैव धातोरनुप्रयोगः ।
4. शुष्यतीत्यर्थे औणादिके (द. उ. 3-39) कप्रत्यये रूपमेवम् । **शुष्कम्**=निर्मांसम् ।
5. औणादिकः (द. उ. 5-44) नप्रत्ययः, किच्च भवति । **शुष्णम्** = अनुदकम् ।
6. औणादिके (द. उ. 7-30) मन्प्रत्यये रूपमेवम् । शोषयति शुष्यते वा भयादिभिरिति **शुष्मम्** । '**शुष्मं** तेजसि सूर्ये ना ' इति **मेदिनी** ।
7. औणादिके (द. उ. 8-26) किरच्प्रत्यये रूपमेवम् । **शुषिरम्**=शुष्कम् । '—कुहरं **शुषिरं** विवरं बिलम् ' इत्यमरः ।

A. 'प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्ध्व**शोषं परिशोष्यमाणः** ।' भ.का.11-40

B. 'द्रष्टॄणां कुहकोऽथ **शूरयितृभिः** स्तुत्योऽसिना वीरयां-चक्रे......॥' धा.का. 3-58

शूरकः-रिका, शूरकः-रिका, शुशूरिषकः-षिका, शोशूरकः-रिका ;
शूरिता-त्री, शूरयिता-त्री, शुशूरिषिता-त्री, शोशूरिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**शूर्यति**वत् (1037) ज्ञेयानि । शूरः-शूरी, मानशूरी, रणशूरी इमान्यधिकान्यत्रेति विशेषः ।

(1746) **" शूर्प माने "** (X-चुरादिः-1612. सक. सेट्. उभ.)

**दुर्गश्रीभद्रमैत्रेयादयः** एवं पठन्ति। तदनुसारेण धातुरयं लिखितः । [1]शूर्पम्, [2]शौर्पम्-शौर्पिकम् इमानि रूपाणि विशेषः । अन्यानि सर्वाण्यपि रूपाणि चौरादिक**चूर्णयति**वत् (550) ऊह्यानि । घञि-शूर्पः । शूर्पसदृशं नखमस्या इति [3]शूर्पनखा[A] ।

(1747) **" शूल रुजायां संघाते च "** (I-भ्वादिः-526. सक. सेट्.पर.)

'—रुजायाम्' इति **क्षीरस्वामि-चन्द्र-जैन-काशकृत्स्न-कातन्त्र-हेमचन्द्रादयः**।
शूलकः-लिका, शूलकः-लिका, शुशूलिषकः-षिका, शोशूलकः-लिका ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कूलति**वत् (244) ज्ञेयानि । शूलम्=शस्त्रविशेषः, शूली=शिवः, ' शिवः **शूली** महेश्वरः ' **इत्यमरः** । शूलः=उदररोगविशेषः, [4]शूल्यम्, [5]शूलाकरोति, [6]शूलीकृत्य, इमानि रूपाण्यधिकान्यत्रेति विशेषः ।

---

1. एरचि पचाद्यचि वा णिलोपे रूपमेवम् । **शूर्पम्**=प्रस्फोटनम् ।
2. शूर्पेण क्रीतं **शौर्पम् शौर्पिकम्** । अत्र '**शूर्पा**दञ् अन्यतरस्याम्' (5-1-26) इति आर्हीयेष्वर्थेषु अञ्प्रत्ययः । ठञोऽपवादः । पक्षे सोऽपि भवति ।
3. ' नखमुखात् संज्ञायाम् ' (4-1-5) इति ङीप् । ' पूर्वपदात् संज्ञायामगः ' (8-4-3) इति णत्वं च संज्ञायामेवेति णत्वाभावष्टाप् च ' इति **धा. का. व्याख्यायाम्** (3-22)। **मल्लिनाथस्तु** '**शूर्पणखा**' इति णत्वविशिष्टमेव पठित्वा व्याचख्यौ । (रघुवंशव्याख्याने (12-32) ।
4. शूलेषु संस्कृतमित्यर्थे '**शूलो**खाद्यत्' (4-2-17) इति सप्तम्यन्तात् संस्कृतमित्यर्थे यत्प्रत्ययस्तद्धितः ।
5. '**शूलात्** पाके' (5-4-65) इति पाकविषये डाच्प्रत्ययः । ' ऊर्यादिच्विडाचश्च ' (1-4-61) इति गतिसंज्ञायाम्, कृञोऽनुप्रयोगे ' कुगतिप्रादयः ' (2-2-18) इति समासः । **शूला**करोति मांसम्—शूले पचतीत्यर्थः ।
6. '**शूली**' इति ऊर्यादिषु (1-4-61) पाठ इत्यभ्युपगन्तॄणां मते गतिसंज्ञायां समासे ल्यपि रूपमेवम् । **शूलीकृत्य**=रुजां सम्पाद्य इत्यर्थः ।

A. ' संपालयेद् विमतलूष्यपशुल्बभूमा क्ष्मामेष राम इव **शूर्पनखा**विचोटी ॥'
धा. का. 3-22.



(1747) **" शूष प्रसवे "** (I-भ्वादिः-679. सक. सेट्. पर.)

'**षूष** प्रसवे ' इति **क्षीरस्वामि-मैत्रेयौ** । तालव्यादिरिति **चरकः** । '**शूषा** शाकम्' इति **तरङ्गिण्या**मुक्तम् । '**शूषम्**=बलम्' इति **ऋग्वेदे** (1-9-10) । '**प्रसवः** स चानुज्ञा (अभ्यनुज्ञा)' इति **धा. का. व्याख्या** (1-86) । **उत्पादन**मपि **प्रसवः** इति च तत्रोक्तम् । 'तालव्योष्मादिरिति **पारायणिकाः** इति **स्वामी**' इति **धातुवृत्तौ** उद्धृतम् । अयं पाठस्त**रङ्गिण्याम्** अक्षरशः नोपलभ्यते । "**तैत्तिरीयके**— '**सक्षशूष**—' इति । **केचित्** दन्त्यादिं पठन्ति । तदनार्षम् ; षोपदेशलक्षणविरोधात् ।'' इति **माधवः** ।

शूषकः-षिका, शूषकः-षिका, शुशूषिषकः-षिका, शोशूषकः-षिका ;
शूषिता-त्री, शूषयिता-त्री, शुशूषिषिता-त्री, शोशूषिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**चूषति**वत् (552) ऊह्यानि ।
**शतरि** [A]शूषन् ।

(1748) **" शृधु शब्दकुत्सायाम् "** (I-भ्वादिः-760. अक. सेट्. आत्म.)

' शब्दकुत्सा पायुशब्दः ' इति **स्वामी** । **वृतादिः** ।

'**शर्धते शब्दकुत्सायाम्** उन्दे शर्धति शर्धते । (श्लो. 118) इति **देवः** ।
शर्धिता-त्री, शर्धयिता-त्री, शिशर्धिषिता-त्री, शरीशृधिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**पर्षति**वत् (1054) ऊह्यानि ।
युचि-[B]शर्धनम् ।

(1749) **" शृधु उन्दने "** (I-भ्वादिः-873. सक. सेट्. उभ.)

' ........**क्लेदने** ' इति **वोपदेवः** । '**उन्दः**=क्लेदनम् ' इति **स्वामी** ।
'शर्धते शब्दकुत्सायाम् **उन्दे शर्धति शर्धते** ।' (श्लो. 118) इति **देवः** ।
सर्वाण्यपि रूपाणि तौदादिक**तर्पति**वत् (772) ज्ञेयानि । णिनिप्रत्यये [C]परिशर्धी इति ।

(1750) **" शृधु प्रसहने "** (X-चुरादिः-1735. सक. सेट्. उभ.)

' हिक्कादौ **शर्धयत्यस्य शृधेः प्रसहने णिचि** ॥ ' (श्लो. 118) इति **देवः** ।

---

A. '**शूषन्** दशोरमृतयूषमजूषकस्त्वं ...... ॥' धा. का. 1-86.

B. '**अशर्धनैः** गोपकुलैः सहासौ ययौ कृपास्यन्दसुकल्पसमोदैः ॥ ' धा. का. 2-3.

C. ' या नेदितोर्वी**परिशर्धि**वीची विमृद्धवृक्षादिविबोध्यशैत्या ॥ ' धा. का. 2-26.

“‘**शृध अप्रसहने**’ अप्रसहनम्=अमर्षः। ‘प्रसहने=अभिभवे **इत्येके**” इति **स्वामी**। **उदित्त्वात्** णिज्विकल्पः। ‘प्रहसनम्=विद्रवः’ इति **गोविन्द-भट्टः** इति **शब्दकल्पद्रुमे**।

‘—प्रहसने’ इति **शाकटायनकाशकृत्स्नौ**। ‘—**प्रहसनम्**=अभिभवः’ इति **धा. का. व्याख्या** (3-40)।

शर्धकः-र्धिका, शिशर्धयिषकः-षिका, शर्धकः-र्धिका, शिशर्धिषकः-षिका, शरीशृधकः-धिका;

शर्धयिता-त्री, शिशर्धयिषिता-त्री, शर्धिता-त्री, शिशर्धिषिता-त्री, शरीशृधिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**गृध्यति**वत् (424) ऊह्यानि।

निष्ठायाम्-शर्धितम्, शृद्धम्-शृद्धः, ल्युटि-[A]शर्धनम्, क्त्वायाम्-शर्धित्वा-शृद्ध्वा इति विशेषः।

(1751) “**शृ हिंसायाम्**” (IX-क्र्यादिः-1488. सक. सेट्. पर.)

**प्वादिः, ल्वादिश्च**। ‘**शॄञ्**—’ इति **क्षीरस्वामी**।

अयं धातुः **दैवादिकोऽपि** इति प्रयोगात् ऊह्यते। यथा ‘....**विशीर्यन्तीं** नावमिव’ (म. भा. 3-157-13); ‘स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च **विशीर्यति**॥’ (मनुस्मृतिः 2-74) इति। शारकः-रिका, शारकः-रिका, [1]शिशरिषकः-शिशरीषकः-शिशीर्षकः-र्षिका, [2]शेशिरकः-रिका; [3]शरिता-शरीता-त्री, शारयिता-त्री, शिशरिषिता-शिशरीषिता-शिशीर्षिता-त्री, शेशिरिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि **कृणाति**वत् (258) ज्ञेयानि। [4]शृणन्, [5]शरः, [6]नीशारः, [7]शरारुः,

---

1. सन्नन्ते ‘इट् सनि वा’ (7-2-41) इतीड्विकल्पः। ‘वृतो वा’ (7-2-38) इतीटो दीर्घविकल्पः। तेन रूपत्रयं सन्नन्ते सर्वत्र बोध्यम्।
2. यङ्निमित्तकं इत्वम्, अभ्यासे गुणश्च। एवं यङन्ते सर्वत्र बोध्यम्।
3. तृजादिषु सर्वत्र ‘वृतो वा’ (7-2-38) इति इटो दीर्घविकल्पः।
4. शतरि, श्नाप्रत्यये, ‘प्वादीनाम्—’ (7-3-80) इति ह्रस्वे, ‘श्नाभ्यस्तयोः—’ (6-4-112) इत्याकारलोपे, ‘ऋवर्णान्नस्य—’ (वा. 8-4-1) इति णत्वे च रूपमेवम्।
5. शीर्यतेऽनेनेति **शरः** बाणः। ‘**ऋदोरप्**’ (3-3-57) इत्यप्प्रत्ययः।
6. ‘**शॄ** वायुवर्णनिवृतेषु’ (वा. 3-3-21) इति घञ्। अचोऽपवादः। ‘उपसर्गस्य घञि—’ (6-3-122) इति दीर्घः। **नीशारः** वायुविशेषः। **नीशारः**=चित्रवर्णः। **नीशारः**=आवरणम्-यथा—‘गौरिवाकृत**नीशारः** प्रायेण शिशिरे कृशः’ इति। **निवृतम्** इत्यस्य आवरणमर्थः। निवृत्तमिति **वार्तिके** क्वाचित्कं अपपाठः।
7. ‘**शॄवन्द्योः**—’ (3-2-173) इत्यारुप्रत्ययस्ताच्छीलिकः। **शरारुः**=हिंसकः।

A. ‘......तौ **शर्धनाय** समयातयतां नियुद्धम्॥’ धा. का. 3-40.



[1]शारुकः, [2]शश्रृवान्-शशर्वान्, [3]शीर्णिः, [4]विशरणम् - शरणम्, [5]आशारः, [6]पराशरः, [7]किंशारुः, [8]शरुः, [9]शरीरम्, [10]शरत्, [11]परशुः, [12]शृङ्गम्, [13]शृङ्गारः, [14]शिशिरः, [15]शर्वः, [16]शर्वा-शर्वरी, [17]शिरीषम्,

---

1. ‘लषपतपदस्थाभूवृषहनकमगमशॄभ्यः—’ (3-2-154) इत्युकञ्प्रत्ययस्ताच्छीलिकः। ‘**किंशारुकं** तीक्ष्णमाहुः’ इति **काशिका** (3-2-154)।
2. क्वसौ ‘शॄदॄप्रां—’ (7-4-12) इति ह्रस्वविकल्पः। ह्रस्वपक्षे **शश्रृवान्**, ह्रस्वाभावपक्षे **शशर्वान्** इति च रूपम्। **केचित्** सूत्रमेतत् प्रत्याचक्षते, तेषां मते तु **शशर्वान्** इत्येकमेव रूपम्। विस्तरस्तु **काशिकायां** (7-4-12) द्रष्टव्यः।
3. क्तिनि, ‘ॠत इत्—(7-1-100) इतीकारः। दीर्घः, ल्वादित्वात् क्तिनस्तकारस्य नकारः, णत्वम्।
4. ल्युटि रूपमेवम्। **विशरणम्**=विनाशः। ‘**शरणं** गृहरक्षित्रोः’ **इत्यमरः**।
5. आश्रृणातीति **आशारः**। पचाद्यचि रूपमेवम्।
6. परा श्रृणातीति **पराशरः**। अत्रापि पचाद्यच्। **पराशरः** ऋषिः।
7. किम्शब्द उपपदे औणादिकः (द. उ. 1-89) ञुण् प्रत्ययो भवति। **किंशारुः**=सस्यशूकम्।
8. ‘**शॄस्त्रृ**—’ (द. उ. 1-95) इति उप्रत्ययः। **शरुः**=क्रोधः।
9. औणादिके (द. उ. 8-72) ईरन्प्रत्यये रूपमेवम्। शीर्यत इति **शरीरम्**=देहः।
10. ‘शॄदॄभसोऽदिः’ (द. उ. 6-42) इति अदिप्रत्यये रूपमेवम्। शीर्यन्तेऽस्यां गुल्मवनस्पतीनां तेजांसीति **शरत्**=ऋतुः।
11. परशब्द उपपदे धातोः औणादिके (द. उ. 1-118) कुप्रत्यये रूपमेवम्। परान् श्रृणातीति **परशुः**=कुठारः।
12. ‘**श्रृणातेर्ह्रस्वश्च**’ [द. उ. 3-64] इति गन्प्रत्ययः, धातोर्ह्रस्वश्च। **शृङ्गम्**=विषाणम्।
13. तुषारादिषु [द. उ. 8-69] निपातनात् **शृङ्गार**शब्दः साधुः।
14. शीर्यन्तेऽस्मिन् तृणगुल्मवनस्पतीनां तेजांसीति **शिशिरः**=ऋतुविशेषः। ‘अजिर-**शिशिर**—’ (द. उ. 8-27) इत्यत्र निपातनात् धातोः द्विर्वचनम्, सन्वद्भावः, ऋवर्णलोपः, इत्वं च।
15. औणादिके वन्प्रत्यये **शर्वः**। श्रृणातीति **शर्वः**=शिवः।
16. ‘अन्येभ्योऽपि दृश्यन्ते’ (3-2-75) इति वनिप्प्रत्यये रूपमेवम्। स्त्रियाम् ‘वनो र च’ (4-1-7) इति ङीब्रेफौ। **शर्वरी**=रात्रिः।
17. ‘शॄपॄभ्यां—’ (द. उ. 9-10) इति ईषन्प्रत्ययः। प्रत्ययस्य कित्वात् इत्वम्। **शिरीषम्**=वृक्षविशेषः।

[1]शर्म, [2]शिरः, [3]शारिः-शारिका, [4]शरभः, [5]शरण्यः, इतीमानि धातोरस्माद् भवन्ति ।

(1752) **" शेलृ गतौ "** (I-भ्वादिः-543. सक. सेट्. पर.)

'—चलने' इति **चन्द्रः** । '— चालगत्योः' इति **वोपदेवः** । अयं धातुः **काशकृत्स्नीय**धातुपाठे नोपलभ्यते । **केचित्** 'सेलृ—' इति पठन्ति । 'षेलृ—' इत्येके ।

शेलकः-लिका, शेलकः-लिका, शिशेलिषकः-षिका, शेशेलकः-लिका ;
शेलिता-त्री, शेलयिता-त्री, शिशेलिषिता-त्री, शेशेलिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**केलति**वत् (262) ज्ञेयानि ।

(1753) **" शेवृ सेवने "** (I-भ्वादिः-506. सक. सेट्. पर.)

**क्षीरस्वामिमैत्रेयादयः** एवं पठन्ति । 'शेवृ—' इत्यप्येके' इति **माधव-बालमनोरमाकारादयः** । स्वतन्त्रेण नामुं धातुं पठन्ति **माधवप्रभृतयः** । 'अयं सोपदेशोऽपि इति **न्यासकारादयः** (8-3-70) । तत् भाष्यविरुद्धम्' इति **बालमनोरमायाम्** ।

शेवकः-विका, शेवकः-विका, शिशेविषकः-षिका, शेशेवकः-विका ;
शेविता-त्री, शेवयिता-त्री, शिशेविषिता-त्री, शेशेविता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि **केलति**वत् (262) ऊह्यानि ।

(1754) **" शै पाके "** (I-भ्वादिः-918. सक. अनि. पर.)

**पाकः**=विक्लित्तिः । धातुममुं **क्षीरस्वामि-मैत्रेय-लीलाशुक-शाकटायन-काशकृत्स्न-कातन्त्र-हेमचन्द्रादयः** न पठन्ति । अत्र 'स्रै' इति **क्षीरतरङ्गिण्यां** दृश्यते ।

---

1. श्रृणाति दुःखम् इति **शर्म** । औणादिके (द. उ. 6-73) मनिन्प्रत्यये रूपमेवम् ।
2. श्रृणातेरौणादिकेऽसुन्प्रत्यये, प्रत्ययस्य कित्त्वे च रूपमेवम् । **शिरः** मूर्धा ।
3. '**शारः** शकुनौ' (द. उ. 1-56) इति इञ्प्रत्यये, वृद्धौ च रूपम् । **शारिः** शकुनिविशेषः । शारिरेव **शारिका** । शकुनिभिन्ने तु **शारिः** शूलम् ।
4. 'कृगृशृ—' (द. उ. 7-18) इति अभच्प्रत्यये रूपमेवम् । **शरभः** हिंस्रः । **शरभ**मूर्तिः इति ख्यातः ।
5. औणादिके (द. उ. 8. 8) अन्यप्रत्यये णत्वे च रूपमेवम् । श्रृणात्यर्थिनो भयमिति **शरण्यः**=आर्तिहरः ।



शायकः-यिका, शापकः-पिका, शिशासकः-सिका, शाशायकः-यिका ;
शाता-त्री, शापयिता-त्री, शिशासिता-त्री, शाशायिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कायति**वत् (263) ज्ञेयानि । निष्ठायाम् शातम्-तः, क्तिनि-शातिः, क्त्वायाम्-शात्वा इति विशेषः । 'शाच्छोरन्यतरस्याम्' (7-4-41) इत्यत्र नास्य ग्रहणमिति ज्ञेयम् ।

(1755) **" शो तनूकरणे "** (IV-दिवादिः-1145. सक. अनि. पर.)

'—तक्षणे' इति **हेमचन्द्रः** । '—निशाने' इति **वोपदेवः** । **अन्ये सर्वेऽपि** '—तनूकरणे' इत्येव पठन्ति ।

शायकः-यिका, [1]शायकः-यिका, शिशासकः-सिका, शाशायकः-यिका ;
शाता-त्री, शाययिता-त्री, शिशासिता-त्री, शाशायिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिकच्छेदनार्थक**छ्यति**(577) वत् ऊह्यानि । शाययन्, निष्ठायाम् [2]निशितम्[A]-निशातम्-[B]तः, संशितो ब्राह्मणः, संशितव्रतः, निशा, क्तिनि-निशितिः-निशातिः, ल्यपि[3]-प्रशाय, क्त्वायाम्-शित्वा-शात्वा, [4]शिशुः, [5]शादः इत्यादीनि रूपाणि अस्य धातोः विशेषः । शतरि-श्यन्[C] इति ।

(1756) **" शोणृ वर्णगत्योः "** (I-भ्वादिः-455. सक. सेट्. पर.)

'—वर्णे' इति **चन्द्रः** । 'गते वर्णे' इति **वोपदेवः** । '—वर्णगत्योः रागे गतौ च' इति **काशकृत्स्नः** ।

---

1. '**शाच्छासाह्वा—**' (7-3-37) इत्यादिना णिजन्ते युगागमः । आदन्तलक्षणपुकोऽपवादः ।
2. '**शाच्छोः—**' (7-4-41) इति प्रकृतेरिकारः । एष व्यवस्थितविभाषया व्रतार्थे नित्यः । तनूकरणार्थे न इति 'मिथस्ते न विभाष्यन्ते गवाक्षः **संशित**व्रतः ॥' (भाष्यम् 7-4-41) इति वचनाज्ज्ञेयम् । '**श्यते**रित्वं व्रते नित्यं' (वा. 7-4-41) इति चात्र ज्ञेयम् ।
3. 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' (परिभाषा-55) इति न्यायेन '**शाच्छोरन्यतरस्याम्**' (7-4-41) इति इत्वं ल्यपि न प्रवर्तते ।
4. औणादिके (द. उ. 1-105) उप्रत्यये रूपमेवम् । श्यति मातुः स्तनं पीत्वेति **शिशुः**=बालः ।
5. '**शाशपिभ्यां ददनौ**' (द. उ. 6-48) इति दप्रत्यये रूपमेवम् । **शादः**=मृदुः ।

A. 'आरक्षमग्नमवतत्य सृणिं **शिता**ग्रमेकः पलायत जवेन कृतार्तनादः ।' शि. व. 5-5.
B. 'पुराणि दुर्गाणि **निशात**मायुधं बलानि शूराणि घनाश्च कञ्चुकाः ।' शि.व. 1-45.
C. '......प्रीतिं **श्यतो**ऽस्य स करेण शिरोधिमच्छात् ।' धा. का. 2-59.

शोणकः-णिका, शोणकः-णिका, शुशोणिषकः-षिका, शोशोणकः-णिका ;
शोणिता-त्री, शोणयिता-त्री, शुशोणिषिता-त्री, शोशोणिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**खोरति**वत् (363) ज्ञेयानि ।
शोणो=लोहितः, शोणितम्=रुधिरम्, शोणः-नदः, शोणा-[1]शोणी=नदी, इमानि रूपाण्यधिकान्यत्रेति विशेषः । [A]शोणः-पचाद्यचि एवं रूपम् ।

(1757) "**शौटृ गर्वे**" (I-भ्वादिः-290. अक. सेट्. पर.)

**गर्वः**=अभिमानः । **काशकृत्स्न-हेमचन्द्रादयः** धातुममुं न पठन्ति । '**शौड़**—' इति **काशकृत्स्नीये** दृश्यते ।

शौटकः-टिका, शौटकः-टिका, [2]शुशौटिषकः-षिका, शोशौटकः-टिका ;
शौटिता-त्री, शौटयिता-त्री, शुशौटिषिता-त्री, शोशौटिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**केपति**वत् (261) बोध्यानि । शतरि [B]प्रशौटन्, [3]शौटीरः इति विशेषः ।

(1758) "**श्च्युतिर् क्षरणे**" (I-भ्वादिः-41. सक. सेट्. पर.)

**क्षरणम्**=स्रवणम् । '**द्रमिडाश्चुतिरि**त्यप्याहुः—चोतति ; **कौशिकस्तु श्चुति**-मयोपधं मन्यते श्चोतति ' इति **क्षीरस्वामी** ।

श्च्योतकः-तिका, श्च्योतकः-तिका, शुश्च्योतिषकः-शुश्च्युतिषकः-षिका, शोश्च्युतकः-तिका ;
श्च्योतिता-त्री, श्च्योतयिता-त्री, शुश्च्योतिषिता-शुश्च्युतिषिता-त्री, शोश्च्युतिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कोचति**वत् (200) ज्ञेयानि ।
"सकारादिरयम्, श्चुत्वेन निर्देशः । सकारादित्वे प्रयोजनं मधु श्च्योततीति

1. '**शोणात्प्राचाम्**' (4-1-43) इति स्त्रियां प्राचामाचार्याणां मते विकल्पेन ङीष् भवति । **शोणी-शोणा**=बडबा इति **काशिकायाम्** ।
2. सन्नन्ते अभ्यासे 'एच इग्घ्रस्वादेशे' (1-1-48) इति ह्रस्वः इकाररूपः । यङन्तेऽप्येवमेव । परं तु गुणस्तस्येति विशेषः ।
3. औणादिके (द. उ. 8-72) ईरन्प्रत्यये रूपमेवम् । **शौटीरः**=गर्वः ।

A. '......**शोणान्** पृथुश्रोणिजनो दुदोह च ।' धा. का. 1-59.
B. '**प्रशौट**दुस्नागणयौटितान्तिकान्....... ।' धा. का. 1-39.



मधुश्च्युत्-क्विप् । अस्मात् 'तत्करोति तदाचष्टे' (ग. सू. चुरादौ) इति णिचि 'णाविष्ठवत् प्रातिपदिकस्य' (वा. 6-4-155) इतीष्ठनीव कार्यविधानात्, टिलोपे मधुश्च्यायतेः क्विप् । तस्य लोपे प्रत्ययलक्षणेन 'णेरनिटि' (6-4-51) इति णेश्च लोपे, यकारान्ताद् अस्मात् कृदन्तात् प्रातिपदिकात् सौ, तस्य हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वेन पदत्वे 'संयोगान्तस्य—' (8-2-23) इति यलोपे, श्चुत्वस्य पूर्वत्रासिद्धत्वात् 'स्कोः—' (8-2-29) इति सलोपे 'चोः कुः' (8-2-30) इति चकारस्य पदान्तस्य कुत्वे, तस्य जश्त्वे मधुगिति रूपसिद्धिरिति **वृत्तिन्यासपदमञ्जरीसम्मताकारमैत्रेयादिभिरुक्तम्**" इति **माधवः** । भावे, आदिकर्मणि वा कर्तरि क्तप्रत्यये [A]प्रश्च्युतितः, क्विपि-अम्भश्श्च्युत्[B] इति ।

(1759) "**श्मील निमेषणे**" (I-भ्वादिः-518. अक. सेट्. पर.)

'**निमेषणम्**=संकोचनम् । क्ष्मील इति **चान्द्राः**' इति **तरङ्गिण्याम्** । '**निमेषणे**=अक्षिनिमेषे' इति **काशकृत्स्नः** ।

श्मीलकः-लिका, श्मीलकः-लिका, शिश्मीलिषकः-षिका, शेश्मीलकः-लिका ;
श्मीलिता-त्री, श्मीलयिता-त्री, शिश्मीलिषिता-त्री, शेश्मीलिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**क्ष्मीलति**वत् (325) ऊह्यानि । ल्युटि [C]श्मीलनम् इति विशेषः ।

(1760) "**श्यैङ् गतौ**" (I-भ्वादिः-963. सक. अनि. आत्म.)

श्यायकः-यिका, श्यापकः-पिका, शिश्यासकः-सिका, शाश्यायकः-यिका ;
श्याता-त्री, श्यापयिता-त्री, शिश्यासिता-त्री, शाश्यायिता-त्री ; इत्यादिकानि रूपाणि सर्वाणि वृद्ध्यर्थकभौवादिक'**प्यैङ्**'धातुवत् (1065) ज्ञेयानि । [1]प्रतिश्यायः-

1. '**श्याद्व्यध—**'(3-1-141) इत्यादिना कर्तरि णप्रत्ययः । आकारान्तत्वादेव णप्रत्यये सिद्धे सूत्रे पृथक् धातोः ग्रहणं सोपसर्गार्थम्—इति **माधवीयादिषु** स्पष्टम् ।

A. 'अतेन्मुरारिर्मम चिन्मयोऽन्तिके च्योतन् दिशः **प्रश्च्युतितैः** सितामृतैः ॥' धा. का. 1-6.
B. '**अम्भश्श्च्युतः** कोमलरत्नराशीनपांनिधिः फेनपिनद्धभासः ।' शि. व. 3-39.
C. 'उन्मीलन**श्मीलन**लीलया दृशोरुत्स्मीलितक्ष्मीलितविश्वविष्टपम् ।' धा. का. 1-37.

अवश्याय:, शीतो वायु:, [1]शीनं घृतम्, [2]श्यानम्-न:, [3]प्रतिशीन:, [4]अभिशीन:, अभिश्यान:, अवशीन:, अवश्यान:, अभिसंशीन:, अवसंशीन:, [5]श्याम:-श्यामा, श्यामाक:, शिव:, [6]श्येन:, [7]श्येत:, शिति:, इमानि रूपाणि अस्य धातो: विशेषेण भवन्ति।

(1761) **"श्रकि गत्यर्थः"** (I-भ्वादि:-84. सक. सेट्. आत्म.)

'—**सर्पे**' इति **वोपदेवः**। यदुक्तं '**क्षीरस्वामी**........शकि—' इति **पुरुषकारे** (श्लो. 42); तत् तु **क्षीरतरङ्गिण्यां** न दृश्यते।

**श्रङ्कः-ङ्किका, श्रङ्कक:-ङ्किका, शिश्रङ्किषक:-षिका, शाश्रङ्कक:-ङ्किका;**

श्रङ्किता-त्री, श्रङ्कयिता-त्री, शिश्रङ्किषिता-त्री, शाश्रङ्किता-त्री;

इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**कङ्कति**वत् (140) ऊह्यानि। ल्यपि [A]आश्रङ्क्य इति।

(1762) **"श्रगि गत्यर्थः"** (I-भ्वादि:-151. सक. सेट्. पर.)

**श्रङ्गक:-ङ्गिका, श्रङ्गक:-ङ्गिका, शिश्रङ्गिषक:-षिका, शाश्रङ्गक:-ङ्गिका;**

---

1. 'द्रवमूर्तिस्पर्शयोः **श्यः**' (6-1-24) इति द्रवस्य मूर्तौ काठिन्ये च वर्तमानस्य श्यायतेः निष्ठायां परतः सम्प्रसारणम्। 'हलः' (6-4-2) इति दीर्घः। 'श्योऽस्पर्शे' (8-2-47) इति निष्ठानत्वम्। '**शीतो** वायुः' इत्यत्र तु स्पर्शार्थकत्वात् न निष्ठानत्वम्।
2. '**श्यानो** वृश्चिकः' इत्यत्र द्रवमूर्तिस्पर्शाभ्यामन्यत्र सम्प्रसारणाभावात् 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठानत्वमिति बोध्यम्।
3. 'प्रतेश्च' (6-1-25) इति प्रतेः परस्य **श्यैङो** निष्ठायां सम्प्रसारणम्। '**श्यो** ऽस्पर्शे' (8-2-47) इति निष्ठानत्वम्।
4. 'विभाषाऽभ्यवपूर्वस्य' (6-1-26) इति अभि, अव इत्युपसर्गात् परस्य **श्यैङः** सम्प्रसारणविकल्पः। सम्प्रसारणपक्षे '**श्यो**ऽस्पर्शे' (8-2-47) इति निष्ठानत्वम्। सम्प्रसारणाभावपक्षे 'संयोगादेरातो धातोः—' (8-2-43) इति निष्ठानत्वमिति विशेषः। "—'अभ्यवाभ्याम्' इति वक्तव्ये सति (सूत्रे) पूर्वग्रहणं व्यवहितेऽपि यथा स्यात्—इति; तेन **अभिसंशीनः, अवसंशीनः** इत्याद्यपि सिद्ध्यति" इति **माधवीयधातुवृत्तिः**।
5. 'इषुयुधि—' (द. उ. 8-26) इति मक्प्रत्ययः।
6. '**श्यास्त्या**—' (द. उ. 5-12) इत्यादिना इनन्प्रत्ययः। **श्येनः**=गृध्रः।
7. '**श्याभ्याम्**—' (द. उ. 6-12) इतीतन्प्रत्यये **श्येतः**।

A. 'दुःखङ्क**माश्रङ्क्य** हरेः पदं जनः प्रश्छङ्क्ते कुत्र रुजं क्व शङ्कते॥' धा. का. 1-12.



इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कङ्कति**वत् (140) ऊह्यानि। कर्तरि क्तप्रत्यये श्रङ्गितः[A] इति।

(1763) **"श्रण दाने च"** (I-भ्वादि:-798. सक. सेट्. पर.) [अ] **घटादिः**। चकारात् पूर्वधात्वर्थे गतौ च इति ऊह्यम्।

'**मितः श्रणति दानार्थे**........' (श्लो. 92) इति **देवः**।

श्राणक:-णिका, [1]श्रणक:-(श्राणक:)-णिका, शिश्रणिषक:-षिका, शंश्रणक:-णिका; श्रणिता-त्री, श्रणयिता-श्राणयिता-त्री, शिश्रणिषिता-त्री, शंश्रणिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कणति**वत् (157) ज्ञेयानि। शतरि [B]श्रणन् इति।

(1764) **"श्रण दाने"** (X-चुरादि:-1578. सक. सेट्. उभ.)

'मितः श्रणति दानार्थे **श्राणयत्यत्र णौ पदम्**॥' (श्लो. 92) इति **देवः**।

प्रायेणायं विपूर्वः। '—गतौ **इत्येके**' इति **मैत्रेयरक्षितः**।

'मित्फलं तु पुनः **श्रणयतीति** हेतुमण्णिचि ह्रस्वः।' इति **पुरुषकारः** (श्लो. 192)।

अत्राह **क्षीरस्वामी**—'युचि प्राप्ते 'चिन्तिपूजि—' (3-3-105) इति **चकारात्** अङ् इष्यते [2]कुत्सावत्, **श्राणा**' इति।

श्राणक:-णिका, शिश्राणयिषक:-षिका, श्राणयिता-त्री, शिश्राणयिषिता-त्री;

इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**काणयति**वत् (159) ऊह्यानि।

ल्यपि-[C]विश्राण्य, [D]विश्राणितम्, विश्राणनम्[E]-युच्।

---

[अ] **श्रण**धातोश्चौरादिकस्य हेतुमण्णिचोऽभावात्, स्वार्थे तु णौ 'नान्ये मितोऽहेतौ' (ग. सू. भ्वादि:) इति मित्त्वनिषेधात् न तस्यानुवादोऽयं धातुरिति **माधवो**ऽभिप्रैति।

1. घटादित्वं **सर्व**सम्मतम्। तेषां मते णिजन्ते मित्त्वादुपधाह्रस्वो ज्ञेयः।
2. **कुत्सावद्**िति। यथा सूत्रेऽनुपादानेऽपि **कुत्सयते**र्णिचि युचं पक्षे प्रतिषिध्य **कुत्सा** इति अङ् - तद्वदित्यर्थः।

A. 'त्वङ्गत्खग**श्राङ्गित**पक्ष्मारुतश्लक्ष्णरजोराजिभिरिङ्गिताम्बरम्।' धा. का. 1-21.

B. 'चणन् विषादं विशणन् विचिन्तां **श्रणन्** विमोहं स्न[श्र] थितोऽस्तु सद्यः॥' धा. का. 2-9.

C. 'वेश्मानि रामः परिबर्हवन्ति **विश्राण्य** सौहार्दनिधिः सुहृद्भ्यः।' रघुवंशे 14-15.

D. 'विमथ्य **विश्राणित**मेतदीयं दैत्यद्विषा देवि मरुत्वदाद्याः।' या. अ. 18-101.

E. 'कथं न शक्योऽनुनयो महर्षेः **विश्राणना**च्चान्यपयस्विनीनाम्।' रघु. 2-54.

(1765) "श्रथ हिंसार्थः" (I-भ्वादिः-799. सक. सेट्. पर.) **घटादिः।**

'**श्नथ**' इति क्वचित् पाठः।

"दौर्बल्ये श्रथयेत् प्रयत्नविषये स्याच्छ्राथयेन्मोक्षणे
यौ तु **श्राथयति श्रथत्यपि च वा णौ** श्रन्थयेत् श्रन्थति।
सन्दर्भे श्रि विमोचनार्थविषये श्रथ्नात्यथ श्रन्थते,
शैथिल्ये....॥' (श्लो. 101) इति **देवः**। सर्वाण्यपि रूपाणि भौवादिक**क्वथति**वत् (280) बोध्यानि।

(1766) "श्रथ प्रयत्ने" (X-चुरादिः-1546. सक. सेट्. उभ.)

'........प्रतियत्ने' इति **क्वचित्** पाठः। **दैव**श्लोकः पूर्वस्मिन् धातौ द्रष्टव्यः। 'प्रतिहर्षे' इति **क्षीरतरङ्गिणी-कातन्त्र-जैनेन्द्र-हेमचन्द्रीयेषु** पाठः। 'प्रस्थाने' इति **मैत्रेय** इति **माधवः**। सर्वाण्यपि रूपाणि चौरादिक**क्लापयति**वत् (282) बोध्यानि।

(1767) "श्रथ मोक्षणे" (X-चुरादिः-1823. सक. सेट्. उभ.) **आधृषीयः।**

'हिंसायाम्' इति **केचित्**। दैवश्लोकः (1765) धातौ द्रष्टव्यः। सर्वाण्यपि रूपाणि चौरादिक**च्छदयति**वत् (562) बोध्यानि।

(1768) "श्रथ दौर्बल्ये" (X-चुरादिः-1871. अक. सेट्. उभ.) **अदन्तः।**
सर्वाण्यपि रूपाणि चौरादिक**कथयति**वत् (162) बोध्यानि।

(1769) "श्रथि शैथिल्ये" (I-भ्वादिः-35. अक. सेट्. पर.)

[1]प्रश्रथः, हिमश्रथः, [2]श्रन्था। इतराणि सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) बोध्यानि।

(1770) "श्रन्थ विमोचनप्रतिहर्षयोः"
(IX-क्र्यादिः-1512. सक. सेट्. पर.)

'..........सन्दर्भे' इति **केचित्**। प्रश्रथः—हिमश्रथः, [3]श्रन्थित्वा-श्रथित्वा, [1]श्रेथिवान्, [2]श्रन्थना इति विशेषरूपाणि। इतराणि सर्वाण्यपि क्र्यादिक**ग्रथ्नाति**वत् (437) बोध्यानि।

(1771) "श्रन्थ सन्दर्भे" (X-चुरादिः-1838. सक. सेट्. उभ.)

**आधृषीयः**। आधृषीय**ग्रन्थयति**वत् (438) रूपाणि सर्वाणि ज्ञेयानि।

(1772) "श्रन्भु प्रमादे" (I-भ्वादिः-393. सक. सेट्. आत्म.)

धातुरयं तालव्योष्मादिः इति **काश्यपादयः**। दन्त्यादिरिति **चन्द्रादयः**। **काशिकादिषु** प्रकृतधातूपादानप्रकरणेषु शोधकानां इच्छानुसारेण यथेष्टं मुद्रितम्, अतो **भाष्यादिषु** 'स्रम्भु' इति वा, 'श्रम्भु' इति वाऽभीष्टमिति नेदानीं निश्चेतुं सामग्री लभ्यते। **व्याख्यातारस्तु** निर्विचारं परस्परदूषकाः।

[3]विश्रम्भः, [4]विश्रब्धः। इतराणि सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (948) बोध्यानि।

(1773) "श्रमु तपसि खेदे च" (IV-दिवादिः-1204. सक. सेट्. आत्म.)

**शमादिः।**

सर्वाण्यपि रूपाणि दैवादिक**क्लाम्यति**वत् (283) ज्ञेयानि। '**शमित्यष्टाभ्यः**—' (3-2-141) इति घिनुणि 'शमामष्टानाम्—' (7-3-74) इति दीर्घे च **श्रमी** इति रूपम्। 'नोदात्तोपदेशस्य—' (7-3-34) इति वृद्धिनिषेधः।

---

1. 'अवोदैधौद्मप्रश्रथहिमश्रथाः' (6-4-29) इति घञि निपातनात् नलोपः, वृद्ध्यभावश्च। हिमं श्रथ्यतेऽस्मात् इति **हिमश्रथः**=चन्द्रः।
2. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः। 'ण्यासश्रन्थः—' (3-3-107) इति युच् तु क्रैयादिक**श्रन्थ**धातोरिति **माधवादयः**।
3. 'नोपधात् थफान्ताद्वा' (1-2-23) इति कित्त्वविकल्पः। कित्त्वपक्षे 'अनिदिताम्—' (6-4-24) इति नकारलोपः।

1. क्वसौ, '**श्रन्थि**ग्रन्थि—' (वा. 1-2-6) इत्यादिना लिटः कित्त्वान्नलोपे, 'एत्वाभ्यासलोपावत्र वक्तव्यौ' इति **हरदत्त**वचनात् एत्वाभ्यासलोपौ। 'वस्वेकाज्—' (7-2-67) इतीट्।
2. 'ण्यास**श्रन्थो** युच्' (3-3-107) इति युचि **श्रन्थना**।
3. घञि रूपमेवम्। धातुरयं नोपधः; प्रयोगे परसवर्णवशात् मकारश्रवणं सर्वत्रेति बोध्यम्।
4. निष्ठायाम्, उपधानकारलोपे, निष्ठातकारस्य 'झषस्तथोः—' (8-2-40) इति धत्वे, भकारस्य जश्त्वेन बकारे च रूपमेवम्।

श्रान्त्वा, विश्रान्तिः । [1]विश्रामः । [2]श्रमणा ।

(1774) "**श्रा पाके**" (II-अदादिः-1053. सक. अनिट्. पर.)

'........**श्राति** श्रायति लुक्शपोः ॥' (श्लो. 9) इति **देवः** ।

[3]श्रृतम् क्षीरं हविर्वा, श्राणा यवागूः, श्रपिता यवागूः । इतराणि समस्तान्यपि रूपाणि आदादिक**भाति**वत् (1153) बोध्यानि ।

(1775) "**श्रा पाके**" (I-भ्वादिः-810. सक. अनि. पर.) **घटादिः** ।

'........श्राति **श्रायति** लुक्शपोः ॥' (श्लो. 9) इति **देवः** ।

'श्रै पाके' (919) इति भौवादिकस्य कृतात्वस्य, 'श्रा पाके' (1053) इत्यादादिकस्य च मित्त्वार्थं घटादिषु अनुवादोऽयम्; न तु स्वतन्त्रो धातुः । अत्र सर्वत्र 'पाकः=विक्लित्तिः' इति **कैयटादयः** । 'स्वेदः' इति **बोपदेवः** । '**क्लेशने**' इति **जैनेन्द्रे** । रूपाणि सर्वाणि घाटादिक**घटति**वत् (454) बोध्यानि ।

(1776) "**श्रिञ् सेवायाम्**" (I-भ्वादिः-897. सक. सेट्. उभ.)

'श्रीणाति पाके श्रीणीते **सेवायां श्रयते श्रयेत्** ।' (श्लो. 16) इति **देवः** ।

श्रायकः-यिका, श्रायकः-यिका, [4]शिश्रयिषकः-शिश्रीषकः-षिका, शेश्रीयकः-यिका;

---

1. घञि रूपमेवम् । 'नोदात्तोपदेशस्य—' (7-3-34) इति वृद्धिनिषेधो नात्र, बाहुलकात् । 'वौ **श्रमेः**' इति वचनं वृद्ध्यर्थं **केचित्** कल्पयन्ति । **भाष्यवार्तिकवृत्तिकारादय**स्तु '**विश्राम** इति न पाणिनीयम् ।' इत्याहुः ।
   "**विश्रामस्या**पशब्दत्वं **वृत्त्युक्तं** नाद्रियामहे ।
   **मुरारिभवभूत्यादीन्** अप्रमाणीकरोति कः ? ॥
   '**विश्राम**शाखिनं वाचां' '**विश्रामो** हृदयस्य च ।'
   '**विश्राम**हेतोः' इत्यादि महान्तस्ते प्रयुञ्जते ॥"
   इति **प्रक्रियासर्वस्वम्** अत्रावधेयम् ।
2. णिजन्तात् नन्द्यादित्वात् कर्तरि ल्युः । 'कुमारः **श्रमणादिभिः**' (2-1-70) इति निर्देशोऽत्र लिङ्गम् ।
3. ण्यन्तस्य अण्यन्तस्य च क्तप्रत्यये, '**श्रृतं** पाके' (6-1-27) इति निपातनादेवं रूपम् । धातोः श्रृभावः । अन्यत्र **श्राणा** यवागूः **श्रपिता** वा । 'संयोगादेः—' (8-2-43) इति शुद्धे निष्ठानत्वम् । णत्वं च । ण्यन्ते तु आदन्तलक्षणे पुकि, घटादित्वेन मित्त्वात् ह्रस्वे **श्रपिता** इति ।
4. 'सनीवन्तर्धभ्रस्जदम्भुश्रि—' (7-2-49) इत्यादिना सनि इड्विकल्पः सर्वत्र । इट्पक्षे **शिश्रयिषकः** इति रूपम् । इडभावपक्षे सनः कित्वे 'अज्झनगमां सनि' (6-4-16) इति दीर्घे **शिश्रीषकः** इत्यादीनि रूपाणि ।



श्रेता-त्री, श्राययिता-त्री, शिश्रयिषिता-शिश्रीषिता-त्री, शेश्रीयिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्षायति**वत् (263) बोध्यानि ।

[1]उच्छ्रायः, [2]श्रायः [3]शिश्रिवान्, [4]विश्रयी, [5]श्रित्वा, श्रितः-[6]कष्टश्रितः, [7]श्रीः, [8]श्रेणिः-श्रेणी, [9]श्मश्रु ।

(1777) "**श्रिषु दाहे**" (I-भ्वादिः-701. सक. सेट्. पर.)

सर्वाण्यपि रूपाणि भौवादिक**क्षेपति**वत् (261) बोध्यानि । उदित्त्वात् क्त्वायामिड्विकल्पः ।

(1778) "**श्रीञ् पाके**" (IX-क्र्यादिः-1475. सक. सेट्. उभ.)

'**श्रीणाति पाके श्रीणीते** सेवायां श्रयते श्रयेत् ।' (श्लो. 16) इति **देवः** ।

प्रातिस्विकरूपाणि विना क्रैयादिक**क्रीणाति**वत् (274) सर्वाणि रूपाणि बोध्यानि ।

(1779) "**श्रु श्रवणे**" (I-भ्वादिः-942. सक. अनि. पर.)

श्रावकः-विका, श्रावकः-विका, शुश्रूषकः-षिका, शोश्रूयकः-यिका;

---

1. एरचोऽपवादभूतः 'उदि **श्रयति**—' (3-3-49) इति घञ् । कथं 'पतनान्ताः **समुच्छ्रयाः**' इति अजन्तत्वम्? 'कृत्यल्युटो बहुलम्' (3-3-113) इति बहुलग्रहणात् 'क्वचिदपवादविषयेऽपि उत्सर्गोऽभिनिविशते' (परि. 60) इति बोध्यम् । वक्ष्यमाणविभाषाग्रहणानुवृत्तेः **समुच्छ्रयः** इत्यपि साधुरिति **प्रक्रियाकौमुदीव्याख्या** (3-3-49) ।
2. '**श्रि**णीभुवोऽनुपसर्गे' (3-3-24) इति घञ् ।
3. लिटः क्वसौ द्विर्वचनादिकेषु कृतेषु रूपमेवम् । **काशिकायाम्** (7-2-67) उदाहृतम् ।
4. विपूर्वकादस्मात् 'जिदृक्षि**विश्री**ण्—' (3-2-157) इत्यादिना इनिप्रत्ययस्ताच्छीलिकः ।
5. '**श्र्युकः** क्किति' (7-2-11) इतीण्निषेधः । एवं निष्ठाक्तिन्नादिष्वपि ज्ञेयम् ।
6. कष्टं श्रितः **कष्टश्रितः** । 'द्वितीया **श्रित**—' (2-1-24) इत्यादिना समासः ।
7. 'क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजु**श्रीणां** दीर्घोऽसंप्रसारणं च' (वा. 3-2-178) इति ताच्छीलिकः क्विप्प्रत्ययः, तत्सन्नियोगेन धातोर्दीर्घः, सम्प्रसारणाभावश्च । श्रयते भगवन्तं नित्यमिति **श्रीः** लक्ष्मीः ।
8. 'वहिश्रि—' (द. उ. 1-21) इत्यादिना निप्रत्ययः । **श्रेणिः**=आलिः । **श्रेणी**; अत्र 'कृदिकारात् अक्तिनः' (ग. सू. 4-1-4) इति ङीष् ।
9. 'श्मनि **श्रयते** डुन्' (द. उ. 1-161) इति डुन्प्रत्यये टिलोपे च रूपमेवम् ।

श्रोता-त्री, श्रावयिता-त्री, शुश्रूषिता-त्री, शोश्रूयिता-त्री ;
इत्यादीनि रूपाणि भौवादिक**द्रवति**वत् (883) बोध्यानि ।
[1]शृण्वन्-ती, [2]संशृण्वानः, [3]शुश्रूषमाणः, [4]प्रतिशुश्रूषन्-आशुश्रूषन्, [5]देवदत्तं प्रतिशुश्रूषमाणः-भाष्यात् आशुश्रूषमाणः, [6]शुश्रुवान्, [7]देवदत्ताय गां प्रतिशृण्वन्-आशृण्वन् वा, [8]निश्रावी, [9]विश्रावः, [10]श्रवणम्, [11]प्रतिश्रुत्, [12]श्रुतिः, [13]सुश्रुतः, [14]शिश्रावयिषुः-शुश्रावयिषुः,

---

1. शतरि, 'श्रुवः शृ च' (3-1-74) इति श्नुप्रत्ययः, तत्सन्नियोगेन '**शृ**' इति प्रकृतेरादेशश्च । 'सार्वधातुकमपित्' (1-2-4) इति श्नुप्रत्ययस्य ङिद्वद्भावात् 'क्ङिति च' (1-1-5) इति गुणनिषेधः । अत्र वदन्ति—भ्वादिषु पठितत्वादस्य धातोः, **श्रवति** इत्यनेकत्र **ऋग्वेदादिषु** प्रयोगश्रवणात् च पूर्वं श्रुधातुः **श्रवति** इत्याद्याकारेण भौवादिकरूपेणापि युक्त इत्यूह्यते, इति । विद्वांसः प्रमाणमत्र ।
2. 'अर्तिश्रुदृशिभ्यश्च' (वा. 1-3-29) इत्यनेन समुपसृष्टादस्मात् आत्मनेपदम् ।
3. 'ज्ञाश्रुस्मृदृशां सनः' (1-3-57) इति सन्नन्तात् नित्यमात्मनेपदम् ।
4. '**प्रत्याङ्भ्यां श्रुवः**—' (1-3-59) इति आत्मनेपदनिषेधात् यथासम्भवं परस्मैपदमत्रेति बोध्यम् ।
5. 'प्रत्याङ्भ्यां—' (1-3-59) इत्यत्र उपसर्गयोरेव ग्रहणम् ; प्रकरणात् । अतश्च कर्मप्रवचनीययोः प्रत्याङोर्ग्रहणे तु आत्मनेपदमपि भवति ।
6. 'भाषायां सदवसश्रुवः' (3-2-108) इति लिटः क्वसुः । द्विर्वचनादिकम् ।
7. '**प्रत्याङ्भ्यां श्रुवः** पूर्वस्य कर्ता' (1-3-59) इति प्रत्याङ्भ्यामुपसृष्टस्य **शृणोतेः** प्रयोगे देवदत्तस्य सम्प्रदानत्वात् चतुर्थी इति बोध्यम् ।
8. 'रक्षश्रुवसवपशां नौ' (ग. सू. 3-1-134) इति ग्रह्यादिपाठात् णिनिप्रत्ययः । **क्षीरस्वामी** तु अत्र 'नि' इत्युपसर्गं प्रत्ययस्य णित्वं च अप्रयोजकं मत्वा **श्रावी श्रवी** इति वृद्धिपक्षं वृद्ध्यभावपक्षं चाह ।
9. '**वौ क्षुश्रुवः**' (3-3-25) इति घञ् । उवर्णान्तत्वलक्षणापोऽपवादः ।
10. श्रूयतेऽनेनेति संज्ञायां ल्युटि **श्रवणम्** =श्रोत्रम्, वेदो वा ।
11. प्रतिश्रूयते इति **प्रतिश्रुत्**=प्रतिध्वनिः । स्त्रियां भावे सम्पदादित्वात् (वा. 3-3-108) क्विप् । तुक् ।
12. श्रूयतेऽनया इति **श्रुतिः**=वेदः, श्रोत्रं वा । 'श्रुयजीषिस्तुभ्यः करणे' (वा. 3-3-94) इति स्त्रियां ल्युडपवादः क्तिन् ।
13. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां कर्तरि क्तः । **सुश्रुतः**=वैद्यशास्त्रप्रवर्तकः ऋषिविशेषः ।
14. ण्यन्तात् सनि 'सनाशंसभिक्ष उः' (3-2-168) इति ताच्छीलिके उप्रत्यये, '**स्रवतिशृणोति**—' (7-4-81) इत्यादिना अवर्णपरकत्वात् अभ्यासस्येकारविकल्पः ।



[1]श्रवणः, [2]श्रोत्रम्, [3]श्रवः-विश्रवः-वैश्रवणः-रावणः, [4]श्रोणिः इतीमानि धातोरस्य विशेषरूपाणि ।

(1780) "**श्रै पाके**" (I-भ्वादिः-919. सक. अनि. पर.)

'........श्राति **श्रायति** लक्ष्मणो ॥' (श्लो. 9) इति **देवः** ।
सर्वाण्यपि रूपाणि भौवादिक**कायति**वत् (263) बोध्यानि ।

(1781) "**श्रोणृ संघाते**" (I-भ्वादिः-456. अक. सेट्. पर.)
भौवादिक**वेणति**वत् (1063) सर्वाण्यपि रूपाण्यूह्यानि ।

(1782) "**श्लकि गत्यर्थः**" (I-भ्वादिः-85. सक. सेट्. आत्म.)
भौवादिक**कङ्कति**वत् (140) सर्वाणि रूपाणि ज्ञेयानि ।

(1783) "**श्लगि गत्यर्थः**" (I-भ्वादिः-152. सक. सेट्. पर.)
सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) बोध्यानि ।

(1784) "**श्लाखृ व्याप्तौ**" (I-भ्वादिः-127. अक. सेट्. पर.)
[A]प्रश्लाखितः । इतराणि समस्तान्यपि रूपाणि भौवादिक**द्राखति**वत् (879) बोध्यानि ।

(1785) "**श्लाघृ कत्थने**" (I-भ्वादिः-115. अक. सेट्. आत्म.)

'**कत्थनम्**=उत्कर्षाख्यानम्' इति **स्वामी** । शानचि [5]श्लाघमानः ।
'**श्लाघमानः** परस्त्रीभ्यस्तत्रागाद् राक्षसेश्वरः' (भट्टिः 8-73) । इतराणि समस्तान्यपि रूपाणि भौवादिक**द्राखति**वत् (879) बोध्यानि ।

---

1. नन्द्यादित्वात् (ग. सू. 3-1-134) कर्तरि ल्युः । **श्रवणः**=नक्षत्रविशेषः । बहुश्रुतः, अश्वत्थवृक्षो वा ।
2. औणादिके (द. उ. 8-34) ष्ट्रन्प्रत्यये रूपमेवम् । श्रूयतेऽनेनेति **श्रोत्रम्**=श्रवणम् ।
3. औणादिके (द. उ. 9-49) असुन्प्रत्यये रूपमेवम् । विपूर्वकादस्मात् अपत्यार्थे 'विश्रवसो विश्रवणरवणौ' (ग. सू. 4-1-112) इति शिवादिपाठात् प्रकृतेर्विश्रवणरवणादेशौ । तौ च यक्षराजे, रक्षोविशेषे च व्यवस्थितौ । तेन **वैश्रवणः** कुबेरः । **रावणः**=रक्षोविशेषो लङ्काधिपतिः ।
4. 'वह्निश्रियुश्रु....' (द. उ. 1-21) इत्यादिना निप्रत्ययः । **श्रोणिः** कटिपश्चाद्भागः ।
5. अत्र '**श्लाघह्नुङ्**—' (1-4-34) इत्यादिना ज्ञीप्स्यमानस्य=ज्ञापयितुमिष्यमाणस्य सम्प्रदानत्वात् चतुर्थी । आत्मानं स्तुतिबोध्यं प्रकाशयन् राक्षसस्तत्र गत इत्यर्थः ।

A. '**प्रश्लाखितं** प्रोखितसत्त्वमुङ्खितं खगैर्वेखन् मारुतवङ्खिसौरभम् ॥' धा. का. 1-18.

(1786) "श्लिष आलिङ्गने" (IV-दिवादि:-1186. सक. अनि. पर.)

'श्लिष्यत्यालिङ्गने, दाहे श्लेषति श्लेषते, णिचि ॥
श्लेषयेत्—' (श्लो. 175-6) इति **देवः**।

आश्लेषः—नक्षत्रविशेषः, आलिङ्गनं च। संज्ञायां, करणे वा घञ् अत्र।
आश्लेषी—णिनिः। [1]श्लेषः—अलंकारविशेषः।
आश्लिष्टः कन्यां देवदत्तः; 'गत्यर्थाकर्मक—' (3-4-72) इत्यादिना कर्तरि क्तः।
श्लेष्मा—औणादिकः (द. उ. 6-73) मनिन्प्रत्ययः। रोगविशेषस्य, तज्जनकशारीरकपदार्थविशेषस्य च नाम। इतराणि सर्वाण्यपि रूपाणि दैवादिक**तुष्यति**वत् (758) बोध्यानि।

(1787) "श्लिष श्लेषणे" (X-चुरादि:-1574. सक. सेट्. उभ.)

सर्वाण्यपि रूपाणि चौरादिक**कीटयति**वत् (194) बोध्यानि।

(1788) "श्लिषु दाहे" (I-भ्वादि:-702. सक. सेट्. पर.)

'श्लिष्यत्यालिङ्गने **दाहे श्लेषति** श्लेषणे णिचि ॥' (श्लो. 175) इति **देवः**।
श्लेषकः-षिका, शिश्लेषिषकः-शिश्लिषिषकः-षिका, शेश्लिषकः-षिका;
इत्यादीनि रूपाणि सर्वाण्यपि भौवादिक**पोषति**वत् (1026) ऊह्यानि।

(1789) "श्लोकृ सङ्घाते" (I-भ्वादि:-77. सक. सेट्. पर.)

'**संघातः**=ग्रन्थः' इति **सायणः**। '—संघाते वर्जने सर्जने' इति **वोपदेवः**।
'—संघाते—संहनने, संहन्यमाने च' इति **क्षीरस्वामी**। 'संघातो—ग्रन्थः। स चेह ग्रथ्यमानव्यापार इति **स्वाम्यादयः**। **काश्यपादयस्तु** ग्रन्थितृव्यापारः इति ग्रथ्नातिवत् सकर्मकः इति' **धातुवृत्ता**वुक्तम्। सर्वाण्यपि रूपाणि **केपति**वत् (261) ज्ञेयानि। 'स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा। आद्येऽकर्मको द्वितीये सकर्मकः' इति **सिद्धान्तकौमुदी**।

(1790) "शोणृ संघाते" (I-भ्वादि:-457. सक. सेट्. पर.)

तालव्योष्मादिरयम्। सर्वाण्यपि रूपाणि भौवादिक**क्लेवति**वत् (291) ज्ञेयानि।

(1791) "श्वकि गत्यर्थः" (I-भ्वादि:-96. सक. सेट्. आत्म.)

'श्वगि—' इति **मैत्रेयः**।

1. 'श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिष—' (3-1-141) इति **कर्तरि** णप्रत्ययः।



श्वङ्कः-ङ्किका, श्वङ्ककः-ङ्किका, शिश्वङ्किषकः-षिका, शाश्वङ्ककः-ङ्किका; इत्यादीनि रूपाणि सर्वाण्यपि **कङ्कति**वत् (140) ऊह्यानि। ल्युटि-[A]श्वङ्कनम्।

(1792) "श्वच गतौ" (I-भ्वादि:-166. सक. सेट्. आत्म.)

श्वाचकः-चिका, श्वाचकः-चिका, शिश्वचिषकः-षिका, शाश्वचकः-चिका;
इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कचति**वत् (144) ज्ञेयानि।

(1793) "श्वचि गतौ" (I-भ्वादि:-167. सक. सेट्. आत्म.)

सर्वाण्यपि रूपाणि **कञ्चति**वत् (145) ऊह्यानि। कर्तरि क्तप्रत्यये-[B]श्वञ्चितः।

(1794) "श्वठ असंस्कारगत्योः" (X-चुरादि:-1565. सक. सेट्. उभ.)

'**गत्यसंस्कार**धात्वर्थे शाठयेत् **श्वाठयेदि**ति ॥' (श्लो. 81) इति **देवः**।
"**इदित्** [श्वठि] इति **दुर्गः**। **मैत्रेयो**ऽपि 'श्वठीत्ये**के**'" इति **माधवः**।
'—संस्कारगत्योः' इति **मैत्रेयकाशकृत्स्नकातन्त्रशाकटायनादयः**।
'—गतिसंस्कारयोः' इति **जैनः**। '—गत्यसंस्कृतसंस्कृते' इति **वोपदेवः**।
'—संस्कारे च द्रुमे' इति **धा. का. व्या.** (3-16)। श्वाठकः-ठिका, शिश्वाठयिषकः-षिका; इत्यादिकानि रूपाणि सर्वाण्यपि **कलापयति**वत् (282) ज्ञेयानि।

(1795) "श्वठ सम्यगवभाषणे" (X-चुरादि:-1856. सक सेट्. उभ.)

अदन्तः।

'शठयेत् **श्वठयेदे**ते द्वे **सम्यगवभाषणे**।' (श्लो. 81) इति **देवः**।
"'—सम्यगाभाषणे' इति **दुर्गः**। 'सम्यग्भाषणे' इति **शाकटायनः**। सम्यगाभाषणे सम्यक् वचनक्रियायामिति **क्षीरस्वामी**" इति **पुरुषकारः**। प्रकृत**क्षीरतरङ्गिण्यां** तु 'असम्यगाभाषणे' इत्येव दृश्यते।
श्वठकः-ठिका, शिश्वठयिषकः-षिका, श्वठयिता-त्री, शिश्वठयिषिता-त्री;
इत्यादीनि रूपाणि सर्वाण्यपि चौरादिक**कलापयति**वत् (282) ज्ञेयानि। ण्यन्ते तत्प्रकृतिकसन्नन्ते च सर्वत्र न उपधावृद्धिः; अदन्तपाठसामर्थ्यात्।

A. '**प्रश्वङ्क्नो**त्त्रङ्कितत्रथस्वनादढौकि भीतैरपि नो शिखावलैः।' धा. का. 1-14.
B. '......अशाश्वचुः **श्वञ्चित**सौरभाः कचे।' धा. का. 1.23.

(1796) "**श्वठि असंस्कारगत्योः**" (X-चुरादिः-1565. सक. सेट्. उभ.)

'**श्वठ** इत्यस्य पाठान्तरमिदम्' इति **सि. कौमुदी**। **दौर्ग**सम्मतः पाठः इति **सायणस्वामिनौ**। 'संस्कारगत्योः' इति **मैत्रेयशाकटायनहेमचन्द्रादयः**।
श्वण्ठकः-ण्ठिका, शिश्वण्ठयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कण्ठयति**वत् (150) ज्ञेयानि।

(1797) "**श्वभ्र गतौ**" (X-चुरादिः-1624. सक. सेट्. उभ.)

'—गतौ च; चकारात् कृच्छ्रजीवने इति **दौर्गाः**' इति **स्वामी**। '—बिले गतौ तङ्के' इति **वोपदेवः**। 'श्वभ्रिः बिलार्थे च **द्रुमे**' इति **धा. का. व्याख्या** (3-24)।
श्वभ्रकः-भ्रिका, शिश्वभ्रयिषकः-षिका; श्वभ्रयिता-त्री, शिश्वभ्रयिषिता-त्री; इत्यादीनि सर्वाण्यपि **कर्णयति**वत् (170) ऊह्यानि। कर्मणि क्तप्रत्यये-[A]विश्वभ्रितः।

(1798) "**श्वर्त गतौ**" (X-चुरादिः-1623. सक. सेट्. उभ.)

'**स्वर्त** गत्यां च; चकारात् कृच्छ्रजीवने' इति **क्षीरस्वामी**। सर्वाण्यपि रूपाणि चौरादिक**कर्णयति**वत् (170) ज्ञेयानि।

(1799) "**श्वल आशुगमने**" (I-भ्वादिः-549. सक. सेट्. पर.)

'शल—' इति **क्षीरस्वामी**। 'आशुगतौ' इति **काशकृत्स्न-कातन्त्र-शाकटायनादयः**। '—वेगे' इति **वोपदेवः**।
श्वालकः-लिका, श्वालकः-लिका, शिश्वलिषकः-षिका, शाश्वलकः-लिका; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कलथति**वत् (280) ऊह्यानि। औणादिके (द. उ. 8-132) वन्प्रत्यये उपधाया उत्वे च रूपमेवम्—**शुल्वम्**= स्त्रीपुरुषयोगः। कर्तरि क्तप्रत्यये—[B]प्रश्वलितः। घटादित्वप्रयुक्तकार्याणि न संभवन्ति।

(1800) "**श्वल्क परिभाषणे**" (X-चुरादिः-1570. सक. सेट्. उभ.)

'—भाषणे' इति **शाकटायनचन्द्रकाशकृत्स्नकातन्त्रादयः**।

A. 'आश्वर्तितो रणभुवं सबलोऽत्र रेजे **विश्वभ्रिता**भ्रकुहरे सति तूर्यनादे ॥' धा.का.3-24

B. 'दलत्तनु **प्रश्वलितान्** परान् प्रति........ ॥' धा. का. 1-70.



श्वल्ककः-ल्किका, शिश्वल्कयिषकः-षिका; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**गन्धयति**वत् (375) ऊह्यानि। ल्युटि-श्वल्कनम्। '**सुश्वल्कनाः** सुमधुरप्रियवल्कनाभिः........ ॥' धा. का. 3-17.

(1801) "**श्वल्ल आशुगमने**" (I-भ्वादिः-550. सक. सेट्. पर.)

सर्वाण्यपि रूपाणि भौवादिक**चिल्लति**वत् (528) बोध्यानि।

(1802) "**श्वस प्राणने**" (II-अदादिः-1069. अक. सेट्. पर.)

'प्रत्ययाद[1]**श्वसन्त्यः**', [2]श्वासः, [3]श्वसनः, [4]आश्वस्तः-आश्वसितः। इतराणि सर्वाण्यपि रूपाणि आदादिक**रिति**वत् (52) बोध्यानि।

(1803) "**[टु ओ] श्वि गतिवृद्ध्योः**"

(I-भ्वादिः-1010. सक. अक. सेट्. पर.) **यजादिः**।

श्वायकः-यिका, श्वायकः-यिका, शिश्वयिषकः-षिका, [5]शेश्वीयकः-शोशूयकः-यिका; श्वयिता-त्री, श्वाययिता-त्री, शिश्वयिषिता-त्री, शेश्वीयिता-शोशूयिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कि**धातुवत् (189) बोध्यानि। [6]शूनः-

1. अत्र नुम् न शास्त्रसम्मतः। परं तु 'गणकार्यमनित्यम्' (परि. 96) इति साधयन्ति। एवं 'न **विश्वसेदविश्वस्तं विश्वस्ते** नाति**विश्वसेत्**' 'न **विश्वसेत्** पूर्वविरोधितस्य' इत्याद्यपि भौवादिकवत् रूपाणि गणकार्यस्यानित्यत्वेन साधयन्ति। **परे** तु 'प्रत्ययाद**श्वसत्यः**' इत्येव नुम्रहितं पाठमादृत्य, '**विश्वसेत्**' इत्यादिस्थलेषु आर्षत्वात् समाधानं च वदन्ति।
2. 'श्याऽऽद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिष**श्वसश्च**' (3-1-141) इति कर्तरि णप्रत्ययः।
3. नन्द्यादित्वात् कर्तरि ल्युप्रत्ययः। **श्वसनः**= वायुः।
4. 'आदितश्च' (7-2-16) इत्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वात् '**आश्वस्तः**' इत्यत्रापि अनिट्त्वम्—इति **काशिका**। "निष्ठायामिदं नेच्छन्ति **काशकृत्स्नाः**' इति **स्वामिकाश्यपौ**। **आत्रेयमैत्रेयौ** तु '**आश्वसितः**' इतीदं चाहतुः" इति **धातुवृत्तिः**। अतश्चोभयथाऽप्यस्माभिः प्रदर्शितं रूपम्।
5. यङन्ते 'विभाषा **श्वेः**' (6-1-30) इति सम्प्रसारणविकल्पः। सम्प्रसारणपक्षे पूर्वरूपहलादिशेषादिषु **शोशूयकः** इत्यादीनि रूपाणि। सम्प्रसारणाभावपक्षे **शेश्वीयकः** इत्यादीनि रूपाणीति ज्ञेयम्।
6. निष्ठायाम् यजादित्वात् (6-1-15) सम्प्रसारणम्, '**श्वीदितः**—' (7-2-14) इतीण्निषेधः। 'ओदितश्च' (8-2-45) इति निष्ठातकारस्य नकारः। अत्र **न्यासः** "'ओदितश्च' (8-2-45) इति ओदितोऽनन्तरस्य निष्ठातकारस्य नत्वविधानादेवेडभावस्य सिद्धेः **श्वयति**ग्रहणं (7-2-14 सूत्रे इति शेषः) शक्यमकर्तुम्" इति। 'वैचित्र्यार्थम् ग्रहणम्' इति समाहितं च। परं तु 'ओ लडि' इत्यादिषु व्यवहितेऽपि निष्ठानत्वस्य **कैश्चिद**ङ्गीकृतत्वात् तद्वदत्र मा भूदित्येवमर्थं ग्रहणमिति युक्तं समाधानम्।

उच्छूनः-शूनवान्, [1]उदश्वित्, [2]श्वयथुः, [3]श्वा-मातरिश्वा, [4]शवः, [5]श्वयीचिः, **इत्यादीनि** विशेषरूपाणि । [A]शेश्वीयमानः ।

(1804) **"श्विता वर्णे"** (I-भ्वादिः-742. अक. सेट्. आत्म.)

'—शौक्ल्ये' इत्येव **वोपदेवः ।**

सर्वाण्यपि रूपाणि भौवादिक**श्वेदति**वत् (326) बोध्यानि । श्वेतः, [6]श्वित्रम्, श्विकित्वा-श्वेतित्वा इति विशेषः ।

(1805) **"श्विदि श्वैत्ये"** (I-भ्वादिः-10. अक. सेट्. आत्म.)

'—शैत्ये' इति **जैन-कातन्त्रौ ।**

'श्वेतस्य गुणस्यापि धातुना साध्यतया क्रमिकतया चाभिधानात् क्रियात्वम् । यदाह—

'श्वेतते: श्वेत इत्येकं श्वेतत्वेन प्रकाश्यते ।
आश्रितक्रमरूपत्वादभिधानं प्रवर्तते ॥' (वाक्यपदीयम् 3-3) इति' इति **माधवः ।**

श्विन्दकः-न्दिका, शिश्विन्दिषकः-षिका, इत्यादिकानि रूपाणि सर्वाण्यपि **क्लिन्दति**वत् (284) ज्ञेयानि ।

---

1. उदकेन श्वयतीति **उदश्वित्** तक्रम् । क्विपि, तुकि च रूपमेवम् । 'उदकस्योदः संज्ञायाम्' (6-3-57) इति उदकशब्दस्य उदादेशः । '**उदश्वितो**ऽन्यतरस्याम्' (4-2-19) इति निर्देशसामर्थ्यात् यजादित्वेऽपि न सम्प्रसारणं क्विब्विषये इत्यवधेयम् ।
2. 'ट्वितोऽथुच्' (3-3-89) इत्यथुच्प्रत्ययो भावे । **श्वयथुः**= कुष्ठरोगविशेषः । 'रोगाख्यायाम्—' (3-3-108) इति ण्वुलोऽपवादोऽप्ययमिति **केचित् ।**
3. श्वयति=गच्छति निरन्तरमिति **श्वा**=शुनकः । '**श्वन्**उक्षन्—' [द. उ. 6-55] इति निपातनात् साधुः । मातरि=सर्वस्य परिच्छेत्तरि आकाशे श्वयति=वर्धते इति **मातरिश्वा** वायुः । 'तत्पुरुषे कृति—' (6-3-14) इति सप्तम्या अलुक् ।
4. श्वयति सन्त्यक्तः प्राणिभिरिति **शवः** इति **दशपाद्युणाद्याम्** (9-53) उक्तम् । 'शवतिर्गतिकर्मा कम्बोजेषु, विकार एवैन**मार्याः** प्रभाषन्ते' (पस्पशाह्निके) इति **भाष्य**विरोधादेतदुपेक्ष्यम् ।
5. **श्वयति** वर्धते इति **श्वयीचिः** चन्द्रमाः । औणादिके (द. उ. 1-40) ईचिप्रत्यये साधुः ।
6. औणादिके (द. उ. 8-31) रक्प्रत्यये रूपमेवम् । **श्वित्रम्**=व्याधिविशेषः ।

A. 'आबद्धभीमभ्रुकुटीविभङ्गः **शेश्वीयमाना**रुणरौद्रनेत्रः ।' भ. का. 3.30.



(1806) **"षगे संवरणे"** (I-भ्वादिः-789. सक. सेट्. पर.)

**घटादिः, षित्** । 'छगे' इति **क्वचित्** पाठः ।
[1]सागकः-गिका, सगकः-गिका, सिसगिषकः-षिका, सासगकः-गिका ; इत्यादीनि समस्तान्यपि रूपाणि घाटादिक**कखति** (142)वत् बोध्यानि ।

(1807) **"षघ हिंसायाम्"** (V-स्वादिः-1268. सक. सेट्. पर.)

सघ्नुवन्-शता । इतराणि सर्वाण्यपि रूपाणि सौवादिक**शक्नोति**वत् (1672) बोध्यानि ।

(1808) **"षच सेचने"** (I-भ्वादिः-163. सक. सेट्. आत्म.)

'सेवनेऽपि' इति **केचित्** । '**सेचने सचते,** तच्च समवाये सचत्यपि ।' (श्लो. 46) इति **देवः** । "**केचित्तु** परस्मैपदिभिः सह धातुमेनं पठन्ति.... तदेतत् 'ब्रुविशासिगुणेन च यत् **सचते**' (भाष्यम् 1-4-51) इति **भाष्य**विरोधादयुक्तम्" इति **हरदत्तः** (1-4-51) । 'षप' इति **मैत्रेयशाकटायनादयः** । सर्वाण्यपि रूपाणि भौवादिक**कचति**वत् (144) बोध्यानि । [2]सचिवः, [3]सक्तुः ।

(1809) **"षच समवाये"** (I-भ्वादिः-997. अक. सेट्. उभ.)

'सेचने **समवाये** च **सचते,** सचति क्रमात्' (श्लो. 46) इति **देवः** ।
सर्वाण्यपि रूपाणि भौवादिक**कचति**वत् (144) बोध्यानि ।

(1810) **"षट अवयवे"** (I-भ्वादिः-313. अक. सेट्. पर.)

सटा-सिंहादीनां शिरसि विद्यमानो रोमसंस्थानविशेषः, जटाद्याकारः । पचाद्यजन्तात् टापि रूपम् । इतराणि समस्तान्यपि रूपाणि भौवादिक**कठति**वत् (148) बोध्यानि ।

---

1. 'धात्वादेः षः सः' (6-1-64) इति उपदेशे षकारादेरस्य धातोः सर्वत्र प्रयोगे सकारः । एवं षोपदेशधातुषु सर्वत्र ज्ञेयम् ।
2. **सचिवः**=अमात्यः । सचतीति **सचिः**, सहभावः, 'केशाद् वोऽन्यतरस्याम्' (5-2-109) इति मत्वर्थीयो वप्रत्ययो बाहुलकात् इत्याहुः ।
3. औणादिके (द. उ. 1-122) तुन्प्रत्यये रूपमेवम् । 'तितुत्र—' (7-2-9) इतीण्निषेधः । **सक्तुः**=पिष्टविशेषः ।

(1811) **"षट्ट हिंसायाम्"** (X-चुरादिः-1634. सक. सेट्. उभ.)

'सट्ट—' इति **क्षीरस्वामी**। 'षुट्ट—' इति **केचित्**।
चौरादिक**कुट्टयति**वत् (207) सर्वाणि रूपाण्यूह्यानि।

(1812) **"षण सम्भक्तौ"** (I-भ्वादिः-464. सक. सेट्. पर.)

'दाने सनोति सनुते, **सम्भक्तौ तु सनेदिति**॥' (श्लो. 128) इति **देवः**।
सानकः-निका, सानकः-निका, [1]सिसनिषकः-सिषासकः-सिका, [2]सासायकः-संसनकः-निका;
सनिता-त्री, सानयिता-त्री, सिसनिषिता-सिषासिता-त्री, सासायिता-संसनिता-त्री;
इत्यादीनि सर्वाण्यपि रूपाणि '**जनी** प्रादुर्भावे' (583) इतिवत् बोध्यानि।
[3]सातः-सातवान्, [4]सातिः, सन्तिः - सतिः, [5]सेनिवान्-सनिंससनिवांसम्,
सायमानः-सन्यमानः, [6]सानुः, इति विशेषरूपाणि।

(1813) **"षणु दाने"** (VIII-तनादिः-1464. सक. सेट्. उभ.)

'दाने **सनोति सनुते,** सम्भक्तौ तु सनेदिति॥' (श्लो. 128) इति **देवः**।

---

1. 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि**सनाम्**' (7-2-49) इत्यनेन सन्नन्ते इड्विकल्पः। इट्पक्षे एवं रूपम्। इडभावपक्षे 'जन**सन**खनां सन्(ञ)झलोः' (6-4-42) इत्यात्वम्। 'आदेशप्रत्यययोः' (8-3-59) इति उत्तरखण्डे षत्वम्।
2. यङन्ते 'ये विभाषा' (6-4-43) इति आकारविकल्पः। इदं च आत्वं यकारादौ क्ङिति प्रत्यय एवेत्यतः ण्यति न भवति। तेनास्माण्ण्यति **सान्यम्** इत्येव रूपम्।
3. यतः सन्नन्ते इड्विकल्पः; तेन निष्ठायामिण्न। 'जन**सन**खनां—' (6-4-42) इत्याकारः। एवं क्तिन्प्रभृतिष्वपि प्रक्रिया ज्ञेया।
4. स्त्रियां क्तिनि रूपमेवम्। '**सनः** क्तिचि लोपश्चास्यान्यतरस्याम्' (6-4-45) इति आकारादेश-नकारलोपौ तु तानादिक**सनोते**रेवेति **काशिका**। **क्षीरस्वामी** तु अस्यापि भौवादिकधातोस्तदभिप्रैति। **केचित्तु** 'ऊतियूतिजूति**साति**—' (3-3-97) इति निपातनात् **साति**रित्येकमेव क्तिनि रूपमभ्युपगच्छन्ति। परे तु **सनोते**स्तानादिकस्य **साति**रिति निपातनमिति वदन्ति। अत्र निष्कर्षे विद्वांसः प्रमाणम्।
5. छन्दसि धातोरस्मात् लिटः क्वसौ संनिङ्पूर्वात् इडागमः, एत्वाभ्यासलोपाभावश्च निपात्यते। लोके तु **सेनिवांसम्** इत्येव; अत्र एत्वाभ्यासलोपादयः। क्वस्वन्तस्य द्वितीयान्तमिदम्। 'अजित्वाऽग्ने! **सनिंससनिवांसम्**' इति **श्रुतिः**।
6. औणादिके (द. उ. 1-88) ञुण्प्रत्यये रूपमेवम्। **सानुः**=शिखरकूटः।



[1]पशुषाः-पशुषौ-पशुषः, गोषाः-नृषाः, [2]सातिः, सन्तिः, सतिः, सनिंससनिवांसम्, सेनिवान्, सन्यम्-सायम्, [3]प्रसत्य, [4]सनिः, [5]सानसिः इति विशेषरूपाणि।
इतराणि समस्तान्यपि रूपाणि तानादिक**क्षणोति**वत् (296) बोध्यानि।

(1814) **"षद्लृ विशरणगत्यवसादनेषु"**

(I-भ्वादिः-854-सक. अनिट्. पर.) **ज्वलादिः**।

'ज्वलादेश्च तुदादेश्च सीदेद् विशरणादिके।
पद्यतेरर्थ आसीदेद् आसादयति चाङि यौ॥' (श्लो. 108) **देवः**।
"—'विशमृशणुदप्रवेशामर्शक्षेपेषु षद्लृ विशरणार्थः।' इति च **श्लोकधातुपाठः**।" इति **पुरुषकारः**।
सादकः-दिका, सादकः-दिका, सिषत्सकः-त्सिका, [6]सासदकः-दिका;
[7]सत्ता-सत्त्री, सादयिता-त्री, सिषत्सिता-त्री, सासदिता-त्री;
इत्यादीनि समस्तान्यपि रूपाणि भौवादिक**खदति**वत् (338) ज्ञेयानि।
[8]निषीदन्-प्रतिसीदन्-न्ती,

---

1. पशुं सनोति इति वृत्तौ 'जन**सन**खन—' (3-2-67) इति विट्। 'विड्वनोरनुनासिकस्य—' (6-4-41) इत्याकारः। '**सनोते**रनः' (8-3-108) इति षत्वम्। एवं **गोषाः, नृषाः** इत्यादिष्वपि बोध्यम्।
2. 'ऊतियूतिजूति**साति**—' (3-3-97) इति निपातनात् साधुः। **सातिः**=दानम्। '**सान्तिः, सतिः**' इति तु क्तिचि, '**सनः** क्तिचि—' (6-4-45) इति आकारविकल्प-नलोपविकल्पयो रूपम्। 'न क्तिचि दीर्घश्च' (6-4-39) इति दीर्घविकल्पः।
3. 'वा ल्यपि' (6-4-38) इत्यस्य व्यवस्थितविभाषात्वात् नान्तानां नित्यमनुनासिकलोपः। तेनैवं रूपम्।
4. औणादिके (द. उ. 1-68) इप्रत्यये रूपम्। **सनिः**=भक्तिः, दानं च।
5. औणादिके (द. उ. 10-17) असिप्रत्यये, उपधादीर्घे च रूपम्। **सानसिः**=स्नेहः।
6. 'लुपसद—' (3-1-24) इति भावगर्हायां यङ्। भावगर्हा=धात्वर्थे कुत्साविशिष्टत्वम्। गर्हितं सीदति **सासद्यते**। अयं यङ् 'धातोरेकाचः—' (3-1-22) इति औत्सर्गिकयङोऽपवादः इति **प्राञ्चः**। नेति **नव्याः**।
7. धातोरनिट्त्वम्। दकारस्य चर्त्वेन तकारः। एवं तव्यदादिष्वपि।
8. शतरि, 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशद**सदां** पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीय**सीदाः**' (7-3-78) इति **सीद** इति सर्वादेशः। '**सदि**रप्रतेः' (8-3-66) इति इणन्तादुपसर्गात् परस्य **सदि**सकारस्य षत्वे रूपमेवम्। 'अप्रतेः' इत्युक्तत्वात् **प्रतिसीदन्** इत्यत्र न षत्वम्। उपसर्गप्रकरणात् 'नि' इति कर्मप्रवचनीयस्य न षत्वम्।

[1]निषादः, सादः-सदः, [2]प्रासादः, [3]उपनिषत्-परिषत्-शुचिषत्-द्युसत्-दिविषत्, [4]बृसी, [5]विषण्णः-विषण्णवान्, [6]निषिषत्सुः, [7]सेदिवान्, [8]सद्रुः, [9]निषद्या, [10]सादी, [11]सेदिः; [12]सदः, [13]निषद्वरः, [14]सादिः,

---

1. 'ज्वलितिकसन्तेभ्यः—' (3-1-140) इति कर्तरि णः। **निषादः** वन्यजातिविशेषः। पक्षे पचाद्यचि **सदः** इत्यपि साधुः। **माधवस्तु** "निषीदत्यस्मिन् पापमिति **निषादः**। 'हलश्च' (3-3-121) इति अधिकरणे घञ्" इत्याह। संज्ञाऽत्रेति विशेषः।
2. 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इत्यधिकरणे घञ्। प्रसीदन्ति धनिनोऽस्मिन् इति **प्रासादः** धनिनां वासः। 'उपसर्गस्य घञि—' (6-3-122) इति 'प्र' इत्यस्य दीर्घः। संज्ञायामेव मनुष्यभिन्नेऽपि स्थले दीर्घः; अन्यत्र न; ततश्च '**प्रसादः**' इत्यत्र न।
3. उप निषीदन्ति, उप निषादयन्ति वा इति **उपनिषत्**। स्त्रियां सम्पदादित्वात् (वा. 3-3-108) क्विपि षत्वे च रूपमेवम्। एवं **परिषत्** इत्यादयोऽपि। **द्युसत्**, **दिविषत्**, **शुचिषत्** इत्यादयस्तु 'सत्सूद्विष—' (3-2-61) इत्यादिना क्विपि सम्पद्यन्ते। **पर्षत्** इति तु पृषोदरादित्वात् (6-3-109) परेरिकारलोपे साधुः। **दिविषत्** इत्यत्र 'तत्पुरुषे कृति—' (6-3-14) इति सप्तम्या अलुक्। सुषामादित्वात् (8-3-98) षत्वम्। ये स्त्रीलिङ्गशब्दाः **संसत्** इत्यादयः, ते सम्पदादिक्विबन्ताः; ये तु पुँल्लिङ्गशब्दाः, ते '**सत्सू**—' (3-2-61) इति निष्पन्नाः इति वैयाकरणसम्प्रदायः।
4. ब्रुवन्तः सीदन्त्यस्यामिति **बृसी**=मुनीनामासनम्। पृषोदरादित्वात् ब्रुवच्छब्दस्य 'बृ' इत्यादेशः। सदेरधिकरणे डट्प्रत्ययः। टित्त्वात् स्त्रियां ङीप्।
5. 'रदाभ्यां—' (8-2-42) इति निष्ठातकारस्य धातुदकारस्य च नकारः। षत्वम्, णत्वं च।
6. सन्नन्तादुप्रत्ययः। 'स्थादिष्वभ्यासेन चाभ्यासस्य' (8-3-64) इति पूर्वोत्तरखण्डयोः षत्वम्।
7. लिटः 'भाषायां **सद्**वस—' (3-2-108) इति क्वसुप्रत्ययः; एत्वाभ्यासलोपः। 'वस्वेकाच्—' (7-2-67) इतीडागमः।
8. 'दाधेट्सिशद**सदो** रुः' (3-2-159) इति तच्छीलादिषु कर्तृषु रुप्रत्ययः।
9. स्त्रियां 'संज्ञायां समज**निषद**—' (3-3-99) इत्यादिना अकर्तरि क्यप्प्रत्ययः। **निषद्या**=वासस्थानम्।
10. साधुकारिणि णिनिप्रत्ययः। **सादी**=अश्वस्योपरि स्थित्वा युध्यमानः।
11. '**सदादिभ्यो** दर्शनात्' (वा. 3-2-171) इति वचनात् भाषायां किप्रत्ययः। छन्दस्येवायम्। प्रत्ययस्य लिड्वद्भावात् एत्वाभ्यासलोपौ।
12. औणादिकेऽसुन्प्रत्यये रूपम्। **सदः** सभा।
13. '**नौ सदेः**' (द. उ. 8-48) इति वरच्प्रत्ययः। **निषद्वरः**=कामः, कर्दमश्च।
14. 'इण् अजादिभ्यः' (वा. 3-3-108) इति इण्। **सादिः** अश्वस्थो योद्धा।



[1]सत्त्रम् इतीमानि विशेषरूपाणि।

(1815) "[आङः] षद पद्यर्थे" (X-चुरादिः-1832. सक. सेट्. उभ.)

**आधृषीयः।**

**पद्यर्थः**='पद गतौ' इति धातोरर्थो गतिः। 'गतौ' इति फलितम्। चौरादि-**कच्छादयति**वत् (562) रूपाण्यूह्यानि। आधृषीयत्वात् णिज्विकल्प इति विशेषः।

## (1816) "षद्लृ विशरणगत्यवसादनेषु"

(VI-तुदादिः-1427. सक. अनि. पर.)

शतरि नुम्विकल्पे सीदन्ती-सीदती इति द्वे रूपे। तदर्थमेव भौवादिकेषु पठितस्यास्यात्र तुदादौ पुनः पाठः। 'स्वरार्थं पुनः पाठः' इति **केचित्**। **केचिन्नै**-वामुमत्र पठन्ति। सर्वाण्यपि रूपाणि भौवादिक**सीदति**वत् (1815) बोध्यानि।

## (1817) "षन्ज सङ्गे" (I-भ्वादिः-987. सक. अनि. पर.)

[2]सजन्-अभिषजन्-न्ती, [3]अङ्गुलिषङ्गा यवागूः, [4]प्रासङ्गः-उत्सङ्गः-निषङ्गः, [5]अभिषिषङ्क्षुः, [6]सक्तः-सक्तवान्, [7]सक्त्वा-सङ्क्त्वा, [8]सक्थि, इति विशेष-

---

1. औणादिके (द. उ. 8-89) त्रप्रत्यये रूपम्। धातुदकारस्य चर्त्वेन तकारः। **सत्त्रम्**=यागविशेषः, अन्नशाला च।
2. शतरि, 'दंशसञ्जस्वञ्जां शपि' (6-4-25) इति अनुनासिकलोपः। धातुरयमुपदेशे नोपधः; 'नकारजावनुस्वारपञ्चमौ झलि धातुषु' इति **अभियुक्तोक्तेः**। **अभिषजन्** इत्यत्र 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्' (8-3-65) इति षत्वम्।
3. सञ्जेर्घञि कुत्वे च **सङ्गः**। अङ्गुलौ सङ्गोऽस्या यवाग्वाः **अङ्गुलिषङ्गा**। 'समासेऽङ्गुलेः सङ्गः' (8-3-80) इति षत्वम्।
4. प्रपूर्वकाद् धातोर्घञि 'चजोः—' (7-3-52) इति कुत्वे च रूपमेवम्। 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घः। **प्रासङ्गः**=युगम्। निपूर्वकात् घञि **निषङ्गः**=तूणीरम्। **उत्सङ्गः**=अङ्कः।
5. अभिपूर्वकात् **सञ्जतेः**सन्नन्तादुप्रत्यये, 'स्तौतिण्योरेव—' (8-3-61) इति नियमं बाधित्वा 'स्थादिष्वभ्यासेन चाभ्यासस्य' (8-3-64) इति षत्वम्। 'स्थादिषु' इत्यनेन **सञ्जेः** ग्रहणम्।
6. 'अनिदिताम्—' (6-4-24) इत्युपधानकारलोपः। जकारस्य चर्त्वेन ककारः।
7. धातोर्जान्तत्वात्, '**जान्त**नशां विभाषा' (6-4-32) इति उपधानकारलोपविकल्पः; तेन रूपद्वयम्।
8. 'असि**सञ्जि**भ्याम्—' (द. उ. 1-10) इति क्थिन्प्रत्ययः; कित्त्वात् नकारलोपः। **सक्थि**=ऊरुः।

रूपाणि। इतराणि सर्वाण्यपि रूपाणि कत्थतिवत् (160) बोध्यानि।

(1818) "षप समवाये" (I-भ्वादि:-400. अक. सेट्. पर.)

समवायः=सम्बन्धः, सम्यगवबोधो वा। सप्तिः—'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच्। सप्तिः=अश्वः। सप्त—औणादिकः कनिन्प्रत्ययः, तुडागमश्च। सर्वाण्यपि रूपाणि भौवादिकचयतिवत् (502) बोध्यानि।

(1819) "षम अवैक्लव्ये" (I-भ्वादि:-829. अक. सेट्. पर.)

सर्वाण्यपि रूपाणि भौवादिकद्रमतिवत् (876) बोध्यानि। [1]समः, [2]सुषमः-विषमः-निःषमः-दुःषमः। अमन्तत्वेन मित्त्वात् णिजन्ते ह्रस्वः, समकः-मिका, सिसमिषकः, संसमकः, सम्समकः-मिका; इत्यादीनि रूपाणि।

(1820) "षम्ब सम्बन्धे" (X-चुरादि:-1555. अक. सेट्. उभ.)

'शम्ब—' इत्येके। 'साम्ब' इति दीर्घादिं सकारादिं च केचित् पठन्ति। रूपाणि तु कर्णयतिवत् (170) बोध्यानि।

अत्र मध्ये 'षय गतौ' (भ्वादिः. सक. सेट्. आत्म.) इति क्वचित् इति सायणः। अन्ये सर्वेऽपि न पठन्ति।

(1821) "षर्ज अर्जने" (I-भ्वादि:-225. सक. सेट्. पर.)

'सर्ज—' इति क्षीरस्वामी। सर्जूः—औणादिक ऊप्रत्ययः। रूपाणि सर्वाणि कर्जतिवत् (169) बोध्यानि।

(1822) "षर्ब गतौ" (I-भ्वादि:-424. सक. सेट्. पर.)

रूपाणि सर्वाण्यपि भौवादिककर्वतिवत् (173-A) ज्ञेयानि।

(1823) "षर्व हिंसायाम्" (I-भ्वादि:-586-सक. सेट्. पर.)

भौवादिककर्वतिवत् (173-A) रूपाणि बोध्यानि।

(1824) "षल गतौ" (I-भ्वादि:-547. सक. सेट्. पर.)

'सल—' इति क्षीरस्वामी। सालः-वप्रः, घञ्। सलिलम् 'सलिकलि—'

---

1. पचाद्यचि रूपमेवम्। यदा तु भावार्थकत्वं, तदा संज्ञायां घप्रत्यये रूपमेवम्।
2. 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (8-3-88) इति षत्वम्।



(पञ्चपाद्युणादिः 1-54) इति औणादिकः इलच्। समस्तान्यपि रूपाणि भौवादिकगलतिवत् (387) बोध्यानि।

(1825) "षस स्वप्ने" (II-अदादि:-1078. अक. सेट्. पर.)

'—षसने' इति सुधाकरक्षीरस्वामिनौ। छान्दसोऽयमिति भाष्यादौ 'जक्षित्यादयः षट्' (6-1-6) इत्यत्र स्पष्टम्। केचित् छान्दसत्वं नाभ्युपगच्छन्ति। [1]सस्यम्, [2]सास्ना।

(1826) "षस्ज गतौ" (I-भ्वादि:-202. सक. सेट्. पर.)

'यदभिप्रायेषु सज्जते' (भाष्यम् 3-1-26) 'प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु' (गीता 3-29) 'सज्जमानमकार्येषु' (कामन्दकनीतिसारः 4-41) इत्यादिषु आत्मनेपदप्रयोगात् उभयपदत्वं न्याय्यम्। वर्धमानादयः आत्मनेपदं दूषयन्तीति माधवाचार्यैः प्रतिपादितम्। वर्धमानाद्युक्तिर्भाष्यादिविरोधात् उपेक्ष्या।

[3]सज्जकः-ज्जिका, सज्जकः-ज्जिका, सिसज्जिषकः-षिका, सासज्जकः-ज्जिका; सज्जिता-त्री, सज्जयिता-त्री, सिसज्जिषिता-त्री, सासज्जिता-त्री; इत्यादीनि रूपाणि सर्वाणि भौवादिकमज्जतिवत् (1235) बोध्यानि।

(1827) "षह मर्षणे" (I-भ्वादि:-852. सक. सेट्. आत्म.)

ज्वलादिः।

'मर्षणे सहते, यौ तु साहयेत् सहति द्वयम्।
श्यनि सह्यति शक्यार्थे— ॥' (श्लो. 197) इति देवः।

साहकः-हिका, साहकः-हिका, [4]सिसहिषकः-षिका, सासहकः-हिका;

---

1. 'माच्छाससि—' (द. उ. 8-12) इति यप्रत्ययः।
2. औणादिके (द. उ. 5-47) नप्रत्यये उपधाया दीर्घे च रूपम्। सास्ना=गवादीनां गलकम्बलः।
3. 'स्तोः श्चुना श्चुः' (8-4-41) इति श्चुत्वेन शकारः, तस्य जश्त्वेन जकारः। एवं सर्वत्र बोध्यम्।
4. अत्र उत्तरखण्डस्य षत्वं क्षीरतरङ्गिणीटिप्पणकार अभिप्रैति। तत्र निदानं न पश्यामः। प्रत्युत 'स्तौतिण्योरेव—' (8-3-61) इति नियमात् षत्वनिषेध एव प्रामाणिकः।

सोढा-[1]सोढ्री-सहिता-त्री, साहयिता-त्री, सिसहिषिता-त्री, सासहिता-त्री ;
इति समस्तान्यपि रूपाणि भौवादिकवहतिवत् (1582) बोध्यानि ।
[2]परिषहमाणः-निषहमाणः-विषहमाणः, [3]विसहनेकृत्य, [4]साह्वान्, [5]सह्यम्, [6]पृतनाषाट्-ऋताषाट्-तुराषाट्, [7]सहनः, [8]सहमानः, [9]सहिष्णुः, [10]साहयः, [11]सर्वंसहः-शत्रुंसहः, [12]सर्वंसहा, भोक्तुं [13]सहमानः,

---

1. तादेरार्धधातुकस्य '**तीषसह**—' (7-2-48) इतीड्विकल्पः । इट्पक्षे **सहिता** । इडभावपक्षे '**सहिवहोरोद्** अवर्णस्य' (6-3-112) इत्योकारः । '**हो** ढः' (8-2-31) इति ढत्वम् । तकारस्य धत्वम्, तस्य ष्टुत्वेन ढकारः । 'ढो ढे लोपः' (8-3-13) इति पूर्वढकारस्य लोपः । 'पर्जन्यवल्लक्षणं प्रवर्तते' (परि. 120) इति न्यायेन ओकारस्य 'ढ्रलोपे—' (6-3-111) इति दीर्घः । एवं तव्यदादिष्वपि ज्ञेयम् ।
2. 'परिनिविभ्यः सेवसितसयसिवुसह—' (8-3-70) इति षत्वम् ।
3. '**विसहने**' इति साक्षात्प्रभृतिषु (1-4-74) पाठात् विपूर्वकत्वेऽपि 'परिनि**विभ्यः**—' (8-3-70) इति षत्वं न । विपूर्वकात् **सहतेः** ल्युटि साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसंज्ञायाम्, 'समासेऽनञ्पूर्वे—' (7-1 37) इति क्त्वाप्रत्ययस्य ल्यबादेशे, गणे निपातनादेव एदन्तत्वम् । **विसहनेकृत्य**=क्षान्त्वा इत्यर्थः ।
4. 'दाश्वान **साह्वान्** मीढ्वांश्च' (6-1-12) इत्यत्र निपातनात् छन्दसि, लोके च **सहतेः** क्वसौ परस्मैपदम्, उपधादीर्घत्वम्, अद्विर्वचनत्वम्, अनिट्त्वं च । '**साह्वान्**=वलाहकः' इति **काशिका** (6-1-12) ।
5. '**शकिसहोश्च**' (3-1-99) इति यत् । ण्यतोऽपवादः ।
6. 'छन्दसि **सहः**' (3-2-63) इति ण्विप्रत्ययः । णित्त्वादुपधावृद्धिः । प्रत्ययः सर्वलोपी । 'अन्येषामपि दृश्यते' (6-3-137) इति पूर्वपदस्य दीर्घः । '**सहेः** साढः सः' (8-3-56) इति मूर्धन्यादेशः । द्वितीयादिषु तु '**सहेः** पृतनर्ताभ्यां च' (8-3-109) इति षत्वम् । एवं **जलाषाट्** इत्यादिषु चेति बोध्यम् ।
7. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।
8. सोढुं शक्नोतीत्यर्थे 'ताच्छील्यवयोवचनशक्तिषु—' (3-2-129) इति चानश् ।
9. तच्छीलादिषु कर्तृषु 'अलंकृञ...**सहचर** इष्णुच्' (3-2-136) इतीष्णुच्प्रत्ययः ।
10. ण्यन्तात् कर्तरि, 'अनुपसर्गात्...**साहि**भ्यश्च' (3-1-138) इति शप्रत्ययः । प्रत्ययस्य शित्त्वात् 'कर्तरि शप्' (3-1-68) इति शप् । साहयतीति **साहयः** ।
11. सर्वं सहते इति **सर्वंसहः** । 'संज्ञायां भृतॄवृजिधारि**सहि**—' (3-2-46) इति खच्प्रत्ययः । 'अरुर्द्विषत्—' (6-3-67) इति पूर्वपदस्य मुमागमः । **सर्वंसहः**=अतीव सूक्ष्मबुद्धिः । एवं **शत्रुंसह** इत्याद्यपि ।
12. 'पूः**सर्वयो**र्दारि**सहोः**' (3-2-41) इति खच् । पूर्ववत् मुम् । **सर्वंसहा**=वसुमती । संज्ञाऽत्र ।
13. 'शकधृषज्ञाग्लाघटरभलभक्रम**सह**—' (3-4-65) इति **सह**धातौ उपपदे धातोस्तुमुन् ।



[1]सासहिः, [2]साहः-सहः, [3]उत्साही, [4]सहित्रम्, [5]सिसाहयिषुः, [6]षट्, [7]सहसानः, इतीमानि विशेषरूपाणि ।

(1828) "**षह चक्यर्थे**" (IV-दिवादिः-1128. अक. सेट्. पर.)

**चक्यर्थः**=तृप्तिः । **प्राचां** मतेऽस्याप्रामाणिकः पाठ इति **माधवः** । **देव**श्लोकः पूर्वधातौ द्रष्टव्यः । रूपाणि समस्तान्यपि पूर्वधातुवत् ज्ञेयानि । अयं सेट्, शतरि—सह्यन् इति भवतीति विशेषः ।

(1829) "**षह मर्षणे**" (X-चुरादिः-1810. सक. सेट्. उभ.)

**आधृषीयः ।**

अस्मादेव धातोः **साह्वान्** इति (णिजभावपक्षे) शुद्धात् निपात्यते इति **कैयटः** (6-2-12) । रूपाणि आधृषीय**चर्पयति**वत् (554) बोध्यानि ।

(1830) "**षान्त्व सामप्रयोगे**" (X-चुरादिः-1569. सक. सेट्. उभ.)

'सान्त्व–' इति **क्षीरस्वामि**प्रभृतयः । **सामप्रयोगः**=प्रियवाक्येन उपच्छन्दनम् । चौरादिक**तन्त्रयति**वत् (698) सर्वाणि रूपाणि बोध्यानि ।

(1831) "**षिच क्षरणे**" (VI-तुदादिः-1434. सक. अनि. पर.)

**मुचादिः ।**

सेचकः-चिका, सेचकः-चिका, [8]सिसिक्षकः-क्षिका, [9]सेसिचकः-चिका ;

---

1. '**सहि**वहिचलिपतिवदिभ्यो यङन्तेभ्यः—' (वा. 3-2-171) इति किः किन वा प्रत्ययः । प्रत्ययस्य लिड्वद्भावात् द्विर्वचनादिकम् इति **केचित्** । वस्तुतो यङन्तादेव विधानात् 'सन्यङोः' (6-1-9) इति द्विर्वचनमिति न्याय्यम् ।
2. ज्वलादित्वात् (3-1-140) कर्तरि णप्रत्ययः । तस्य वैकल्पिकत्वात् पक्षे पचाद्यच् ।
3. उत्पूर्वकादस्माद् ग्रह्यादि (3-1-134) पाठात् कर्तरि णिनिः ।
4. 'अर्तिलूधूसूखन**सह**—' (3-2-184) इति करणे इत्रप्रत्ययः ।
5. ण्यन्तात् सनि उप्रत्यये रूपमेवम् । उत्तरखण्डे 'सः स्विदिस्वदि**सहीनां** च' (8-3-62) इति सत्वम् ; 'स्तौति—' (8-3-61) इति नियमस्य बाधकोऽयम् ।
6. '**सहेः** षष् लुक् च' (द. उ. 9-7) इति धातोः षषादेशः, कनिन्प्रत्ययस्य लुक् च । **षट्**=संख्याविशेषः ।
7. औणादिके (द. उ. 5-30) असानच्प्रत्यये रूपम् । **सहसानः**=क्षमावान् ।
8. सन्नन्ते 'हलन्ताच्च' (1-2-10) इति झलादेः सनः कित्त्वम् ; तेन गुणो न ।
9. '**सिचो** यङि' (8-3-110) इति षत्वनिषेधः । 'आदेशप्रत्यययोः' (8-3-59) इति प्राप्तस्य षत्वस्य निषेधः ।

सेक्ता-सेक्त्री, सेचयिता-त्री, सिसिक्षिता-त्री, सेसिचिता-त्री ;
इत्यादीनि रूपाणि तौदादिक**मुञ्चति**वत् (1275) बोध्यानि । [1]अभिषिञ्चन्-परिषिञ्चन्-न्ती-ती, [2]निषेकः, अभिषेकः, [3]सेक्त्रम्, [4]सिक्थम् इति विशेषरूपाणि ।

(1832) " **षिञ् बन्धने** " (V-स्वादि:-1248. सक. अनि. उभ.)

' **सिनोति सिनुते बन्धे** सिनीते च सिनाति च । ' (श्लो. 15) इति **देवः** ।
सर्वाण्यपि रूपाणि सौवादिक**चिनोति**वत् (519) बोध्यानि ।
[5]सिनो ग्रासः स्वयमेव, सितः, केशेषु केशैर्वा [6]प्रसितः, [7]सयः-विषयः, [8]परिषिण्वन् - निषिण्वन् - विषिण्वन्-ती, [9]सेरुः, [10]पुरुषः-पूरुषः, [11]सेत्रम्, [12]सेतुः,

---

1. ' उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेध**सिच**—' (8-3-65) इति षत्वमत्र । ' शे **मुचादीनाम्** ' (7-1-59) इति नुम् । अनुस्वारपरसवर्णौ ।
2. घञि ' चजोः—' (7-3-52) इति कुत्वम् ; षत्वम् । **निषेकः** संस्कारविशेषः ।
3. ' दाम्नीशसयुयुजस्तुतुदसि**सिच**— ' (3-2-182) इति करणे ष्ट्रन्प्रत्ययः । सिञ्चन्ति अनेनेति **सेक्त्रम्** सेचनसाधनम् ।
4. औणादिके क्थन्प्रत्यये, प्रत्ययस्य कित्त्वात् गुणनिषेधे कुत्वे च रूपमेवम् ।
5. ' **सिनोते**र्ग्रासकर्मकर्तृकस्य—' (वा. 8-2-44) इति निष्ठानत्वम् । इदमत्र **माधवो**क्तं विवरणम्— ' यदा बध्यमानः पिण्डीक्रियमाणो ग्रासो दध्यादिवशेन तत्रानुकूल्यं प्रतिपद्यते, तदा कर्मणः कर्तृत्वविवक्षायां अयं प्रयोगः ' इति ।

   " ग्रासस्य कर्मकर्तृत्वे निष्ठानत्वं भवेत् **षिञः** ।
   स्वयमेव **सिनो** ग्रासः सुखबद्धस्तथोच्यते ॥
   दध्यादियोगात् ग्रासोऽहि सुसंश्लिष्टो भवेन्मिथः ।
   नानार्थत्वात् तु धातूनां सुखभुक्त **इतीतरे** ॥" इति **प्रक्रियासर्वस्वम्** ।

6. ' **प्रसितो**त्सुकाभ्यां तृतीया च ' (2-3-44) इति तृतीयासप्तम्यौ ।
7. पचाद्यचि **सयः** । विशेषेण बध्नाति इति **विषयः**=शब्दादिः । ' परिनिविभ्यः —' (8-3-70) इति षत्वम् ।
8. ' परिनिविभ्यः सेवसित**सय**—' (8-3-70) इति षत्वम् ।
9. ' दाधेट्**सि**—' (3-2-159) इति तच्छीलादिषु कर्तृषु रुप्रत्ययः । धातोर्गुणः ।
10. पुरु सिनोतीति **पुरुषः** ; ' अन्येष्वपि—' (3-2-101) इति डप्रत्ययः । पुरुष एव **पूरुषः** । ' अन्येषामपि—' (6-3-137) इति दीर्घः ।
11. ' दाम्नीशसयुयुजस्तु—' (3-2-102) इति करणे ष्ट्रन्प्रत्ययः । **सेत्रम्**=जालम् ।
12. औणादिके (द. उ. 1-122) तुन्प्रत्यये रूपम् । **सेतुः** कूलान्तरप्रापकः पन्थाः । ' तितुत्र—' (7-2-9) इतीण्निषेधः ।



[1]सीरम्, इति विशेषरूपाणि ।

(1833) " **षिञ् बन्धने** " (IX-क्र्यादि:-1477. सक. अनि. उभ.)

' सिनोति सिनुते बन्धे, **सिनीते च सिनाति च** । ' (श्लो. 15) इति **देवः** ।
शतृशानचोः—सिनन्-ती, सिनानः इति रूपे । इतराणि समस्तान्यपि रूपाणि पूर्वधातुवत् (1832) ऊह्यानि ।

(1834) " **षिट अनादरे** " (I-भ्वादि:-304. सक. सेट्. पर.)

' **किट** त्रासे ' इति भौवादिकधातुवत् (190) रूपाणि ज्ञेयानि ।

(1835) " **षिध गत्याम्** " ( I-भ्वादि:-47. सक. सेट्. पर.)

**काश्यपक्षीरस्वामिनौ** धातुममुम् उदितं पठन्ति, ' ततः परं सिध्यतिरेव **नेतरे** ।' (व्याघ्रभूतिकारिका 7-2-10) इति **वृत्ति**विरोधात् तावुपेक्ष्यौ— इति **माधवः** । विस्तरश्च तत्रैव **धातुवृत्तौ** द्रष्टव्यः । **देवो**ऽपि

' सिधेः सिध्यति संराद्धौ **सेधतीत्युदितो गतौ** ।
शास्त्रमाङ्गल्ययो रूपमूदितस्तदिटा भिदा ॥' (श्लो. 116)

इति उदित्पक्षमेवाङ्गीकृतवान् ।
[2]सिधित्वा-सेधित्वा, सिसेधिषकः-सिसिधिषकः-षिका, [3]अभिषेधन्-परिषेधन्-न्ती, [4]अभिसेधयन् गाः, [5]सुषेधः-दुःषेधः-निःषेधः, [6]सिध्रः, [7]सिध्रकः-सिध्रकावणम् ;

---

1. ' शुषिचिमिभ्यो दीर्घश्च ' (द.उ. 8-43) इति क्रन्प्रत्ययः, प्रकृतेः दीर्घश्च । **सीरम्**=हलः ।
2. ' रलो व्युपधात्—' (1-2-26) इति क्त्वासनोः कित्त्वविकल्पः, तेन अत्र, सन्नन्ते च रूपद्वयम् ।
3. ' उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनय**सेध**— ' (8-3-65) इति [षत्वम् ।
4. ' **सेधते**र्गतौ ' (8-3-113) इति अत्र षत्वनिषेधः ।
5. अत्र सुषामादित्वात् (8-3-98) षत्वम् । **सुषेध** इत्यत्र ' उपसर्गात्—' (8-3-65) इति, **दुःषेधः**, **निःषेधः** इत्यत्र ' **नुम्विसर्जनीय**शर्व्यवायेऽपि ' (8-3-58) इति च यद्यपि षत्वं सिद्धम् ; तथापि कर्मप्रवचनीयानां सुदुर्निसां षत्वनिषेधकत्वात् तत्रापि षत्वप्राप्त्यर्थम्, गत्यर्थे ' **सेधते**र्गतौ ' (8-3-113) इति निषेधबाधनार्थं च सुषामादिषु पाठ इत्यवधेयम् ।
6. औणादिके (द. उ. 8-31) रक्प्रत्यये रूपम् । **सिध्रः**=साधुः, आसनप्रकारश्च ।
7. सिध्र इव **सिध्रकः**; इवार्थे संज्ञायां वा कन्प्रत्ययः । **सिध्रकः**=वृक्षविशेषः । **सिध्रकावणम्** इत्यत्र ' वनगिर्योः—' (6-3-117) इत्यत्र कोटरादित्वात् दीर्घः । ' वनं पुरगामिश्रकासिध्रका—' (8-4-4) इति णत्वम् । **सिध्रक**वृक्षप्रचुरो वनविशेषः— **सिध्रकावणम्** ।

इतीमानि विशेषरूपाणि। इतराणि समस्तान्यपि रूपाणि भौवादिक**शर्धति**वत् (1748) बोध्यानि।

(1836) " **षिधु संराद्धौ** " (IV-दिवादि:-1192. सक. अनि. पर.)

'सिधे: सिध्यति संराद्धौ—' (श्लो. 116) इति **देवः**।

**संराद्धिः**=निष्पत्तिः। " **केचि**दूदितं पठन्ति ; तदसत्। अनुदात्तोपदेशवै-यर्थ्यात्" इति **माधवः**।

[1]सिद्ध्यः, [2]सिधित्वा-सेधित्वा-सिद्ध्वा, [3]सिद्धः, [4]साङ्काश्यसिद्धः, [5]अन्नं साधयन्, तपः सेधयन्, इति विशेषरूपाणि। इतराणि सर्वाण्यपि पूर्वधातुवत् ज्ञेयानि।

(1837) " **षिधू शास्त्रे माङ्गल्ये च** "

(I-भ्वादि:-48. अक. सेट्. पर.)

**देव**श्लोकः सेधतौ द्रष्टव्यः। ऊदित्त्वादिड्विकल्पः। **शास्त्रम्**=शासनम्, **माङ्गल्यम्**=मङ्गलार्थक्रिया। समस्तान्यपि रूपाणि भौवादिक**सेधति**वत् (1835) बोध्यानि।

(1838) " **षिभि हिंसार्थः** " (I-भ्वादि:-431. सक. सेट्. पर.)

**केषुचित्** कोशेषु धातुरयं न दृश्यते। रूपाणि भौवादिक**जिन्वति**वत्(604)बोध्यानि।

---

1. 'पुष्य**सिद्ध्यौ** नक्षत्रे' (3-1-116) इति निपातनात् नक्षत्रविशेषे वाच्ये सति धातोः क्यप्। ण्यतोऽपवादः। सिद्ध्यति अस्मिन्नुपक्रान्तं कार्यमिति **सिद्ध्यः**= पुष्यनक्षत्रः। अन्यत्र **सेध्यम्** इति ण्यदेव।
2. उदित्त्वादिड्विकल्पः, 'रलो व्युपधात्—' (1-2-26) इति कित्वविकल्पः। तेन रूपत्रयम्।
3. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायामिण्निषेधः। संज्ञायां क्तप्रत्ययोऽयम्। **सिद्धा** इति देवयोनिविशेषाः।
4. सांकाश्ये सिद्धः **सांकाश्यसिद्धः**। '**सिद्ध**शुष्कपक्वबन्धैश्च' (2-1-41) इति सप्तमीसमासः। '**नेन्सिद्ध**बध्नातिषु च' (6-3-19) इति सप्तम्या अलुको निषेधः; अन्यथा, 'साङ्काश्ये—' इति सप्तम्याः 'तत्पुरुषे कृति—' (6-3-14) इति अलुक् श्रूयेत। तत्र सूत्रे बहुलग्रहणादेव क्वचिदलुकोऽप्रवृत्तौ तु नात्र **सिद्ध**ग्रहणं करणमित्यास्तां तावत्।
5. '**सिद्ध्यते**रपारलौकिकेऽर्थे' (6-1-149) इति णात्वम्। परलोकसाधनभूते तु 'तपः **सेधयन्**' इत्यत्र न आत्वम्।



(1839) " **षिभु हिंसार्थः** " (I-भ्वादि:-432. (पा.) सक. सेट्. पर.)

उदित्त्वात् क्त्वायामिड्विकल्पः। 'षिन्भु' इति **केचित्**। रूपाणि भौवादिक-**जेमति**वत् (602) बोध्यानि।

(1840) " **षिवि सेचने** " (I-भ्वादि:. (पा.) सक. सेट्. पर.)

भौवादिक**जिन्वति**वत् (604) रूपाणि सर्वाण्यपि ऊह्यानि।

(1841) " **षिवु तन्तुसन्ताने** " (IV-दिवादि:-1108. सक. सेट्. पर.)

[1]परिषीव्यन्-निषीव्यन्-विषीव्यन्, [2]परिषिषेविषकः-परिषिस्यूषकः-षिका, [3]स्यूत्वा-सेवित्वा, [4]स्यूतः-अनुस्यूतः, अनुस्यूतिः, [5]सेवनम्-सीवनम्, [6]प्रसेवकः, '[7]स्योनं ते सदनं कृणोमि' [8]सूत्रम्, [9]सूची, [10]स्यूमः इति विशेषरूपाणि। सामान्यरूपाणि दैवादिक**दीव्यति**वत् (838) बोध्यानि।

---

1. शतरि 'हलि च' (8-2-77) इति उपधादीर्घः। '**परिनिविभ्यः सेव—**' (8-3-70) इति षत्वम्।
2. इवन्तत्वेन '**सनीवन्तर्ध—**' (7-2-49) इति इड्विकल्पः। अभ्यासे षत्वम्; इडभावपक्षे 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वात् 'च्छ्वोः शूठ्—' (6-4-19) इति वकारस्य ऊठ्। यण्।
3. उदित्त्वात् क्त्वायामिड्विकल्पः। इडभावपक्षे ऊठ्, यणादेशः। इट्पक्षे **सेवित्वा** इति रूपम्। 'न क्त्वा सेट्' (1-2-18) इति कित्वनिषेधात् गुणः।
4. क्त्वायाम्, सनि च, इड्विकल्पात् निष्ठायामिण्निषेधः। ऊठ्यणादेशौ।
5. ल्युटि **सेवनम्** इति रूपम्। '**चान्द्राः भोजीयाश्च** ल्युटि बाहुलकादुपधादीर्घ-मिच्छन्ति छिवुसिवुधात्वोः' इति **माधवः**। तेन **सीवनम्** इत्यपि यथालक्ष्यं साधु।
6. प्रसीव्यन्ति तमिति **प्रसेवः**। 'अकर्तरि च कारके—' (3-3-19) इति संज्ञायां घञ्। तदन्तात् संज्ञायां कन्प्रत्ययः। '**प्रसेवकः**= वीणाप्रान्ते वक्रकाष्ठम्' इति **माधवः**।
7. औणादिके (द. उ. 5-41) नप्रत्यये ऊठि यणादेशे च रूपम्। छान्दसोऽयं प्रयोगः। सीव्यन्त्यनेनेति **स्योनः**= रश्मिः।
8. '**सिविमुच्योः—**' (द. उ. 8-83) इति ष्ट्रन्प्रत्ययः, टेरूकारश्च। **सूत्रम्**=तन्तुः।
9. औणादिकोऽयं कर्तरि निष्पन्नः। **सूची**=शलाका।
10. औणादिके (द. उ. 7-40) मन्प्रत्यये रूपमेवम्। **स्यूमः**=सूत्रतन्तुः।

(1842) "**षु प्रसवैश्वर्ययोः**" (I-भ्वादिः-941. सक. अनि. पर.)

सर्वाण्यपि रूपाणि भौवादिक**क्षवति**वत् (196) बोध्यानि। **अष्टाध्याय्यां** ग्रहणानि सर्वाण्यपि सौवादिकस्यैवेति, तत्र (1844) विशेषरूपाणि द्रष्टव्यानि।

(1843) "**षु प्रसवैश्वर्ययोः**" (II-अदादिः-1041. सक. अनि. पर.)

'षुञः सुनोति सुनुते, प्रसवैश्वर्ययोरसौत्।

गतौ तयोश्च सवति, द्विरुक्त्या तस्य सो न षः ॥' (श्लो. 21) इति **देवः**।

**प्रसवो**ऽभ्यनुज्ञानम्। 'ओमिति ब्रह्मा प्रसौति' (तै. उप. 2-16)। अभ्यनुज्ञां ब्रह्मा ददातीत्यर्थः। [1]सव्यम्-अपसव्यम्-[2]सुत्वा, सुतः, इति विशेषरूपाणि। इतराणि रूपाणि भौवादिक**क्षवति**वत् (196) बोध्यानि।

(1844) "**षुञ् अभिषवे**" (V-स्वादिः-1247. सक. अनि. उभ.)

**देव**श्लोकः, सवतौ (1843) द्रष्टव्यः। **अभिषवः**=स्नपनपीडनस्नानसुरासन्धानादिः। [3]सुन्वन्-ती, [4]सुत्वा-सुत्वरी, [5]अभिषुत्य, [6]सवनम्, [7]राजसूयः, [8]सुत्या,

1. 'अचो यत्' (3-1-97) इति यत्प्रत्ययः, गुणे 'वान्तो यि—' (6-1-79) इति अवादेशः।
2. धातुरनिट्। क्त्वायां रूपमेवम्। संज्ञायां क्तप्रत्यये **सुतः** तनयः।
3. '**सुञो** यज्ञसंयोगे' (3-2-132) इति शता। लडादेशात् शतुरयं भिन्नः, यजमान उच्यते **सुन्वन्** इति। धातोरुभयपदित्वेन शतरि शानचि च '**अभिषुण्वन्-अभिषुण्वानः** सोमम्' इत्यपि क्रमेण भवति।
4. भूते '**सुयजोः**—' (3-2-103) इति ङ्वनिप्। प्रत्ययस्य ङित्त्वात् गुणनिषेधः। पित्त्वात् तुक्। **सुत्वा**-इष्टवान् यः, स एवमुच्यते। स्त्रियाम् 'वनो र च' (4-1-7) इति ङीप्, रेफश्च।
5. ल्यपि तुक्। 'उपसर्गात् **सुनोति**—' (8-3-65) इति षत्वम्।
6. **सवनम्**=यज्ञः, प्रातर्मध्यसायङ्कालरूपकालत्रयं च। ल्युटि रूपमेवम्।
7. राज्ञा सूयतेऽसौ इति, राजा वाऽसौ सूयते इत्यर्थे '**राजसूय**—' (3-1-114) इत्यनेन राजशब्दे उपपदे **सुनोतेः** क्यप्, दीर्घश्च। **राजसूयः**=राज्ञैव साधनीयः क्रतुविशेषः। अर्धर्चादित्वात् **राजसूयम्-राजसूयः** इत्युभयमपि साध्वेव।
8. 'संज्ञायां समजनिषदनिपतमनविदषुञ्—' (3-3-99) इति स्त्रियां क्यपि, तुकि च रूपमेवम्। **सुत्या** क्रतुविशेषः।



[1]आसाव्यम्-सव्यम्, [2]सोमसुत्, [3]अभिसोष्यन्-न्ती-ती, अभिसुसूषुः, अभिषवः, [4]आसुतीवलः, [5]सुरा, [6]सुरकः, [7]सोमः इति विशेषरूपाणि। सामान्यरूपाणि तु भौवादिक**द्रवति**वत् (847) बोध्यानि।

(1845) "**षुट्ट अनादरे**" (X-चुरादिः-1562. सक. सेट्. उभ.)

'**अनादरः**=अल्पीभावः' इति **केचित्**। '—तुच्छता' इति **परे**। चौरादिक**कुट्टयति**वत् (207) सर्वाणि रूपाण्यूह्यानि।

(1846) "**षुर ऐश्वर्यदीप्त्योः**" (VI-तुदादिः-1340. अक. सेट्. पर.)

सुरन्तीति **सुराः** देवाः। इगुपधलक्षणः कप्रत्ययः। इतराणि समस्तान्यपि रूपाणि तौदादिक**कुरति**वत् (229) बोध्यानि।

(1847) "**षुह चक्यर्थे**" (IV-दिवादिः-1129. अक. सेट्. पर.)

'**चक्यर्थः**=तृप्तिः' इति **स्वामिकाश्यपधनपालशाकटायनाः**। फलानां [8]सुहितः। सर्वाण्यपि रूपाणि दैवादिक**कुथ्यति**वत् (218) बोध्यानि।

(1848) "**षू प्रेरणे**" (VI-तुदादिः-1408. सक. सेट्. पर.)

'**प्रेरणे सुवति** प्राणिप्रसवे सूयते भवेत्।

प्राणिगर्भविमोकेऽर्थे सूते शे श्यनि शब्लुकि ॥' (श्लो. 25) इति **देवः**।

1. '**आसुयु**—' (3-1-126) इति ण्यत्प्रत्ययः। अजन्तत्वलक्षणयतोऽपवादः। **आसाव्यम्**=यज्ञियं सवनकर्म। अन्यत्र **सव्य**मित्येव।
2. भूते 'सोमे **सुञः**' (3-2-90) इति क्विप्। सोमं=सोमयागं सुतवान् इष्टवान् **सोमसुत्**।
3. अत्र 'उपसर्गात् **सुनोति**—' (8-3-65) इति प्राप्तस्य षत्वस्य '**सुनोतेः स्यसनोः**' (8-3-117) इति निषेधः। एवं सन्नन्तेषु सर्वत्र षत्वं न।
4. आङ्पूर्वकादस्मात् क्तिन्नन्तात् 'रजः कृष्यासुति—' (5-2-112) इति मत्वर्थीये वलप्रत्यये 'वले' (6-3-118) इति दीर्घः।
5. औणादिके (द. उ. 8-42) क्रन्प्रत्यये रूपम्। **सुरा**=मद्यविशेषः।
6. **सुरकः**=अहिविशेषः, येन दष्टा माद्यन्ति। **सुरा**शब्दात् सुरा इव **सुरकः**; इवार्थे कनि, 'केऽणः' (7-4-13) इति ह्रस्वः।
7. औणादिके (द. उ. 6-79) मनिन्प्रत्यये रूपम्। **सोमः**=लताविशेषः।
8. 'पूरणगुणसुहितार्थ—' (2-2-11) इति षष्ठीसमासनिषेधः। **सुहितार्थाः**=तृप्त्यर्थाः इति **वैयाकरणाः**।

[1]सूर्यः, [2]सविता, [3]सवित्रम्, [4]सूतः, [5]प्रसवी, [6]सूरः, इति विशेषरूपाणि। सामान्यरूपाणि **कौति**वत् (196) बोध्यानि।

### (1849) "**षूङ् प्राणिगर्भविमोचने**"

(II-अदादिः-1031. सक. सेट्. आत्म.)

'प्राणिग्रहणमतन्त्रम्; अप्राणिप्रसवेऽपि वर्तते—**प्रसूनं** धान्यम्' इति **मैत्रेयः**। 'स्वरतिसूति—' (7-2-44) इत्यादिना इड्विकल्पो वलाद्यार्धधातुकेषु। [7]सुषूतिः,-विषूतिः-निःषूतिः-दुःषूतिः, [8]प्रसूनम्-प्रसूतम्, सुषवी, [9]प्रसवी, [10]प्रसवः, [11]सन्तानसूः, [12]सूनुः, सूतकम्, सूतका-सूतिका, इति विशेषरूपाणि। सामान्यरूपाणि धूञ्धातुवत् (906) बोध्यानि।

### (1850) "**षूङ् प्राणिप्रसवे**" (IV-दिवादिः-1133. सक. वेट्. आत्म.)

सर्वाण्यपि रूपाणि दैवादिककूङ्धातुवत् (238) बोध्यानि।

---

1. सुवति प्राणिनस्तत्तत्कर्मसु इति **सूर्यः**। 'राजसूयसूर्य—' (3-1-114) इत्यत्र निपातनात् क्यप्, रुडागमश्च।
2. 'तृन्' (3-2-135) इति ताच्छीलिकस्तृन्प्रत्ययः। **सविता**=सूर्यः। प्रेरणशील इत्यर्थः।
3. 'अर्तिलूधूसू—' (3-2-184) इति करणे इत्रप्रत्ययः।
4. संज्ञायां क्तप्रत्यये रूपम्। **सूतः**=रथादीनां प्रेरकः सारथिः।
5. 'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च' (3-2-157) इति इनिप्रत्ययः। **प्रसवी**=आज्ञप्ता।
6. औणादिके क्रन्प्रत्यये रूपमेवम्। **सूरः**=सूर्यः। '**सूरसूर्यार्यमादित्य—**' **इत्यमरः**।
7. पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किति' (7-2-11) इतीण्निषेधः। '**सुविनिर्दुर्भ्यः** सुपिसूतिसमाः' (8-3-88) इति षत्वम्।
8. 'स्वादय ओदितः' (ग. सू. 8-2-45) इत्यातिदेशिकमोदित्त्वम्। तेन 'ओदितश्च' (8-2-45) इति निष्ठानत्वम्। एतच्च पाक्षिकमिति **केचित्**। तेषां मते **प्रसूत** इत्यपि।
9. 'जिदृक्षि...प्रसूभ्यश्च' (3-2-157) इति इनिप्रत्ययः। **प्रसवी**=प्रसवशीलः।
10. 'ऋदोरप्' (3-3-57) इत्यप्प्रत्ययः। **प्रसवः** सन्तानः, पुष्पं च।
11. सन्तानं सूते इति **सन्तानसूः**। 'सत्सू—' (3-2-61) इत्यादिना क्विप्।
12. औणादिके (द. उ. 1-146) नुप्रत्यये रूपम्। प्रत्ययस्य कित्त्वात् न गुणः।



### (1851) "**षूद क्षरणे**" (I-भ्वादिः-25. सक. सेट्. आत्म.)

**क्षरणम्**=निरसनम्। '—निस्सरणम्' इति **केचित्**। [1]मधुसूदनः इत्यादिषु हिंसार्थकत्वमपि दृश्यते। [2]सूदिता, [3]सूदः,। सामान्यरूपाणि भौवादिक**कन्दति**वत् (163) बोध्यानि। चुरादावपि **केचित्** 'षूद' इति पठन्ति; रूपेषु न कोऽपि विशेषः।

### (1852) "**षृन्भु हिंसार्थः**" (I-भ्वादिः-431. सक. सेट्. पर.)

'—भर्त्सनहिंसयोः' इति **काशकृत्स्नः**। उपदेशे नोपधोऽयं धातुः। '**षिम्भु—**' इति **मैत्रेयः**। भौवादिक**क्षोभति**वत् (316) रूपाण्यूह्यानि।

### (1853) "**षृभु हिंसायाम्**" (I-भ्वादिः-430. सक. सेट्. पर.)

'षिभु—' इति, 'सिभु—' इति च पाठभेदौ। यङन्तेषु अभ्यासे रीङ्, इति विशेषः; 'सरीसृभकः—भिका' इत्यादीनि रूपाणि। सृभ्यम्। इतराणि रूपाणि भौवादिक**तृप**धातुवत् (772) बोध्यानि।

### (1854) "**षेलृ गतौ**" (I-भ्वादिः-543. सक. सेट्. पर.)

'षेकृ—' इति **केचित्**। [4]सेलुः। भौवादिक**केलति**वत् (262) रूपाणि ऊह्यानि।

### (1855) "**षेवृ सेवने**" (I-भ्वादिः-501. सक. सेट्. आत्म.)

'—सेचने' इति **केचित्**। '[5]सेवृ—' इति **परे**। [6]सेवा, [7]सयूः, [8]अनिल-

---

1. मधुं=तन्नामकमसुरं सूदयति=हिनस्ति इति **मधुसूदनः**। नन्द्यादिषु (3-1-134) पाठात् ण्यन्तात् कर्तरि ल्युः। 'सात् पदाद्योः' (8-3-111) इति मूर्धन्यनिषेधः।
2. '**सूद**दीप—' (3-2-153) इति ताच्छीलिकस्य अनुदात्तेत्त्वलक्षणयुचो निषेधात् 'तृन्' (3-2-135) इति तृन्।
3. पचाद्यच्। **सूदः**=सूपकारः, पङ्कश्च।
4. औणादिके उप्रत्यये रूपमेवम्। **सेलुः**=श्लेष्मशत्रुरौषधविशेषः।
5. **मैत्रेयादयः** दन्त्यादिं पठन्ति, तत् षोपदेश-सोपदेशव्यवस्थापक**भाष्य**विरोधादुपेक्ष्यम्। तथा च **भाष्यम्**—(6-1-64) "अज्दन्त्यपराः सादयः षोपदेशाः, स्मिङ्स्वदिस्विदिस्वञ्जिस्वपयश्च; सृपिसृजिस्तृस्त्यासेकृसवर्जम्" इति।
6. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः।
7. क्विपि ऊठि अयादेशे च रूपमेवम्।
8. 'कर्मणि च; येन संस्पर्शात् कर्तुः शरीरसुखम्' (3-3-116) इति कर्मण्युपपदे ल्युट्। 'उपपदमतिङ्' (2-2-19) इति समासः।
   'येन संस्पर्शने कर्तुः शरीरसुखसम्भवः।
   तत्कर्मोपपदे ल्युट् स्यात् जनैर**निलसेवनम्**॥' इति **प्रक्रियासर्वस्वम्**।

सेवनम्, [1]सेविष्णुः, [2]परिषेवमाणः-निषेवमाणः-विषेवमाणः, [3]सेवका इति विशेषरूपाणि। सामान्यरूपाणि **गेपति**वत् (429) ऊह्यानि।

(1856) **" षै क्षये "** (I-भ्वादिः-915. अक. अनि. पर.)

'षै क्षये सायतीतीष्टं अन्तकर्मणि तु स्यति।' (श्लो. 7) इति **देवः**।
'**सै**' इति **केचित्**। स तु पाठो **भाष्यादि** (6-1-64) विरोधादुपेक्ष्यः। **अष्टाध्यायी**सूत्रेषु **षा**धातुग्रहणानि सर्वाण्यपि दैवादिकस्येति निष्कर्षः। सातम्। सर्वाण्यपि रूपाणि भौवादिक**कायति**वत् (263) बोध्यानि।

(1857) **" षो अन्तकर्मणि "** (IV-दिवादिः-1147. सक. अनि. पर.)

**दैवश्लोकः** पूर्वधातौ द्रष्टव्यः। सामान्यरूपाणि **छ्यति**वत् (577) ऊह्यानि।
[4]सायकः, [5]अवसितम्-अवसितः-अवसितवान्, सित्वा, [6]अवसायः, [7]साययिता, [8]सातिः, [9]अवसाय, [10]अभिसिषासुः,

---

1. 'भुवश्च' (3-2-138) इत्यत्र **चकारस्यानुक्तसमुच्चयार्थकत्वात्** तच्छीलादिषु कर्तृषु धातोरस्मादपि इष्णुच्प्रत्ययः।
2. '**परिनिविभ्यः सेव**—' (8-3-70) इति षत्वम्।
3. क्षिपकादित्वात् (ग. सू. 7-3-45) संज्ञायां इत्वनिषेधः। अन्यत्र **सेविका**।
4. 'कृत्यल्युटो बहुलम्' (3-3-113) इत्यत्र बहुलग्रहणात्, योगविभागाद्वा संज्ञायां ण्वुल्। '**आतो युक्**—' (7-3-33) इति युगागमः। स्यति=अन्तं करोति इति **सायकः**=शरः।
5. 'द्यति**स्यति**—' (7-4-40) इति निष्ठादिषु कित्प्रत्ययेषु इकारः। एवम् **सित्वा**, **अवसितिः** इत्यादिष्वपि बोध्यम्।
6. 'श्याऽऽद्व्यधास्रुसंस्रवतीण**वसा**वह—' (3-1-141) इति कर्तरि णप्रत्ययः। युगागमः। अवस्यतीति **अवसायः** निश्चयः। सूत्रे आदन्तत्वेनैव णप्रत्यये सिद्धे पुनः '**अवसा**' इति ग्रहणं आदन्तलक्षणं कर्तरि कप्रत्ययं बाधितुम्।
7. णिजन्तात् तृचि रूपमेवम्। 'शाच्छा**सा**—' (7-3-37) इति युक्। आदन्तलक्षण-पुकोऽपवादः।
8. 'ऊतियूतिजूति**साति**–' (3-3-97) इति क्तिन्नन्तो निपातः। निपातनादेव 'द्यति**स्यति**—' (7-4-40) इतीत्वं न।
9. 'न ल्यपि' (6-4-69) इति इकारनिषेधः।
10. 'स्थादिष्वभ्यासेन–' (8-3-64) इति नियमात् अभ्यासे न षत्वम्। उत्तरखण्डे तु 'इण्कोः' (8-3-57) इति षत्वम्।



[1]प्रणिष्यन्-न्ती-ती, [2]प्रतिसितम्, [3]सायः-सायम्, [4]साम, सात्म-सात्म्यम् इति विशेषरूपाणि।

(1858) **" ष्टक प्रतिघाते "** (I-भ्वादिः-782. सक. सेट्. पर.) **घटादिः**।

घटादित्वात् मित्त्वम्; तेन णिजन्ताद् ह्रस्वः। णमुलि दीर्घविकल्पः। सर्वाण्यपि रूपाणि **चकति** (482) वत् बोध्यानि।

(1859) **" ष्टगे संवरणे "** (I-भ्वादिः-790. सक. सेट्. पर.) **घटादिः**।

'ष्ठगे' इति **क्षीरस्वामी**। '**संवरणम्**=तिरोधानम्' इति **धातुकाव्यव्याख्या** (2-8)। '**कके** नोच्यते' (143) इति धातुवद्रूपाणि ऊह्यानि।

(1860) **" ष्टन शब्दे "** (I-भ्वादिः-461. अक. सेट्. पर.)

'**शब्दे च** देवशब्दे च **स्तनति** स्तनयेत् क्रमात्।' (श्लो. 127) इति **देवः**।
'स्तन—' इति **न्यासकारः** (8-3-86)। तत् **भाष्यविरोधादुपेक्ष्यम्**।
[5]**अभिनिष्टानः अभिनिस्तानः**=विसर्जनीयः। [6]स्तनः, स्तान्यम्, इति विशेषरूपाणि। सामान्यरूपाणि **कगति**वत् (143) बोध्यानि।

---

1. शतरि 'दिवादिभ्यः—' (3-1-69) इति श्यन्। 'ओतः श्यनि' (7-3-71) इत्योकारलोपः। 'उपसर्गात् सुनोतिसुवति**स्यति**—' (8-3-65) इति षत्वम्। 'नेर्गदनदपतपदघुमा**स्यति**–' (8-4-17) इति णत्वम्।
2. '**परिनिविभ्यः** सेव**सित**—' (8-3-70) इत्यत्र निष्ठान्तस्यास्यापि ग्रहणमिति **केचित्**। तेषां मते **परिषितम्, निषितम्, विषितम्** इति षत्वम्। **प्रतिसितम्** इत्यत्र तु न षत्वमिति बोध्यम्।
3. घञि युगागमः। अवसीयते इति **सायः**=कालविशेषः। अस्यैव '**सायम्**' इति स्वरादिषु (1-1-37) निपातनात् मकारान्तत्वम्, अव्ययत्वं च इति **केचित्**। **अन्ये तु** 'अव्युत्पन्नं प्रातिपदिकम् '**सायम्**' इति' इति वदन्ति।
4. '**साति**भ्यां—' (द. उ. 6-81) इति मनिण्प्रत्यये **साम**। तेनैव सूत्रेण त्मन्प्रत्यये **सात्म**=सान्त्वनम्।
5. 'अकर्तरि च कारके—' (3-3-19) इति संज्ञायां घञ्। '**अभिनिसः स्तनः** शब्दसंज्ञायाम्' (8-3-86) इति षत्वविकल्पः। शाब्दिकसंज्ञायां **अभिनिष्टानः** इति विसर्जनीयस्य नाम। तथा च **आपस्तम्बः**—' 'द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरं दीर्घा**भिनिष्टाना**न्तं घोषवदाद्यन्तरान्तःस्थम्' इति। विसर्ग-स्थानिकजिह्वामूलीयोपध्मानीययोः **अभिनिष्टानः** इति संकेत इति **केचित्**। तत्तु **न्यासपदमञ्जर्यादि**विरोधादुपेक्ष्यम्।
6. पचाद्यचि **स्तनः**। **स्तान्यम्** इति तु ण्यति बोद्धव्यम्।

(1861) "**ष्टभि प्रतिबन्धे**" (I-भ्वादिः-386. सक. सेट्. आत्म.)

'स्तभ्नाति स्तभ्नुयात् स्तुभ्नात्यपि स्तुभ्नोति सौत्रयोः ।
**स्तम्भते प्रतिबन्धार्थे** स्तम्भेऽर्थे स्तोभते शपि ॥' (श्लो. 142) इति **देवः** ।

भौवादिक**कन्दति**वत् (163) सर्वाणि रूपाणि ज्ञेयानि ।

[1]उत्तम्भनम् , [2]ष्टम्भमाणः स्तम्भमानः ।

(1862) "**ष्टम अवैक्लव्ये**" (I-भ्वादिः-830. अक. सेट्. पर.)

**घटादिः ।**

**सिद्धान्तकौमुद्यादिषु** केषुचिदेवायं पठितः । रूपाणि समस्तान्यपि **कखति**वत् (142) बोध्यानि । अमन्तत्वेन मित्त्वात् णिजन्तात् ह्रस्वः, णमुलि दीर्घविकल्पश्च ।

(1863) "**ष्टिघ आस्कन्दने**" (V-स्वादिः-1265. सक. सेट्. आत्म.)

सौवादिक**तिक्नोति**वत् (716) सर्वाणि रूपाणि बोध्यानि ।

(1864) "**ष्टिपृ क्षरणे**" (I-भ्वादिः-364. सक. सेट्. आत्म.)

'ष्टिप—' इति **केचित्** । रूपाणि समस्तान्यपि दैवादिक**क्षिप्यति**वत् (306) बोध्यानि ।

(1865) "**ष्टिम आर्द्रीभावे**" (IV-दिवादिः-1124. सक. सेट्. पर.)

'स्तिम—' इति **माधवादयः** । 'निश्चलीभावे' इति च **केचित्** ।
'क्लेदे' इति **परे** । स्तिमितम् । भौवादिक**केटति**वत् (190) रूपाणि ज्ञेयानि ।

(1866) "**ष्टीम आर्द्रीभावे**" (IV-दिवादिः-1125. सक. सेट्. पर.)

'तीम—' इति **केचित्** पठन्ति इति **धातुवृत्तिः** । ईदृशेषु धातुषु न कोऽपि विशेषः । सर्वाणि रूपाणि **क्रीडति**वत् (275) बोध्यानि ।

---

1. 'उदः स्थास्त**म्भोः** पूर्वस्य' (8-4-61) इति सकारस्य पूर्वसवर्णस्थकारः । उपसर्गदकारस्य तस्य च चर्त्वेन तकारः । ततश्च उपसर्गतकार-पूर्वसवर्णप्राप्ततकार-तकाररूपाः त्रयस्तकाराः । प्रयोगे परमुच्चारणक्लेशात् द्वितकारश्रवणम् , 'झरो झरि—' (8-4-65) इति कस्यचित् तकारस्य लोपः । 'उदः स्था**स्तम्भोः**—' (8-4-61) इत्यत्र 'स्तम्भु—' (3-1-82) इति सौत्र**स्तम्भु**धातोः, अस्य च ग्रहणम् अविशेषेण ।
2. "'औपदेशिकोऽयं टकारः, न तु ष्टुत्वनिबन्धनः **इत्येके**' इति **क्षीरस्वामि-मैत्रेयरक्षितौ**—" इति **पुरुषकारः** । तदानीं 'धात्वादेः षः सः' (6-1-64) इति षकारस्य सत्वाभावात् **ष्टम्भमाणः** इति शानचि रूपम् । निदर्शनार्थमिदमेकं प्रदर्शितम् । 'सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' (वा. 6-1-64) इति **भाष्य**परामर्शे तु औपदेशिकटकारपक्षो न **भाष्य**सम्मत इति ज्ञायते ।



(1867) "**ष्टुच प्रसादे**" (I-भ्वादिः-175. अक. सेट्. आत्म.)

[1]**स्तोकः**-स्तोककः, [2]उदश्वित्स्तोकम् , [3]स्तोकान्मुक्तः, स्तोकेन मुक्तः, [4]संस्तोजः; इति विशेषरूपाणि । सामान्यरूपाणि भौवादिक**चयति**वत् (502) बोध्यानि ।

(1868) "**ष्टुञ् स्तुतौ**" (II-अदादिः-1043. सक. अनि. उभ.)

स्तुवन्-[5]अभिष्टुवन् , [6]तुष्टूषन्-तुष्टूषमाणः, [7]अग्निष्टुत् - पुरुष्टुत् , [8]स्तुत्यः-अवश्य-स्तुत्यः, [9]ग्रावस्तुत् , [10]आयतस्तूः, [11]स्तोत्रम् , [12]प्रस्तावः, स्तवः, [13]संस्तावः-संस्तवः,

---

1. घञि रूपमेवम् । धातोः प्रसादार्थत्वेऽपि **स्तोक** इत्यादिषु अल्पार्थत्वम् । निष्ठायां सेट्त्वात् घञि कुत्वस्याप्रसक्तौ 'करणे च **स्तोक**—' (2-3-33) इत्यादिषु निर्देशात् कुत्वमिति **माधवः** । **स्तोक** एव **स्तोककः** ।
2. 'पोटायुवति**स्तोक**—' (2-1-65) इति तत्पुरुषः । **स्तोकम्**=अल्पं उदश्वित, **उदश्वित्स्तोकम्** ।
3. 'करणे च **स्तोकाल्प**—' (2-3-33) इति तृतीयापञ्चम्यौ । पञ्चमीपक्षे 'पञ्चम्याः **स्तोकादिभ्यः**' (6-3-2) इत्यलुक् ।
4. "वर्णविकाराभ्युपगमात् संपूर्वकात् घञि चकारस्य जकारे **संस्तोजः** इति **मैत्रेयः**" इति **माधवाचार्याः** ।
5. शतरि उवङ् । **अभिष्टुवन्** इत्यत्र 'उपसर्गात् सुनोतिसुवतिस्यति**स्तौति**—' (8-3-65) इत्यादिना षत्वम् ।
6. सन्नन्तादुप्रत्यये रूपम् । अभ्यासे 'शर्पूर्वाः खयः' (7-4-61) इति खयः शेषः । हलादिशेषापवादः । '**स्तौति**ण्योरेव—' (8-3-61) इति षत्वम् ।
7. अग्निं स्तौतीति **अग्निष्टुत्** । 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् । तुक् । '**अग्नेः स्तुत्**—' (8-3-82) इति षत्वम् । पुरु स्तौतीति **पुरुष्टुत्**= ऋत्विग्विशेषः । अत्र सुषामादित्वात् (8-3-98), छान्दसत्वाद्वा षत्वम् ।
8. 'एति**स्तु**—' (3-1-109) इति क्यप् । प्रकृतसूत्रे 'क्यप्' इत्यनुवर्तमानेऽपि पुनः क्यब्ग्रहणं 'ओरावश्यके' (3-1-125) इति प्राप्तस्य ण्यतोऽप्यपवादार्थम् । **अवश्यस्तुत्यः** इत्यत्र मयूरव्यंसकादित्वात् समासः ।
9. 'भ्राजभास......**ग्रावस्तुवः** क्विप्' (3-2-177) इति ग्रावशब्द उपपदे **स्तौतेः** क्विप् ताच्छीलिकः । तुक् । **ग्रावस्तुत्**=ऋत्विग्विशेषः ।
10. आयतं स्तौति इति **आयस्तूः** । 'क्विब् वचिप्रच्छ्या**यतस्तु**—' (वा. 3-2-76) इति क्विप् । दीर्घश्च । ह्रस्वाभावात् तुक् न ।
11. 'दाम्नीशसयुयुजस्**तु**—' (3-2-182) इति करणे ष्ट्रन्प्रत्ययः ।
12. प्रपूर्वकादस्मात् 'प्रे **स्तुद्रुस्रुवः**' (3-3-27) इति घञ् । उवर्णान्तत्वलक्षणापोऽपवादः । अन्यत्र **स्तवः** इत्येव ।
13. '**यज्ञे समि स्तुवः**' (3-3-31) इति संपूर्वकादस्मात् घञ् । यज्ञकर्मणि यत्र देशे छन्दोगाः समेत्य स्तुवन्ति स देशः **संस्ताव** इत्युच्यते । अन्यत्र **संस्तवः** परिचयः ।

[1]स्तुतिः, [2]प्रस्तोता, [3]परिष्टुवन्-निष्टुवन्-विष्टुवन्, [4]स्तोमः, [5]अग्निष्टोमः [6]ज्योतिष्टोमः-आयुःष्टोमः, परिष्टोमः, [7]स्तोभः, 'मृडा जरित्रे रुद्र [8]स्तवानः' (तै. सं. 4-5-24), [9]त्रिभिःष्टुतः-त्रिभिःस्तुतः, इति विशेषरूपाणि। सामान्यरूपाणि आदादिक**क्ष्णौति**वत् (323) बोध्यानि।

(1869) **"ष्टुप समुच्छ्राये"** (X-चुरादिः-1673. अक. सेट्. उभ.)

'स्तुप' इति **दुर्गः**। चौरादिक**कोपयति**वत् (225) रूपाणि ऊह्यानि। 'ष्टूप—' इति **केचित्**। अचि-**स्तूपः**।

(1870) **"ष्टुभु स्तम्भे"** (I-भ्वादिः-394. सक. सेट्. आत्म.)

'—**स्तम्भेऽर्थे स्तोभते शपि।**' (श्लो. 143) इति **देवः**।

[10]स्तुब्धः, [11]नितुस्तोभिषकः-नितुस्तुभिषकः-षिका, [12]अनुष्टुप्-त्रिष्टुप्,

---

1. 'श्रुयजीषि**स्तुभ्यः**—' (वा. 3-3-94) इति करणे क्तिन्प्रत्ययः। स्तूयतेऽनयेति **स्तुतिः** स्तोत्रम्।
2. प्रपूर्वकादस्मात् ताच्छीलिके 'तृन्' (3-2-135) इति तृन्प्रत्यये रूपमेवम्। **प्रस्तोता**=ऋत्विग्विशेषः।
3. अत्र सर्वत्र 'परिनिविभ्यः सेवसितसयसिवुसहसुट्**स्तु**—' (8-3-70) इति षत्वम्।
4. औणादिके (द. उ. 7-26) मन्प्रत्यये रूपमेवम्। **स्तोमः** स्तुतिव्यूहः। उपचारात् **स्तोमः** समूहार्थकः।
5. '**अग्नेः स्तुत्स्तोम**—' (8-3-82) इति षत्वम्।
6. '**ज्योतिरायुषः स्तोमः**' (8-3-83) इति षत्वम्। **परिष्टोम** इत्यत्र तु 'उपसर्गात् सुनोतिसुवतिस्यति**स्तौति**—' (8-3-65) इत्यादिना षत्वम्।
7. औणादिके भप्रत्यये रूपम्। **स्तोभः**=केवलस्तुतिप्रयोजनको वर्णसमूहः।
8. औणादिके (द. उ. 5-32) आनच्प्रत्यये रूपम्। लोकेऽपि प्रयोगार्होऽयं शब्दः।
9. '**स्तुत**स्तोमयोश्छन्दसि' (8-3-105) इति **एकेषां** मतेन षत्वम्। **अन्येषां** मते न। तेन रूपद्वयम्।
10. उदित्त्वेन क्त्वायामिड्विकल्पनात् निष्ठायामिण्निषेधः। 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वम्, भकारस्य जश्त्वेन बकारः।
11. अत्र अभ्यासेन व्यवधानात्, अस्थादित्वात् च 'स्तौतिण्योरेव—' (8-3-61) इति नियमात् न षत्वम्। शर्पूर्वकत्वात् खयः शेषः।
12. अनु स्तोभते इति **अनुष्टुप्**। क्विपि 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौति**स्तोभति**—' (8-3-65) इति षत्वम्। **त्रिष्टुप्** इत्यत्र सुषामादित्वात् (8-3-98) षत्वम्। उभे छन्दोविशेषवाचिके, भकारान्ते च। पदान्तत्वनिमित्तकः पकारः प्रथमैकवचने। पक्षे **अनुष्टुब्, त्रिष्टुब्** इति बकारान्तत्वमपि।



[1]स्तुभित्वा-स्तोभित्वा-स्तुब्ध्वा, [2]निष्टोभिता-त्री; इति विशेषरूपाणि। सामान्यरूपाणि **जृम्भति**वत् (617) बोध्यानि।

(1871) **"ष्टेपृ क्षरणार्थः"** (I-भ्वादिः-365. सक. सेट्. आत्म.)

भौवादिक**केपति**वत् (261) सर्वाण्यपि रूपाण्यूह्यानि।

(1872) **"ष्टै वेष्टने"** (I-भ्वादिः-922. सक. अनि. पर.)

'ष्णै' इति **स्वाम्यादयः**। 'अभ्राकाश्ये' इति **केचित्**। '[3]स्तायूनां पतये नमः (तै. सं. 4-5-7)'। इतराणि रूपाणि भौवादिक**काय**तिवत् (263) बोध्यानि।

(1873) **"ष्ट्यै शब्दसंघातयोः"** (I-भ्वादिः-911. अक. अनि. पर.)

'शब्दसंघातयोर्धात्वोः **स्त्यायत्ये**कस्य सो न षः।' (श्लो. 7) इति **देवः**।

[4]प्रस्तीमः-प्रस्तीतः, प्रस्तीमवान्-प्रस्तीतवान्, [5]प्रसंस्तीतः, [6]स्त्यातः-संस्त्यानः, [7]स्त्री, इति विशेषरूपाणि। सामान्यरूपाणि भौवादिक**काय**तिवत् (263) बोध्यानि।

---

1. उदित्त्वादिड्विकल्पः। 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः। तेन रूपत्रयम्।
2. तृचि 'उपसर्गात्—' (8-3-65) इति षत्वे रूपमेवम्। **माधवधातुवृत्तौ** अत्र प्रकरणे **निष्टोब्धा** इति अनिट्कं तृजन्तरूपं पठितं दृश्यते। धातावस्मिन् वलादेरार्धधातुकस्येड्विकल्पप्रतिपादकशास्त्राभावात् चिन्त्यमिदम्। किञ्च "'प्राक् सितादड्व्यवायेऽपि' (8-3-63) इति षत्वम्" इत्युक्तं तत्र; तदपि न सङ्गच्छते।
3. बाहुलकात् औणादिके उण्प्रत्यये 'आतो युक्—' (7-3-33) इति युगागमे च रूपम्। "छद्मना ये वस्त्रादीनपहरन्ति ते **स्तायवः**" इति **भट्टभास्करः**।
4. प्रपूर्वकस्यास्य निष्ठायाम्, '**स्त्यः** प्रपूर्वस्य' (6-1-23) इति यकारस्य सम्प्रसारणे, पूर्वरूपे, दीर्घे च, '**प्रस्त्यो**ऽन्यतरस्याम्' (8-2-54) इति निष्ठातकारस्य मकारादेश-विकल्पः। मकारादेशाभावपक्षे 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठानत्वं न भवति; सम्प्रसारणस्य नित्यत्वात्, सम्प्रसारणे कर्तव्ये निष्ठानत्वस्यासिद्धत्वात्।
5. 'प्रस्त्यः' इत्येव वक्तव्ये '**स्त्यः** प्रपूर्वस्य' (6-1-23) इति वचनम्—प्रशब्दो यस्मात् धातूपसर्गसमुदायात् पूर्वः, तस्मादपि प्रसारणं भवतीति ज्ञापनार्थम्। तेन **प्रसंस्तीतः** इत्यत्रापि सम्प्रसारणादिकम्।
6. प्रभिन्नोपसर्गोपपदस्य शुद्धस्य च धातोः न सम्प्रसारणादिकम्। अत्र 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठानत्वम्। अत्र सर्वत्रापि **स्त्या**धातुग्रहणेषु '**ष्ट्यै**' इत्यस्य '**स्त्यै**' इत्यस्य च ग्रहणं **सर्व**सम्मतम्। यदाह **वामनः** 'सम्प्रसारणविधौ षोपदेशोऽप्ययं **स्त्या**रूपो गृह्यते' (6-1-23) इति।
7. '**स्त्यायते**र्ड्रट्' (पञ्च. उ. 4-165) इति ड्रट्प्रत्यये डित्त्वाट्टिलोपे वलि लोपे, टित्त्वात् ङीपि च **स्त्री** इति सम्पद्यते।

(1874) "**ष्ट्रक्ष गतौ**" (I-भ्वादि:-661. (पा.) सक. सेट्. पर.)

भौवादिक**तक्ष**तिवत् (691) सर्वाणि रूपाणि ऊह्यानि।

(1875) "**ष्ठल स्थाने**" (I-भ्वादि:-836. अक. सेट्. पर.)

**ज्वलादिः**। 'स्थल—' इति माधवः। [1]स्थाल:-स्थल:, [2]स्थलम्, [3]कपिष्ठल:, कपिस्थलम्, [4]स्थली-स्थला, [5]स्थाली, [6]विष्ठलम्-कुष्ठलम्-शमिष्ठलम्-परिष्ठलम्, इति विशेषरूपाणि। इतराणि सामान्यरूपाणि भौवादिक**चल**तिवत् (510) बोध्यानि।

(1876) "**ष्ठा गतिनिवृत्तौ**" (I-भ्वादि:-928. अक. अनि. पर.)

[7]स्थायक:-यिका, [8]स्थापक:-पिका, [9]तिष्ठासक:-सिका, [10]तेष्ठीयक:-यिका;

---

1. 'ज्वलितिकसन्तेभ्य:—' (3-1-140) इति कर्तरि णप्रत्ययविकल्पः। पक्षे पचाद्यचि **स्थलः** इति साधुः।
2. अधिकरणे घप्रत्ययो बाहुलकात्। बाहुलकादेव घान्तस्य क्लीबत्वम्।
3. '**कपिष्ठलो** गोत्रे' (8-3-91) इति निपातनात् षत्वम्। **कपिष्ठलः**=गोत्रप्रवर्तको **ऋषिः**। अन्यत्र कपीनां स्थलम् **कपिस्थलम्** इत्येव।
4. 'जानपदकुण्डगोण**स्थल**—' (4-1-42) इत्यादिना अकृत्रिमार्थे (स्वाभाविके स्थले विवक्षिते) ङीष्। **स्थली**=अकृत्रिमा भूमिः। **स्थला**=कृत्रिमा सौधादिषु भूः।
5. संज्ञायां 'हलश्च' (3-3-121) इति घञ्। घञन्तात् **स्थाल**शब्दात् गौरादिषु (4-1-41) पाठात् ङीष्। **स्थाली**=पात्रविशेषः।
6. '**विकुशमिपरिभ्यः स्थलम्**' (8-3-96) इति षत्वमत्र।
7. 'धात्वादेः षः सः' (6-1-64) इति सकारादेशः सर्वत्र। '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवं णिनिप्रत्यये, णमुल्यपि ज्ञेयम्।
8. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्या**तां** पुग् णौ' (7-3-36) इत्यङ्गस्य पुगागमः। एवं ण्यन्ते सर्वत्र पुगागमो बोध्यः।
9. धातोरनुदात्तत्वात् सन इण्निषेधे, द्वित्वे, अभ्यासे, 'शर्पूर्वाः खयः' (7-4-61) इति खयः शेषः। अभ्यासस्य, 'सन्यतः' (7-4-79) इतीत्वम्। 'आदेशप्रत्यययोः' (8-3-51) इत्युत्तरखण्डे षत्वम्। ष्टुत्वम्। एवं सन्नन्ते सर्वत्र बोध्यम्।
10. 'घुमा**स्था**गापाजहातिसां हलि' (6-4-66) इति ईत्वे, द्वित्वे, अभ्यासस्य गुणः। एवं यङन्ते सर्वत्र ज्ञेयम्।



स्थाता-त्री, [1]उत्थाता, [वैकुण्ठस्य] [2]अधिष्ठाता-त्री, स्थापयिता-त्री, तिष्ठासिता-त्री, तेष्ठीयिता-त्री;

[3]तिष्ठन्-[4]अधितिष्ठन् [वैकुण्ठं]-न्ती, [5][ग्रामात् शतं] उत्तिष्ठत्, [आसनात्] [6]उत्तिष्ठन्, [7][यौवनेन भर्तारं] उपतिष्ठन्ती, [याचकः प्रभुं] [8]उपतिष्ठन्, स्थापयन्-न्ती, तिष्ठासन्-न्ती; —

स्थास्यन्-[A]अधिष्ठास्यन्-न्ती-ती, स्थापयिष्यन्-न्ती-ती, तिष्ठासिष्यन्-न्ती-ती;— [9]सन्तिष्ठमानः-अवतिष्ठमानः-प्रतिष्ठमानः-[B]वितिष्ठमानः, [शब्दं नित्यं] [10]आतिष्ठमानः, [गोपी कृष्णाय] [11]तिष्ठमाना, [धर्माध्यक्षे] [12]तिष्ठमानः, [मुक्तौ]

---

1. 'उदः **स्था**स्तम्भ्वोः पूर्वस्य' (8-4-61) इति सकारस्य पूर्वसवर्णः थकारो भवति। तस्य 'झरो झरि सवर्णे' (8-4-65) इति पाक्षिको लोपः। लोपाभावपक्षे थकारस्यैव श्रवणम्, न तु 'खरि च' (8-4-55) इति चर्त्वम्। पूर्वसवर्णस्यासिद्धत्वात्।
2. अधिपूर्वकस्य **स्था**धातोः प्रयोगे, 'अधिशीङ्**स्था**ऽऽसां कर्म' (1-4-46) इति कर्मसंज्ञायाम्, 'कर्तृकर्मणोः कृति' (2-3-65) इति षष्ठी। 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभति**स्था**—' (8-3-65) इति षत्वम्।
3. 'पाघ्राध्मा**स्था**म्नादाण्दृश्यर्तिसर्तिशदसतां पिबजिघ्रधम**तिष्ठ**—' (7-3-78) इति **तिष्ठा**देशः शिति प्रत्यये परे।
4. 'अधिशीङ्**स्था**ऽऽसां कर्म' (1-4-46) इति वैकुण्ठस्य कर्मसंज्ञायां द्वितीया।
5. 'ईहायामेव' (वा. 1-3-24) इति, 'उदोऽनूर्ध्वकर्मणि' (1-3-24) इत्यत्रोक्तत्वात् न शानच्। किन्तु शत्रादेशः। शतस्य विशेष्यत्वात् **उत्तिष्ठत्** इत्यत्र क्लीबत्वम्।
6. '—अनूर्ध्वकर्मणि' (1-3-24) इति निषेधात् अत्र न शानच्।
7. 'उपान्मन्त्रकरणे' (1-3-25) इत्यत्र 'मन्त्रकरणे' इति विशेषणात् अत्र न शानच्।
8. 'वा लिप्सायाम्' (वा. 1-3-25) इति आत्मनेपदविकल्पात् पक्षे शता।
9. '**समवप्रविभ्यः स्थः**' (1-3-22) इति समादिपूर्वकेषु क्रमेण शानच्।
10. 'आङः प्रतिज्ञायाम्' (वा. 1-3-22) इति **वार्तिकात्** शानच्।
11. '**प्रकाशन**स्थेयाख्ययोश्च' (1-3-23) इति प्रकाशने शानच्। स्थित्या स्वाभिप्रायं प्रकाशयन्ती इत्यर्थः। 'श्लाघह्नुङ्**स्था**शपां ज्ञीप्स्यमानः' (1-4-34) इति कृष्णशब्दात् चतुर्थी। 'धातूनामनेकार्थत्वात् प्रकाशनमत्रार्थः' इति **केचित्**। 'स्थानेन स्वाभिप्रायाविष्करणं प्रकाशनम्' इति **पदमञ्जरी** (1-4-34)।
12. 'प्रकाशन**स्थेयाख्ययो**श्च' (1-3-23) इत्यनेन स्थेयाख्यायां शानच्। **स्थेयः**= विवादपदनिर्णेता। धर्माध्यक्षं निर्णेतृत्वेनोपसर्पतीत्यर्थः।

A. 'सङ्ग्रामे ता**नधिष्ठास्यन्** निषद्य पुरतोरणम्।' भ. का. 9-72.

B. 'सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य **वितिष्ठमानम्**।
विलोचन**स्थान**गतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम्॥' शिशुपालवधे 4-4.

[1]उत्तिष्ठमानः, [ऐन्द्र्या गार्हपत्यं] [2]उपतिष्ठमानः, [आदित्यं] [3]उपतिष्ठमानः, [गङ्गा यमुनां] उपतिष्ठमाना, [रथिकान्] उपतिष्ठमानः, [पन्थाः स्रुघ्नं] उपतिष्ठमानः, [याचकः प्रभुं] [4]उपतिष्ठमानः, [यावद्भुक्तं] [5]उपतिष्ठमानः, स्थापयमानः, [6]सन्तिष्ठासमानः-अवतिष्ठासमानः, [इत्यादीनि], तेष्ठीयमानः ;
[7]संस्थास्यमानः-अवस्थास्यमानः-[A]प्रस्थास्यमानः-विष्ठास्यमानः, स्थापयिष्यमाणः, सन्तिष्ठासिष्यमाणः, तेष्ठीयिष्यमाणः, [इत्यादीनि] ;
[8]संस्थाः-संस्थौ-संस्थाः, [9]सव्येष्ठाः ; — — —
[10]उपस्थितः-[B]स्थितम्-स्थितवान्, [C]समुत्थितवती, स्थापितः, तिष्ठासितः, तेष्ठीयितः-तवान् ; — — —

---

1. 'उदोऽनूर्ध्वकर्मणि' (1-3-24) इति शानच्।
2. 'उपान्मन्त्रकरणे' (1-3-25) इति शानच्।
3. 'उपाद् देवपूजासङ्गतिकरणमित्रकरणपथिषु' (वा. 1-3-25) इत्यनेन क्रमेण चतुर्ष्वर्थेषु गम्यमानेषु शानच् भवति। आदित्यम**उपतिष्ठमानः**=स्तुवन् इत्यर्थः। गङ्गा यमुनाम**उपतिष्ठमाना**=उपश्लिष्यमाणा इत्यर्थः। रथिकान् **उपतिष्ठमानः**=मित्रीकरोति इत्यर्थः। पन्थाः स्रुघ्नम**उपतिष्ठमानः**=प्राप्नोतीत्यर्थः।
4. 'वा लिप्सायाम्' (वा. 1-3-25) इत्यात्मनेपदविकल्पः।
5. 'अकर्मकाच्च' (1-3-26) इति शानच्। भोजने भोजने **उपतिष्ठत** इत्यर्थः।
6. 'पूर्ववत् सनः' (1-3-62) इत्यात्मनेपदम्। एवं आत्मनेपदनिमित्तविषये सर्वत्र सन्नन्ताच्छानच् बोध्यः।
7. आत्मनेपदनिमित्तेषु सत्सु लृडादेशः। शानच् सर्वत्र बोध्यः।
8. क्विपि, 'घुमास्थागापा—' (6-4-66) इतीत्वं **भाष्यकार**प्रयोगात् न। नच प्रत्ययलक्षणाभावः शङ्क्यः; तस्य निषेधस्य वर्णप्राधान्यविषयत्वात्। अत्र च प्रत्ययप्राधान्यात्।
9. 'स्थास्थिनस्थूणामिति वक्तव्यम्' (वा. 8-3-97) इति षत्वम्। अत्र **वार्तिके** '**स्था**' इति औणादिकस्य कृशन्तस्य ग्रहणमिति **न्यासकारः**। तच्च 'स्थूणाम्' इत्यनेन पुनरुक्तत्वात्, **हर्म्येष्ठाः**, **रथेष्ठाः**, इति प्रयोगविरोधाच्च न—इति **प्रदीपाद्यनुसारेण माधवीये** साधितम्।
10. 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवस—' (3-4-72) इति कर्तरि क्तप्रत्ययः। 'द्यतिस्यतिमास्थामित् ति किति' (7-4-40) इति इत्वम्।

A. '**प्रस्थास्यमाना**वुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान्' भ. का. 3-12
B. 'आशितम्भवमुत्कुष्टं वल्गितं शयितं **स्थितम्**।
बह्वमन्यत **काकुत्स्थः** कपीनां स्वेच्छया कृतम् ॥' भ. का. 6. 107.
C. 'भूयः **समुत्थितवती** धृतपुण्डरीका भोगाय सागरगृहाद् भुवनैकयूनः ॥'
यादवाभ्युदये 19-70.



[1]स्थायी, [2]दुःस्थः,[A] ककुत्स्थः, [3]तपस्स्थः[B], प्रस्थः-[4]प्रष्ठः,[C] [5]समस्थः-विषमस्थः, [6]अम्बष्ठः-आम्बष्ठः-[7]गोष्ठः-[D]भूमिष्ठः-[8]सव्येष्ठः-[9]अपष्ठः-द्विष्ठः-त्रिष्ठः-कुशेष्ठः-कुष्ठः-शङ्कुष्ठः-अङ्गुष्ठः-मञ्जिष्ठः-पुञ्जिष्ठः-परमेष्ठः-बर्हिःष्ठः-[E]दिविष्ठः-अग्निष्ठः, [10]आखूत्थः-शलभोत्थः, [11]अश्वत्थामा, [12]शंस्थः, शंस्थाः,

---

1. ग्रह्यादिपाठात् (3-1-134) कर्तरि णिनिः। युगागमः।
2. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः।
3. '**स्थे च** भाषायाम्' (6-3-20) इति सप्तम्या अलुक्निषेधः। 'हलदन्तात्—' (6-3-9) इत्यस्यापवादः।
4. कर्तरि कप्रत्यये '**प्रष्ठो**ऽग्रगामिनि' (8-3-92) इति षत्वं निपात्यते।
5. 'सुपि **स्थः**' (3-2-4) इति कर्तरि कप्रत्ययः।
6. 'अम्बाम्बगोभूमिसव्या[व्येऽप]पद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः **स्थः**' (8-3-97) इति षत्वम्। एवं **अग्निष्ठः** इति पर्यन्तं षत्वमनेन सूत्रेण ज्ञेयम्। अम्बेव तिष्ठतीत्य**म्बष्ठः**। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (6-3-63) इति पूर्वपदस्य ह्रस्वः। रूढशब्दश्चायम्; अतो नावयवार्थेऽभिनिवेशः कर्तव्यः। अम्बायां=[मातृत्वप्रयुक्तजातौ] तिष्ठतीति **न्यासे** व्युदपादि।
7. गावः तिष्ठन्त्यत्रेत्यधिकरणे कप्रत्ययः।
8. सूत्रे (8-3-97) कुशे, सव्ये, परमे, दिवि इति चतुर्षु स्थलेषु निपातनात् सप्तम्या अलुक्।
9. "**अपाष्ठः** इति **क्वचिद्** दृश्यते। तदानीं 'अन्येषामपि—' (6-3-137) इति पूर्वपदस्य दीर्घः— इति **न्यासे**" इति **माधवधातुवृत्तौ**।
10. आदन्तत्वादेव कप्रत्यये सिद्धे पुनः, 'सुपि **स्थः**' (3-2-4) इति सूत्रारम्भसामर्थ्यात् भावेऽपि कप्रत्ययो भवति। आखूनामुत्थानम्=**आखूत्थः**। पृषोदरादित्वात् सकारस्य थकारः।
11. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति मनिन्प्रत्ययः। पृषोदरादित्वात् आदेः सकारस्य थकारादेशः। अश्वस्येव **स्थाम**=बलं यस्य, सोऽ**श्वत्थामा**। उपपदसमासे स्वभावात् इवार्थो लभ्यते।
12. '**स्थः** क च' (3-2-77) कर्तरि कः। चकारात् क्विबपि। 'शमि धातोः संज्ञायाम्' (3-2-14) इत्यचोऽपवादः।

A. 'अबोधि **दुःस्थं** त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥' भ. का. 6-32.
B. 'असिस्तवं **तपःस्थस्य** न समर्थयते शमम् ॥' किरातार्जुनीयम् 11-17.
C. 'प्रच्छन्नं मारुति**प्रष्ठाः** सीतां द्रष्टुं प्लवङ्गमाः ॥' भ. का. 7-53.
D. 'युवजानिर्धनुष्पाणि**र्भूमिष्ठः** खविचारिणः ।' भ. का. 5-13.
E. 'सर्वनारीगुणैः **प्रष्ठां विष्टरस्थां गविष्ठिराम्**।
शयानां **कुष्ठले** तारां **दिविष्ठा**मिव निर्मलाम् ॥' भ. का. 9-84.

[1]चिरस्थायी, [2]स्थास्नुः,[A] [3]स्थायुकः,[B] [4]स्थावरः,[C] [5]तस्थिवान्,[D]
[6]प्रस्थायी, [चैलो गुरोः] [7]उपस्थानीयः, स्थापः, [E]प्रतिष्ठासुः,तिष्ठापयिषुः, [8]तेष्ठियः ;
स्थातव्यम्, स्थापयितव्यम्, तिष्ठासितव्यम्, तेष्ठीयितव्यम् ;
[9]स्थानीयम्, स्थापनीयम्, तिष्ठासनीयम्, तेष्ठीयनीयम् ;
[10]स्थेयः, स्थेयम्, स्थाप्यम्, तिष्ठास्यम्, तेष्ठीय्यम् ;

---

1. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः। युगागमः।
2. '**ग्लाजिस्थश्च** ग्स्नुः' (3-2-134) इति ग्स्नुप्रत्ययः ताच्छीलिकः।
 'क्स्नोः गित्त्वान्न **स्थ** ईकारः क्ङितोरीत्वशासनात्।
 गुणाभावस्त्रिषु स्मार्यः, श्र्युकोऽनिट्त्वं गकोरितोः ॥' इति **भाष्यम्** (3-3-139)।
3. 'लषपतपद**स्था**भूवृषहनकमगमशॄभ्य उकञ्' (3-2-154) इति तच्छीलादिषु कर्तृषु उकञ् प्रत्ययः। युगागमः।
4. '**स्थे**शभासपिसकसो वरच्' (3-2-175) इति ताच्छीलिको वरच्प्रत्ययः।
5. 'छान्दसा अपि क्वचिद्भाषायाम्' इति न्यायेन लिटः क्वसुः। द्वित्वे, आकार-लोपे, 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधे प्राप्ते, 'वस्वेकाजाद्धसाम्' (7-2-67) इतीट्।
6. 'भविष्यति गम्यादयः' (3-3-3) इति भविष्यदर्थे णिनिः। युगागमः।
 'गमी गामी तथाऽऽगामी प्रयायिप्रतियायिनौ।
 प्रबोधी प्रतिबोधी च भावी **प्रस्था**य्यमी नव ॥' इति **प्रक्रियासर्वस्वम्**।
7. 'भव्यगेयप्रवचनीयो**पस्थानीय**जन्याप्लाव्यापात्या वा' (3-4-68) इत्यनीयरन्तो विकल्पेन निपातितः। पक्षे भावकर्मणोरनीयर्। **उपस्थानीयः**=उपस्थानकर्ता, उपस्थानकर्मभूतश्च।
8. 'यङोऽचि च' (2-4-74) इति यङो लुकि, संयोगपूर्वकत्वात् 'अचि श्नुधातु—' (6-4-77) इतीयङादेशः।
9. तिष्ठन्त्यस्मिन् इत्यधिकरणे 'कृत्यल्युटो बहुलम्' (3-3-113) इति बाहुलकात् अनीयर्। **स्थानीयम्**=नगरम्।
10. 'ईद्यति' (7-4-65) इतीत्वे गुणः। **स्थेयः**=विवादपदनिर्णेता। 'प्रकाशन-**स्थेया**ख्ययोश्च' (1-3-23) इति सूत्रे निपातनात् बाहुलकात् अधिकरणे यत्।

A. '**स्थास्नुं** रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ॥' भ. का. 2-32.
B. 'अतीते वर्षुके काले प्रमत्तः **स्थायुको** गृहे ॥' भ. का. 7-18.
C. 'शरीरिणां **स्थावर**जङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥' कुमारसम्भवे 1-23.
D. 'तं **तस्थिवांसं** नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः।' (रघुवंशे 5-61
E. 'अभिचैद्यं **प्रतिष्ठासु**रासीत् कार्यद्वयाकुलः ॥' शिशुपालवधे 2-1.



[1]ईषत्स्थानः-दुःस्थानः-[A]दुरुपस्थानः-सुस्थानः ; — —
[2]उपस्थीयमानः, स्थाप्यमानः, तिष्ठास्यमानः, तेष्ठीय्यमानः ;
[3]प्रस्थः, माहिकप्रस्थः-इन्द्रप्रस्थः-मालाप्रस्थः, स्थापः, तिष्ठासः, तेष्ठीयः ;
स्थातुम्-उत्थातुम्, स्थापयितुम्, तिष्ठासितुम्, तेष्ठीयितुम् ;
[4]प्रस्थितिः, [5]संस्था-आस्था-[6]अन्यदास्था-अन्यास्था, व्यवस्था, स्थापना, तिष्ठासा, तिष्ठापयिषा, तेष्ठीया ;
स्थानम्, उत्थानम्, अधिष्ठानम्, [7]भीरुष्ठानम्, स्थापनम्, तिष्ठासनम्, तेष्ठीयनम् ;
स्थित्वा, स्थापयित्वा, तिष्ठासित्वा, तेष्ठीयित्वा ;
[8]प्रस्थाय-उत्थाय, प्रस्थाप्य, उपतिष्ठास्य, प्रतेष्ठीय्य ;
[9]शय्योत्थायं[B] [धावति],

---

1. 'आतो युच्' (3-3-128) इति युच्। अङ्पवादः।
2. यकि '**घुमास्था**—' (6-4-66) इति ईत्वम्।
3. 'घञर्थे कविधानम्—**स्था**स्नापाव्यधिहनियुध्यर्थम्' (वा. 3-3-58) इति कः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः। प्रतिष्ठतेऽस्मिन् इति **प्रस्थः**=सानुः। **माहिकप्रस्थः-इन्द्रप्रस्थः-मालाप्रस्थः**—एते देशविशेषाः।
4. '**स्था**गापापचो भावे' (3-3-95) इति अङपवादः क्तिन्। 'द्यतिस्यतिमा**स्था**-मित् ति किति' (7-4-40) इति इत्वम्।
5. बाहुलकात्, '—**व्यवस्था**यामसंज्ञायाम्' (1-1-64) इति निर्देशात् वा अङपि [साधुः।]
 'एवं यतापवादेषु सङ्करो दृश्यते क्तिनः।
 तत् सर्वं बहुलोक्त्यैव साधितं **माधवादिभिः** ॥' इति **प्रक्रियासर्वस्वे**।
6. अन्या च सा **आस्था** च **अन्यदास्था**। 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुग् आशीराशा**स्थास्थितो**त्सुकोतिकारकरागच्छेषु' (6-3-99) इति दुगागमः।
7. समासे '**भीरोः स्थानम्**' (8-3-81) इति षत्वम्।
8. 'न ल्यपि' (6-4-69) इति ईत्वनिषेधः। **माधवीये** तु 'अन्तरङ्गानपि विधीन् **बहिरङ्गो** ल्यब् बाधते' (परि. 55) इति न्यायसञ्चारेण ईत्वं वारितम्। तत् सम्पातायातम्; यतः 'न ल्यपि' (6-4-69) इति निषेधो जागर्ति।
9. 'अपादाने परीप्सायाम्' (3-4-52) इति णमुल्। **परीप्सा**=त्वरा। 'एवं नाम त्वरते, यदवश्यं कर्तव्यमपि नापेक्षते, **शय्योत्थान**मात्रमाद्रियते।' इति **काशिका** (3-4-52)।

A. 'के यूयं **दुरुपस्थाने** मनसाऽप्यद्रिमूर्धनि ॥' भ. का. 7-85.
B. 'गोत्रे साक्षादजनि भगवानेष यत् पद्मयोनिः
 **शय्योत्थायं** यदखिलमहः प्रीणयन्ति द्विरेफान्।' **अनर्घराघवे** 7-78.

[A]स्थायम् २ } स्थापम् २ } तिष्ठासम् २ } तेष्ठीयम् २ ; }
स्थित्वा २ } स्थापयित्वा २ } तिष्ठासित्वा २ } तेष्ठीयित्वा २ ; }

[1]स्थाणुः, [2]स्थूणा, [3]स्थविरः, [4]स्थिरम्-[5]गविष्ठिरः-[B]युधिष्ठिरः, [6]स्थाली, [7]स्थूरः, [8]परमेष्ठी ।

(1877) **" छिवु निरसने "** (I-भ्वादिः-560. सक. सेट्. पर.)

' ष्ठीवति ष्ठीव्यतीत्येते स्यातां निरसने ष्ठिवेः । ' (श्लो. 162) इति **देवः** ।

[9]ष्ठेवकः-विका, ष्ठेवकः-विका,

---

1. '**स्थो णुः**' (द. उ. 1-147) इति णुप्रत्ययः । तिष्ठतीति **स्थाणुः**=ईश्वरः, अचलद्रव्यं च ।
2. 'रास्नासास्नास्थूणावीणाः' (द. उ. 5-47) इति सूत्रेण धातोरूकारादेशः, नप्रत्ययः, णत्वम्, गुणाभावश्च निपात्यते । **स्थूणा**=स्तम्भः ।
3. 'अजिरशिशिरशिथिल**स्थिर**स्फिर**स्थविर**खदिराः' (द. उ. 8-27) इत्यनेन **स्था**धातोः किरच्प्रत्ययः, ह्रस्वत्वम्, वुगागमश्च निपात्यते । स्थितो विश्रमात्= इति **स्थविरः** ।
4. 'अजिरशिशिरशिथिल**स्थिर**—' (द. उ. 8-27) इति किरचि, आकारलोपश्च निपात्यते । तिष्ठतीति **स्थिरम्**=दृढम् ।
5. 'गवियुधिभ्यां **स्थिरः**' (8-3-95) इति षत्वम् ।
6. '**स्था**वतिमृजेरालवालजालीयरः' (द. उ. 10-1) इति आलप्रत्ययः । तिष्ठत्योदनादिकमिति **स्थालम्**=भाजनविशेषः । **स्थाली**, गौरादिषु (4-1-41) पाठात् स्त्रियां ङीष् ।
7. '**स्थश्च**' (द. उ. 8-35) इति रक्प्रत्यये, ऊकारश्चान्तादेशः । **स्थूरः**=उक्षा ।
8. 'परमे कित्' (द. उ. 6-61) इति स्थाधातोः इनिप्रत्ययः, स च कित् । कित्वादाकारलोपः । 'तत्पुरुषे कृति बहुलम्' (6-3-14) इत्यलुक् । '**स्थास्थिन्स्थूणामिति वक्तव्यम्**' (वा. 8-3-97) इति षत्वम् ।
9. 'सुब्धातुष्ठिवु—' (वा. 6-1-64) इति सकारादेशप्रतिषेधः । '**ष्ठिवु**' इत्यत्र ठकारः औपदेशिकः, थकारो वा इत्यत्र उभयथा मतभेदः । थकारपक्षे ष्टुत्वेन सकारस्य षकारश्रवणम् इति विशेषः ।

A. '**स्थायं स्थायं** क्वचिद् यान्तं कान्त्वा कान्त्वा **स्थितं** क्वचित् ।' भ. का. 5-51.

B. 'त्रिदण्डकाषायकमण्डलूज्ज्वलो जपस्फुरद्दन्तपुटो **युधिष्ठिरः** ।' **चम्पूभारते** 6-6.



[1]तिष्ठेविषकः-तुष्ठ्यूषकः-षिका, टिष्ठेविषकः - टुष्ठ्यूषकः-षिका, [2]तेष्ठेवकः-टेष्ठेवकः-विका ;

ष्ठेविता-त्री, ष्ठेवयिता-त्री, तिष्ठेविषिता-तुष्ठ्यूषिता-टुष्ठ्यूषिता-टिष्ठेविषिता-त्री, तेष्ठेविता-टेष्ठेविता-त्री ; इत्यादीनि रूपाणि **दीव्यतिवत्** (838) बोध्यानि । [3]ष्ठीवन्-निष्ठीवन्, [4]निष्ठीवनम्-ष्ठेवनम्, [5]निष्ठीवः, [6]ष्ठेवित्वा-ष्ठ्यूत्वा, [7]निष्ठ्यूतम्, निष्ठ्यूतिः, इति विशेषरूपाणि ।

(1878) **" छिवु निरसने "** (IV-दिवादिः-1110. सक. अनि. पर.)

**देव**श्लोकः पूर्वधातौ द्रष्टव्यः । **केचि**दमुं धातुं न पठन्ति इति **न्यासकार**-संवादपुरस्सरं **माधवीये** प्रतिपादितम् । ष्ठीव्यन्-न्ती-ती इति शतरि विशेषः । विशेषरूपाणि सर्वाण्यपि पूर्वधातौ द्रष्टव्यानि । दैवादिक**दीव्यति**वत् (838) बोध्यानि ।

---

1. इवन्तत्वात् '**सनीवन्त**—' (7-2-49) इति इडागमविकल्पः । इट्पक्षे द्विर्वचनादिकेषु 'शर्पूर्वाः—' (7-4-61) इति खयः शेषः । हलादिशेषापवादः । इडभावपक्षे '**हलन्ताच्च**' (1-2-10) इति सनः कित्त्वे, वलि लोपं बाधित्वा 'च्छ्वोः शूठ्—' (6-4-19) इति ऊठि यणादेशे, पश्चात् द्विर्वचनम् । प्रतिपदोक्तविधित्वात्, अन्तरङ्गत्वात् वा प्रथमं ऊठ् । विस्तरस्तु **माधवीये** द्रष्टव्यः । '**ष्ठिवु**' इत्यत्र ठकार औपदेशिकः इति पक्षे **टिष्ठेविषकः—टुष्ठ्यूषकः-षिका** इति रूपम् । अत्र **न्यासकारः**—" केचिद् **आचार्येण** शिष्याः 'ठकारोऽयम्' इत्युपदिष्टाः । अपरे पुनः 'थकारोऽयम् । ष्टुत्वेन ठकारः श्रूयते' इतीममर्थं ग्राहिताः । उभयमेतत् प्रयोजनम् । **अन्ये** पुनराहुः—'ष्ठिवुर्दिवादिष्वपि पुनरधीयते, तत्र एकस्य द्वितीयस्थकारः, अपरस्य **तु** ठकारः' इति " इति (6-1-64) ।
2. यङन्तेऽपि थकारपक्षे **तेष्ठेवकः** इति, ठकारपक्षे **टेष्ठेवकः** इति च रूपम् ।
3. शतरि, '**ष्ठिवुक्लमु**—' (7-3-75) इति दीर्घः ।
4. ल्युटि पृषोदरादित्वात् (6-3-109) पाक्षिक उपधादीर्घः इति **माधवादयः** । **चान्द्रा**स्तु '**ष्ठिवुसिवोर्दीर्घश्च**' इति ल्युड्विषये सूत्रमेव पठन्ति ।
5. घञ्यपि पृषोदरादित्वात् दीर्घः इति **चान्द्राः** । ल्युटि घञि च पृषोदरादित्वादेव दीर्घ इति **शब्दकल्पद्रुमः** ।
6. उदित्त्वात् इड्विकल्पः । इडभावपक्षे ऊठ् ।
7. निष्ठायामिण्निषेधः । ऊठ् । **निष्ठ्यूतम्**=उद्गीर्णम् । एवं क्तिन्यपि ऊठ् ।

(1879) " **ष्णसु निरसने** " (IV. दिवादिः-1112. सक. सेट्. पर.)

**स्वामिकाश्यपादि**मतानुसारेणायं धातु**र्माधवीया**दिषु पठितः ।

' [1]जनीजृष्णसु— ' (ग. सू. भ्वादिः) इति पाठमाश्रित्य **केचि**दस्य मित्त्वमङ्गीकुर्वन्ति । तत्पक्षे स्नसकः-सिका, स्नसयिता-त्री, इत्यादीनि ह्रस्वघटितानि रूपाणि ण्यन्तेषु बोध्यानि । दैवादिक**क्रस्यति**वत् (265) रूपाण्यूह्यानि ।

(1880) " **ष्णा शौचे** " (II. अदादिः-1052. अक.अनि. पर.)

'**स्नातीति शौचे** स्नः स्नायेदिति चेच्छन्ति केचन ।' (श्लो. 11) **देवः** ।

[2]स्नायकः-यिका, [3]स्नापकः-प्रस्नापकः - स्नपकः-पिका, [4]सिष्णासकः - सिका, सास्नासकः-सिका ;

स्नाता-त्री, स्नापयिता-स्नपयिता-त्री, सिष्णासिता-त्री, सास्नायिता-त्री ; इत्यादीनि रूपाणि भातिवत् (1153) बोध्यानि । [5]प्रतिष्णातम्, [6]निष्णातः, [7]नदीष्णः-नदीष्णातः, नदीस्नातः, [8]सुस्नातम्, सौस्नातिकः,

---

1. ' जनीजृष्क्नसुरञ्जोऽमन्ताश्च ' (ग. सू. भ्वादिः) इति सार्वत्रिकः पाठः । ' **ष्णसु** ' इति ' क्नसु ' स्थाने **कैश्चित्** पठ्यत इति **माधवीये** स्पष्टम् ।
2. ण्वुलि ' आतो युक्— ' (7-3-33) इति युगागमः । धात्वादिषकारस्य सकारः ।
3. ण्यन्ते सर्वत्र आदन्तलक्षणः पुगागमो बोध्यः । पुगनन्तरम्, ' ग्लास्नावनुवमां च ' (ग. सू. भ्वादिः) इति णिजन्ते मित्त्वविकल्पः । मित्त्वपक्षे **स्नपक** इत्यादीनि ह्रस्वघटितानि रूपाणि । मित्त्वाभावपक्षे **स्नापकः** इत्यादीनि । ' ...अनुपसर्गाद्वा ' (ग. सू. भ्वादिः) इत्यनुवृत्तेः सोपसर्गस्थलेषु मित्त्वं नेति बोध्यम् । **क्षीरतरङ्गिण्यां** '**प्रस्नपयति**' इति दृश्यते ; नूनमशुद्धः पाठोऽयम् ।
4. सन्नन्ते ' आदेशप्रत्यययोः ' (8-3-59) इत्युत्तरखण्डे षत्वम् । ष्टुत्वेन नकारस्य णकारः ।
5. ' सूत्रं **प्रतिष्णातम्** ' (8-3-90) इति मूर्धन्यविशिष्टो निपातः । **प्रतिष्णातम्**= शुद्धं सूत्रमित्यर्थः । अन्यत्र **प्रतिस्नात**मित्येव ।
6. नितरां स्नातः **निष्णातः** कुशलः । '**निनदीभ्यां स्नातेः** कौशले ' (8-3-89) इति षत्वम् । **निष्णातः** कटकरणे, **निष्णातो** रज्जुवर्तने । अत्र धात्वर्थस्य न विवक्षा ।
7. नद्यां स्नातीति **नदीष्णः** । ' सुपि स्थः ' (3-2-4) इत्यत्र योगविभागात् कप्रत्ययः, ' **निनदीभ्यां स्नातेः कौशले** ' (8-3-89) इति षत्वम् । " **नदीष्ण** इति । नदीस्नाने कुशल इत्यर्थः । **कवयस्तु** कुशलमात्रे प्रयुञ्जते ।" इति **हरदत्तः** । कौशलभिन्नार्थे तु **नदीस्नात** इत्येव ।
8. अत्र ' सु ' इत्यस्य कर्मप्रवचनीयत्वेन न षत्वम् इति **केचित्** । वस्तुतः षत्वस्य प्राप्त्यभावात् ' सात् पदाद्योः ' (8-3-111) इति निषेधाच्च षत्वमेव न । सुस्नातं पृच्छति **सौस्नातिकः** । ' पृच्छतौ **सुस्नातादिभ्यः** ' (वा. 4-4-1) इति ठक् ।



[1]प्रस्नः, [2]स्नानीयम्, [3]स्नात्वाकालकः, [4]ब्राह्मणस्नापकः, [5]स्नावा, [6]स्नात्वी, [7]स्नायुः इतीमानि विशेषरूपाणि ।

(1881) " **ष्णिह प्रीतौ** " (IV-दिवादिः-1200. अक.वेट्.पर.)

**रधादिः ।**

'**स्नेहने स्नेहयेत्**, प्रीतौ स्निह्येत्— ।' (श्लो. 198) इति **देवः** ।

' स्निह— ' इति **केचित्** । तद् **भाष्यादि**विरोधादुपेक्ष्यम् ।

स्नेहकः-हिका, स्नेहकः-हिका, [8]सिस्निहिषकः-सिस्नेहिषकः-सिस्निक्षकः-क्षिका, [9]सेष्णिहकः-हिका ; [10]स्नेहिता-स्नेग्धा-स्नेढा-ढ्री, स्नेहयिता-त्री, सिस्निहिषिता-सिस्नेहिषिता-सिस्निक्षिता-त्री, सेष्णिहिता-त्री, इत्यादीनि रूपाणि दैवादिक-

---

1. ' घञर्थे कविधानं ग्लास्नाप्— ' (वा. 3-3-58) इति कप्रत्ययः । प्रस्नान्त्यस्मिन् इति **प्रस्नः**= शैलेषु विद्यमानो जलाशयः । ' आतो लोप इटि च ' (6-4-64) इत्याकारलोपः ।
2. बाहुलकात् करणेऽनीयर्प्रत्ययः । स्नान्त्यनेनेति **स्नानीयम्**=स्नानसाधनभूतश्चूर्णविशेषः ।
3. अत्र मयूरव्यंसकादित्वात् (2-1-72) समासः । मयूरव्यंसकादिराकृतिगणः । अत्र यद्यपि '**स्नात्वाकालकः**' इति ' समासेऽनञ्पूर्वे क्त्वो ल्यप् ' (7-1-37) इति ल्यप् न्याय्यः । तथापि गणपाठादेव न समास इति सिद्धान्तः । ' —अनञ् ' इत्यस्य पर्युदासत्वात् नञ्सदृशेनाव्ययेन क्त्वान्तस्य समास एव ल्यब्विधिः ' इति **केचित्** ।
4. ण्यन्तात् ण्वुल् । ब्राह्मणानां **स्नापकः** इति याजकादित्वात् (2-2-19) षष्ठीसमासः ।
5. ' आतो मनिन्क्वनिप्— ' (3-2-74) इति क्वनिप् ।
6. '**स्नात्व्यादयश्च**' (7-1-41) इत्यत्र निपातनात् क्त्वाया ईकारश्छन्दसि ।
7. औणादिके उण्प्रत्यये रूपम् । **स्नायुः**=शरीरस्थमज्जाविशेषः ।
8. ' रधादिभ्यश्च ' (7-2-45) इतीड्विकल्पः । ' रलो व्युपधात्— ' (1-2-26) इति कित्वविकल्पः । षत्वम् । तेन रूपत्रयम् । इडभावपक्षे ' वा द्रुहमुहष्णुहष्णिहाम् ' (8-2-33) इति घकारविकल्पः, तस्य चर्त्वेन ककारः । पक्षे हकारस्य ढकारे, तस्य ककारेऽपि तुल्यं रूपम् ।
9. यङन्तेऽभ्यासे गुणः । उत्तरखण्डे षत्वम् ।
10. रधादित्वात् (7-2-45) इड्विकल्पः । ' वा द्रुहमुहष्णुहष्णिहाम् ' (8-2-33) इति घत्वविकल्पः । घत्वपक्षे धत्वे **स्नेग्धा** । ढत्वपक्षे धत्वढत्वष्टुत्वढलोपदीर्घेषु **स्नेढा** इति रूपम् । एवं तव्यदादिष्वपि रूपत्रयं बोध्यम् ।

**द्रुह्यति**वत् (885) बोध्यानि । [1]स्निहित्वा-स्नेहित्वा-स्निग्धा-स्नीढा, [2]स्निग्धः-स्नीढः, [3]उष्णिक् - उष्णिहा, [4]स्निहितिः, [5]स्नेहुः, इति विशेषरूपाणि ।

(1882) **" ष्णिह स्नेहने "** (X-चुरादिः-1572. सक. सेट्. उभ.)

' स्निट ' इति ' स्मिट ' इति च पाठभेदौ । पूर्वधातुवद्रूपाण्यूह्यानि ।

(1883) **" ष्णु प्रस्रवणे "** (II-अदादिः-1038. अक. सेट्. पर.)

प्रस्नविता-त्री, प्रस्नवितुम् , सुस्नूषन्-न्ती, प्रस्नुतः इति विशेषरूपाणि । सामान्यरूपाणि तु आदादिक**क्ष्णौति**वत् (323) बोध्यानि । वलादेरार्धधातुकस्य सर्वस्यापि ' **स्नु**क्रमोरनात्मनेपदनिमित्ते ' (7-2-36) इतीडागमः । सन्नन्तेषु, किति प्रत्यये च निष्ठादौ ' सनि ग्रहगुहोश्च ' (7-2-12) इति, 'श्र्युकः किति' (7-2-11) इति च इण्निषेधः ।

(1884) **" ष्णुसु अदने "** (IV-दिवादिः-1111. सक. सेट्. पर.)

' आदाने ' **इत्येके** । ' अदर्शने इति **द्रमिडाः** ' इति **धातुवृत्तिः** । ' ष्णुस निरसने ' इति **केचित्** पठन्ति । **स्नुषा**—इगुपधलक्षणे कप्रत्यये टापि, सुषामादित्वात् (8-3-93) षत्वम् । औणादिकोऽयमिति **केचित्** । सर्वाण्यपि रूपाणि क्रस्यतिवत् (265) बोध्यानि ।

(1885) **" ष्णुह उद्गिरणे "** (IV-दिवादिः-1199. सक. सेट्. पर.)

**रधादिः** । तेन वलाद्यार्धधातुकेषु इड्विकल्पः । झलि पदान्ते च ' वा द्रुहमुहष्णुह—' (8-2-23) इति घत्वविकल्पः । सर्वाण्यपि रूपाणि दैवादिक**द्रुह्यति**वत् (885) बोध्यानि ।

---

1. इड्विकल्प-घत्वविकल्प-कित्त्वविकल्पाः । तेन चातूरूप्यम् ।
2. निष्ठायामिण्निषेधः । घत्वपक्षे ढत्वपक्षे च रूपद्वयम् ।
3. ' ऋत्विग्दधृक्स्रग्दिग्उष्णिग्—' (3-2-59) इत्यत्र निपातनात् उत्पूर्वकादस्मात् क्विन्, उपसर्गान्त्यलोपः, षत्वं च । **उष्णिक्**=छन्दोविशेषः । ' कुभा **उष्णिहा** देवविशा ' इति **भाष्यकार**प्रयोगात् अजादित्वेन स्त्रियां टापि **उष्णिहा** इत्यपि साधुः । उत्स्निह्यतीति **उष्णिक् उष्णिहा** वा ।
4. निगृहीतिः निपठितिः इत्यादिष्विव ' तितुत्रेष्वग्रहादीनाम् ' (वा. 7-2-9) इति पर्युदासात् इट् इति **प्रक्रियासर्वस्वम्** । एतच्च पाक्षिकम् ; तेन **स्निग्धिः स्नीढिः** इत्यपि भवत्येव ।
5. औणादिके (द. उ, 1-95) उप्रत्यये **स्नेहुः**=चन्द्रमाः ।



(1886) **" ष्णै वेष्टने "** (I-भ्वादिः-923. सक. अनि. पर.)

' शोभायां च ' **इत्येके** । ' स्नातीति शौचे स्नः स्नायेदिति चेच्छन्ति **केचन** ।' (श्लो. 12) इति **देवः** । ' ष्टै ' इत्येव प्रायपाठः । ' **उष्णीषं स्नायतेः** ' (निरुक्तम् 7-12) इत्यत्र **स्कन्दस्वामिना** " **उष्णीषं** शिरोवेष्टनम् , स्नायतेः शौचार्थस्य वेष्टनार्थस्य वा ; उभयस्यापि तत्र सम्भवात् " इति विवृतम् । तेन धातुरयं भ्वादावपीति **पुरुषकारे** (श्लो. 12) सप्रमाणं साधितम् । रूपाणि सर्वाण्यपि **पायति**वत् (1062) बोध्यानि ।

(1887) **" ष्मिङ् ईषद्धसने "** (I-भ्वादिः-948. अक. अनि. आत्म.)

षोपदेशोऽयम् । ' ईषद्धासे सयेतेति सापयेदित्यनादरे ।' (श्लो. 15) इति **दैवे**, तद्व्याख्याने **पुरुषकारे** च ' स्मिङ् ' इति पठितम् ।

[1]सिस्मयिषकः-षिका, [2]विस्मापयमानः, [3]स्मयमानो विवक्षति, [4]स्मयः, [5]स्मेरः, स्मितम् इति विशेषरूपाणि । सामान्यरूपाणि भौवादिकक्वतिवत् (198) बोध्यानि ।

(1888) **" ष्मिङ् अनादरे "**

(X-चुरादिः-1573. (पा.) सक. सेट्. उभ.)

' ईषद्धासे सयेतेति **स्मापयेदित्यनादरे** ' (श्लो. 15) इति **देवः** ।

' **मैत्रायादिसम्मतः** पाठोऽयं चुरादिषु' इति **व्याख्यातारः** । रूपाणि यथासम्भवमूह्यानि ।

(1889) **" ष्वञ्ज परिष्वङ्गे "** (I-भ्वादिः-976. सक. अनि. आत्म.)

---

1. ' **स्मिपूङ्रञ्ज्वशां सनि** ' (7-2-74) इति सन्नन्ते इडागमः । ' सनि ग्रहगुहोश्च ' (7-2-12) इत्यस्यापवादः ।
2. ' भीस्म्योर्हेतुभये ' (1-3-68) इति आत्मनेपदम् । ' नित्यं **स्मयतेः** ' (6-1-57) इति णिजन्ते सर्वत्र आकारः प्रकृतेः । आत्वे कृते पुगागमोऽपि भवति ।
3. ' लक्षणहेत्वोः क्रियायाः ' (3-2-126) इति लक्षणे शानच् ।
4. ' अज्विधौ भयादीनामुपसंख्यानम् ' (वा. 3-3-56) इति अच् । अत्र ल्युडपवादोऽयमिति **केचित्** । **स्मयनम्** इत्यपि लक्ष्येऽस्ति इति **केचित्** ।
5. ' नमिकम्पिस्म्यजसकमहिंसदीपो रः ' (3-2-167) इति ताच्छील्किो रप्रत्ययः ।

[1]प्रतिष्वजमाणः, [2]परिष्वजमाण:-निष्वजमाण:-विष्वजमाणः, [3]परिष्वङ्गः, [4]स्वङ्क्त्वा-स्वक्त्वा, परिष्वज्य, [5]परिषिष्वङ्क्षमाणः, [6]सस्वजिवान्, इति विशेषरूपाणि। सामान्यरूपाणि **दंशति**वत् (817) बोध्यानि।

(1890) **"ष्वद आस्वादने"** (I-भ्वादिः-18. सक. सेट्. आत्म.)

'आस्वादनेऽर्थे स्वदते, स्वादयेदिति शञ्चिचोः।' (श्लो. 193) **देवः**। 'संवरणे' इति **केचित्**। '**आस्वादनम्**=जिह्वया लेहः' इति **क्षीरस्वामी**। 'अनुभवः' इति **माधवः**। '**स्वदन्ति** देवा उभया निहव्या' (ऋक् 7-2-2) इत्यत्र परस्मैपदं छान्दसम्। रसम् [7]आस्वदमानः, दधि [8]स्वदमानं देवदत्ताय, [9]सिस्वादयिषुः, '[10]आस्वादनीं दावशोणितानाम्' (यादवाभ्युदये 20-31) इति विशेषरूपाणि। सामान्यरूपाणि भौवादिक**कुर्दति**वत् (230) बोध्यानि।

(1891) **"ष्वद आस्वादने"** (X-चुरादिः-1805. सक. सेट्. उभ.)

**आस्वदीयः।**

---

1. शानचि शपि 'दंशसञ्जस्वञ्जां शपि' (6-4-25) इत्यनुनासिकलोपः। चवर्गपञ्चमत्वेन श्रूयमाणत्वेऽपि नोपधोऽयं धातुः। तदुक्तम्—'नकारजावनुस्वारपञ्चमौ झलि धातुषु' इति। 'उपसर्गात् सुनोति........स्वञ्जाम्' (8-3-65) इति षत्वम्।
2. अत्र '**परिनिविभ्यः** सेव......स्वञ्जाम्' (8-3-70) इति षत्वम्।
3. निष्ठायामनिट्त्वात् घञि, '**चजोः**—' (7-3-52) इति कुत्वम्।
4. '**जान्तनशां** विभाषा' (6-4-32) इति नकारलोपो विकल्पेन न भवति। तेन रूपद्वयम्।
5. 'स्थादिष्वभ्यासेन चाभ्यासस्य' (8-3-64) इति षत्वम्।
6. 'श्रन्थिग्रन्थिदम्भि**स्वञ्जीनां** च' (वा. 1-2-6) इति लिटः कित्त्वात् लिडादेशे क्वसावपि कित्त्वम्। तेनोपधानकारलोपे, द्विर्वचनादिके च, 'वस्वेकाजाद्—' (7-2-67) इति इडागमे च रूपमेवम्।
7. वस्तुतोऽकर्मकोऽयम्। धातोरत्र विवक्षावशेन सकर्मकत्वम्। विस्तरस्तु **माधवीयादौ** द्रष्टव्यः।
8. 'रुच्यर्थानां प्रीयमाणः' (1-4-33) इति रुच्यर्थस्यास्य धातोर्योगे देवदत्तस्य सम्प्रदानत्वात् चतुर्थी।
9. ण्यन्तात् सनि उप्रत्यये रूपमेवम्। 'सः स्विदि**स्वदि**सहीनां च' (8-3-62) इति सकारः। 'स्तौतिण्योरेव—' (8-3-61) इति नियमस्य बाधकः।
10. 'कृत्यल्युटो बहुलम्' (3-3-113) इति बहुलग्रहणात् ण्यन्तात् कर्तरि ल्युट्; टित्त्वात् स्त्रियां ङीप्।



'आस्वादनेऽर्थे स्वदते स्वादयेदिति शञ्चिचोः।' (श्लो. 103) इति **देवः**। सर्वाण्यपि रूपाणि चौरादिक**कालयति**वत् (185) बोध्यानि।

(1892) **"ञि ष्वप शये"** (II-अदादिः-1068. अक. अनि. पर.) [अ]

स्वापकः-पिका, स्वापकः-पिका, [1]सुषुप्सकः-प्सिका, [2]सोषुपकः-पिका; स्वप्ता-स्वप्त्री, स्वापयिता-त्री, सुषुप्सिता-त्री, सोषुपिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**त्रपति**वत् (1556) बोध्यानि। [3]सुप्तः, सुप्त्वा-सुप्तिः, [4]स्वप्नः, [5]स्वप्नक्, [6]सुषुप्तः-विषुप्तः-निःषुप्तः-दुःषुप्तः, सुषुप्सुः-[7]सुष्वापयिषुः, इति विशेषः।

(1893) **"ष्वष्क गत्यर्थः"** (I-भ्वादिः-100. सक. सेट्. आत्म.)

'ष्वक्क' इति द्विककारकः क्वाचित्कः पाठः। 'सुब्धातुष्ठिवुष्व**ष्कतीनां**—' (वा. 6-1-64) इति निषेधात् धात्वादिषकारस्य सकारो न। 'विष्वक् परित्रौकि-

---

[अ] '**ञि ष्वप शये**' 'हलन्त्यम्' (1-3-3) इतीत्त्वप्रसङ्गात् 'ञि **ष्वप्** शये' इत्यपपाठः—इति **धातुकाव्यव्याख्यानम्** (2-51)। युज्यते चैतत्। यतः सर्वेष्वपि धातुपाठेषु "**ञि ष्वप्** शये। **उदात्तेत्**, अनुदात्तः।" इति पठ्यते। 'उदात्तेत्' इत्यस्य उदात्तोपदेशोऽकार इत्संज्ञकोऽत्र धातौ—इति खल्वर्थः। अतश्च प्रामादिकः सार्वत्रिकः 'ष्वप्' इति हलन्तपाठ इत्येव न्याय्यम्। अत एवापपाठः शोधितो **धातुकाव्यव्याख्यातृमहाशयेन**।

1. 'रुदविदमुषग्रहि**स्वपि**प्रच्छः संश्च' (1-2-8) इति सनः कित्त्वम्। तेन 'वचि**स्वपि**यजादीनां किति' (6-1-15) इति सम्प्रसारणम्। पूर्वरूपादिकम्। ततो द्विर्वचनम्। उत्तरखण्डे 'आदेशप्रत्यययोः' (8-3-59) इति षत्वम्।
2. '**स्वपि**स्यमिव्येञां यङि' (6-1-19) इति यङन्ते सम्प्रसारणम्। पूर्ववत् अभ्यासकार्याणि।
3. '**ञीतः** क्तः' (3-2-187) इति कर्तरि भावे च वर्तमाने क्तप्रत्ययः। निष्ठायाः कित्त्वात् सम्प्रसारणम्। एवं क्त्वाक्तिन्यक्प्रभृतिष्वपि बोध्यम्।
4. '**स्वपो** नन्' (3-3-91) इति भावे नन्प्रत्ययः।
5. '**स्वपि**तृषोर्नजिङ्' (3-2-172) इति ताच्छीलिको नजिङ्प्रत्ययः। नजिङि 'नज्' इत्येवावशिष्यते। जकारस्य पदान्तत्वप्रयुक्तः ककारः।
6. '**सुविनिर्दुर्भ्यः सुपि**सूतिसमाः' (8-3-88) इति षत्वम्। सूत्रे '**सुपि**' इति कृतसम्प्रसारणनिर्देशः। तेन सम्प्रसारणयोग्यस्थलेषु यत्र 'सुप्' इति श्रवणं तत्र सर्वत्रापि षत्वं भवतीति बोध्यम्।
7. ण्यन्तात् सनि उप्रत्यये रूपमेवम्। अभ्यासस्य 'द्युति**स्वाप्योः**—' (7-4-67) इति सम्प्रसारणम्। 'स्तौति**ण्यो**रेव षणि—' (8-3-61) इत्युत्तरखण्डे षत्वम्।

तलोचनैः स्थितं **विष्वष्कमाणा**म्बुदनादशङ्कया ॥' (धा. का. 1-14) इति प्रयोगः। रूपाणि सर्वाण्यपि **कखति**वत् (141) बोध्यानि।

(1894) "ञि ष्विदा गात्रप्रस्रवणे"

(I-भ्वादिः-744. अक. सेट्. आत्म.)

'गात्रप्रक्षरणे स्विद्येत् स्वेदते स्नेहमोकयोः।' (श्लो. 107) इति **देवः**। 'गात्रप्रक्षरणे' इति **माधवादयः**। उभयथाऽपि स्वेदस्य=घर्माम्भसो विवक्षाऽत्र। 'स्नेहनमोचनयोः' इति **हरदत्तादयः** (पदमञ्जरी 1-2-19)। सामान्यरूपाणि भौवादिक**श्वेदति**वत् (326) बोध्यानि। [1]स्विन्नः, [2]प्रस्वेदितः-प्रस्वेदितम्, [3]सिस्वेदयिषुः।

(1895) "ष्विदा गात्रप्रक्षरणे"

(IV-दिवादिः-1188. अक. अनि. पर.)

'**गात्रप्रक्षरणे स्विद्येत्**, स्वेदते स्नेहमोकयोः।' (श्लो. 107) इति **देवः**। सर्वाण्यपि रूपाणि दैवादिक**क्रुध्यति**वत् (277) बोध्यानि। 'निष्ठा शीङ्-**स्विदि**—' (1-2-19) इत्यत्र ञीतां क्ष्विदादीनां साहचर्यात् ञीतो भौवादिकस्यैव ग्रहणमिति **पदमञ्जरी**। अयमपि ञीत् इति **न्यासकारः**। तत्तु **पुरुषकारे धातुवृत्तौ** च खण्डितम्। भावादिकर्मणोः प्रस्वेदितम्-प्रस्वेदितः इत्यस्यापि रूपे। आदित्वमस्य **सर्वसम्मतम्**। अयं परस्मैपदी, भौवादिकस्तु आत्मनेपदीति; अयमनिट्, भौवादिकः सेट् इति च विशेषः।

(1896) "सङ्केत च आमन्त्रणे" (X-चुरादिः-1892. सक. सेट्. उभ.)

**आमन्त्रणं**=गूढोक्तिः। संकेतकः-तिका, सिसङ्केतयिषकः-षिका; संकेतयिता-त्री, सिसङ्केतयिषिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**केतयति**वत् (260) ऊह्यानि।

---

1. 'ञीतः क्तः' (3-2-187) इति वर्तमाने क्तः। 'आदितश्च' (7-2-16) इति निष्ठायामिण्निषेधः। '**रदाभ्यां**—' (8-2-42) इति निष्ठातकारस्य, धातुदकारस्य च नकारः।
2. 'विभाषा भावादिकर्मणोः' (7-2-17) इति इड्विकल्पः। 'निष्ठा शीङ्**स्विदि**—' (1-2-19) इति सेटो निष्ठायाः कित्त्वनिषेधः।
3. ण्यन्तात् सनि उप्रत्यये रूपमेवम्। 'सः **स्विदि**—' (8-3-62) इति अभ्यासात् परस्य सकारः। 'स्तौतिण्योरेव षणि—' (8-3-61) इत्यस्यापवादः।



(1897) "सङ्ग्राम युद्धे" (X-चुरादिः-1922. अक. सेट्. आत्म.)

**अदन्तः।**

"—'भृशादिभ्यः—' (3-1-12) इत्यत्र **कैयटे**—'**संग्रामयतिरनुदात्तेद्** बोद्धव्यः' इति। **पदमञ्जर्यां** च 'अनुदात्तेदयं **संग्रामयतिरिष्यते**' इति। तथा च तत्र **भाष्यमपि** '**असंग्रामयत** शूरः' इति। संग्रामशब्दात् 'तत्करोति' (ग. सू. चुरादिः) इति णिचापि सिद्धाविह संग्रामस्य पाठः-सोपसर्गात् संघातात् प्रत्ययार्थः, तेन **असंग्रामयत** इत्युपसर्गात् पूर्वमड् भवति। तथा **संग्रामयित्वा** इत्यत्राधीत्येत्यादिवल्ल्यब् न भवति। **सिसंग्रामयिषते** इत्यत्र समो द्वित्वं भवति। नन्वयमनुदात्तेत्त्वार्थमवश्यं पठनीयः इति कथं संघातादुत्पत्त्यर्थः? एवमपि 'ग्राम युद्धे' इत्येतावति पठ्यमानेऽप्यर्थस्वाभाव्यादिङ्कोरधिवत् संपूर्वत्वे लब्धे संघातपाठस्योपसर्गादुत्पत्त्यर्थ एव। अत एव संघातादुत्पत्तिवचनादन्यत्र धातूपसर्गसमुदायात् प्रत्यये विधित्सिता उपसर्गाः पृथक् क्रियन्त इति ज्ञाप्यते" इति **माधवः**। सर्वाण्यपि रूपाणि **ग्रामयति**वत् (442) ज्ञेयानि।

(1898) "सत्र सन्तानक्रियायाम्"

(X-चुरादिः-1906-सक. सेट्. आत्म.) **अदन्तः**। 'सत्र—' इति **क्षीरस्वामी**। सत्रकः-त्रिका, सिसत्रयिषकः-षिका; सत्रयिता-त्री, सिसत्रयिषिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कत्रयति**वत् (161) ज्ञेयानि।

(1899) "सभाज प्रीतिदर्शनयोः"

(X-चुरादिः-1888. सक. सेट्. उभ.) **अदन्तः**।

'—प्रीतिदर्शने' इति **क्षीरस्वामी**। '—प्रीतिसेवनयोः' इत्यन्ये। सभाजनम्, सभाजना, सभाजकः, सभाजः। सभाजयन् इति शतरि रूपम्। सर्वाण्यपि रूपाणि चौरादिक**कालयति**वत् (185) ज्ञेयानि।

(1900) "सश्च गतौ" (I-भ्वादिः-202. सक. सेट्. पर.)

भ्वादिषु षस्जधातुप्रकरणे **माधवीये**ऽभिहितम्—"अत्र **सश्चिमपि केचित्** पठन्ति;—'तमजिह्वा **असश्चत**' इत्यादि च दृश्यते" इति। "चान्तोऽयं(षस्ज) इति **शिवः—सश्चति**" इति **क्षीरस्वामी**। 'अति नः **सश्चतो**

नय' (ऋक् 1-42-7) इति चान्तप्रयोगोऽपीति **तट्टीका**। तन्मतेन धातुरयं लिख्यते।

सश्वकः-श्विका, सश्वकः-श्विका, सिसश्विषकः-षिका, सासश्वकः-श्विका; सश्विता-त्री, सश्वयिता-त्री, सिसश्विषिता-त्री, सासश्विता-त्री; इत्यादीनि रूपाणि यथासम्भवमूह्यानि।

(1900-A) "**समी परिणामे**" (IV-दिवादिः-1221. अक. सेट्. पर.)

**परिणामो**-विकारः इति **क्षीरस्वामिदीक्षितादयः**। **सर्वे**ऽपि 'मसी—' इति पठित्वा '**समी इत्येके**' इति पठन्ति। सर्वाण्यपि रूपाणि भौवादिक**ग्रसति**वत् (440) ज्ञेयानि।

(1901) "**सातिः सुखे**" (I-भ्वादिः....सक. सेट्. पर.)

"**सातिः** सौत्रो धातुः' इति **वृत्तौ** (3-1-138)। **बोधिन्यासे**ऽपि '**सातिः** सुखे वर्तते सौत्रः' इति। **जिनेन्द्रहरदत्तौ** '**साति**र्हेतुमण्ण्यन्तः' इति।" इति **मा-धातुवृत्तिः**। सर्वत्र '**सातिः**' इति इका निर्देशः, न तु इदित्। '**सात**' इत्येव धातुस्वरूपम्। तस्यायं भावः-यदि भ्वादिः स्यात् '**सत**' इति पठितव्यम्, यतः '**सातिः**' इति पठ्यतेऽतोऽयं चुरादिरिति। **सातयः**—'अनुपसर्गाल्लिम्प-विन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' (3-1-138) इति शप्रत्यये, प्रत्ययस्य शित्त्वात् शपि, पररूपे, णेरयादेशे च रूपमेवम्। **सातयः**=सुखी। सर्वाण्यपि रूपाणि **काश्वति**वत् (184) ज्ञेयानि।

(1902) "**साध संसिद्धौ**" (V-स्वादिः-1261. अक. अनि. पर.)

साधकः-धिका, साधकः-धिका, [1]सिसात्सकः-त्सिका, सासाधकः-धिका; साद्धा-साद्ध्री, साधयिता-त्री, सिसात्सिता-त्री, सासाधिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि दैवादिक**क्षुध्यति**वत् (315) ज्ञेयानि। ण्यन्तात् नन्द्यादित्वात् ल्युप्रत्यये साधनः, औणादिके [द. उ. 1-86] उण्प्रत्यये साधुः इति रूपम्।

1. अत्र 'आदेशप्रत्यययोः' (8-3-59) इति षत्वे **सिषात्सकः** इति रूपमाह **माधवः**। वस्तुतोऽत्र प्रयोगे आदेशभूतसकारस्य, प्रत्ययावयवसकारस्य वा अभावात् इणः परत्वेऽपि षत्वं नैव प्राप्तमिति चिन्त्यमिदम्।



[1]मातरि साधुः। तुमुनि-प्रसाधयितुम्[A]।

(1903) "**साम सान्त्वप्रयोगे**"

(X-चुरादिः-1880. सक. सेट्. उभ.) **कथादिः अदन्तश्च**।

'—सान्त्वने इति **क्षीरस्वामी**' इति **माधवः**। **तरङ्गिण्यां** तु '—सान्तने। **सान्तनं**=प्रीणनम्' इत्येव दृश्यते। **चान्द्र**मते '—सान्त्वप्रयोगे' इति च **तत्रो**क्तम्। चुरादावेव 'साम सान्त्वने' इति पूर्वत्र (१०।२९) पठितस्यापि एवमेव रूपाणि। सर्वाण्यपि रूपाणि **कालयति**वत् (185) ज्ञेयानि। **साम**।

(1904) "**साम्ब सम्बन्धे**" (X-चुरादिः-1556. अक. सेट्. उभ.)

**धातुवृत्तौ** "'षम्ब—' इति पठित्वा '**शम्बेत्येके**' इति **स्वामी**। **साम्ब** इति **केचित्** दन्त्यादिं दीर्घवन्तं च पठन्ति।" इत्युक्तम्। **तरङ्गिण्यां** 'साम्ब—' इति पठितम्। 'शम्बेति **चन्द्रः**' इति च **तत्रो**क्तम्।

साम्बकः-म्बिका, सिसाम्बयिषकः-षिका; साम्बयिता-त्री, इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**पक्षयति**वत् (956) ऊह्यानि। साम्बः।

(1905) "**सार दौर्बल्ये**" (X-चुरादिः-1869. अक. सेट्. उभ.)

**अदन्तः**।

**दुर्गमाधवदीक्षितादयः** एवं पठन्ति। **तरङ्गिण्यां** तु तालव्यादित्वेन पठ्यते। सर्वाण्यपि रूपाणि चौरादिक**कालयति**वत् (185) बोध्यानि। सारः=रसः संसारः। शतरि-[B]सारयन्।

(1906) "**सीकृ सेचने**" (I-भ्वादिः-सक. सेट्. आत्म.)

"धातुरयं दन्त्यादिः इति **धनपालकाश्यपौ**। अत एव षोपदेशलक्षणे 'सृपिसृजि....**सीकृ**सेकृसृवर्जम्' (6-1-56) इति तौ पेठतुः। **पुरुषकार**स्तु

1. "'**साध्वसाधु**प्रयोगे सप्तमी वक्तव्या' (वा. 2-3-43) इति सप्तमी। अनर्थक-मिदं **वार्त्तिकम्**। अर्चायां तु 'साधुनिपुणाभ्यामर्चायाम्' (2-3-43) इत्येव सिद्धम्। तस्मादत्र अर्चाग्रहणं निपुणार्थं संपद्यते। '**साधुर्भृत्यो राज्ञः**' इत्यत्र भृत्यापेक्षया षष्ठी, न साध्वपेक्षयेति **वाक्यार्थज्ञा** आहुः' इति **कैयटादौ** प्रतिपादितम्" इति **माधवः**।

A. '........धाराः **प्रसाधयितु**मभ्यतिकीर्णरूपाः।' शि. व. 5-60.

B. 'वहकमहितं नर्म्दं बद्ध्वाऽस्य **सारयतो** धनम्—।' धा. का. 3-54.

तत्र मृष्यति, यदाह—"सीक इत्यार्या इति धनपालः।" इति **धातुवृत्तिः**। **क्षीरतरङ्गिण्याम्** अयं नोपलभ्यते। सर्वाण्यपि रूपाणि भौवादिक**कीलति**वत् (195) ऊह्यानि।

(1907) "**सुख तत्क्रियायाम्**" (X-चुरादिः-1929. अक. सेट्. उभ.)

**अदन्तः।**

तत्क्रिया=तदनुभवः। तच्छब्देन सुखदुःखप्रातिपदिकार्थौ निर्दिश्येते। "'प्रातिपदिकाद् धात्वर्थे' (ग. सू. चुरादिः) इति सिद्धे इहानयोः पाठस्सोपसर्गात् प्रत्ययार्थः" इति **मैत्रेयः**। सर्वाण्यपि रूपाणि चौरादिक**दुःखयति**वत् (849) ऊह्यानि।

(1908) "**सुट्ट अनादरे**" (X-चुरादिः-1562-A. सक. सेट्. उभ.)

**क्षीरस्वामिसम्मतः** पाठोऽयम्। तत्र '**चन्द्रदुर्गौ** षोपदेशान् सुट्टादीन् मन्येते—सुषुट्टयिषति' इति दृश्यते।

'षट्ट स्फिट्ट हिंसायाम्' इति पठित्वा "**केचित्** द्वितीयं षुट्टेत्युकारवन्तमनोष्ठ्यं च पठन्ति। अस्माभिस्तु **मैत्रेयादीना**मनुसारेण पूर्वमेव षुट्टिः पठित इतीह न लिखितः, तदनुरोधादेवेह स्फिट्टिश्च पठितः।" इति **माधवीयधातुवृत्तावुक्तम्**। 'षट्ट—' इति **सि. कौमुदी**। सर्वाण्यपि रूपाणि **कुट्टयति**वत् (207) ज्ञेयानि।

(1909) "**सूच पैशुन्ये**" (X-चुरादिः-1874. अक. सेट्. उभ.)

**अदन्तः।**

सर्वाण्यपि रूपाणि चौरादिक**कूटयति**वत् (240) ऊह्यानि। सूचकः-चिका, सुसूचयिषकः-षिका; '**सूचि**सूत्रि—' (वा. 3-1-22) इत्यादिना अनेकाच्त्वेऽपि यङि [1]सोसूचकः; सूचयिता-त्री, सुसूचयिषिता-त्री, सोसूचिता-त्री; इति रूपाणि **कत्रयति** (161) वत् यथासम्भवमूह्यानि। सूचकः, [2]सूची, सूचिः, विषूचिका, [3]सूक्ष्मम् इमानि अधिकान्यत्रेति विशेषः।

1. '**सूचि**सूत्रि—' (वा. 3-1-22) इति यङ्; अनेकाच्त्वादप्राप्ते सति **वार्तिकेन** प्राप्तिः। अजन्तलक्षणस्यैकाज्विषयत्वादषोपदेशत्वात् उत्तरखण्डे न षत्वम्।
2. पचादिगणपाठात् (3-1-134) **सूची** इति भवति।
3. औणादिके (द. उ. 7-41) स्मन्प्रत्यये रूपमेवम्। सूचयति सूच्यते वा **सूक्ष्मम्**=अणुः।



(1910) "**सूत्र वेष्टने** (X-चुरादिः-1908. सक. सेट्. आत्म.)

**अदन्तः।**

'—विमोचने' इति **केचित्**। **विमोचनम्**=मोचनाभावः। ग्रन्थने इति **परे**। सूत्रकः-त्रिका, सुसूत्रयिषकः-षिका; [1]सोसूत्रकः-त्रिका; सूत्रयिता-त्री, सुसूत्रयिषिता-त्री, सोसूत्रिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कत्रयति**वत् (161) ज्ञेयानि।

(1910-A) "**सूद क्षरणे**" (X-चुरादिः-1668. अक. सेट्. उभ.)

'**षूद**' इति षोपदेशत्वेन **केचित्** पठन्ति। **केचित्** '—आश्रवणे' इति पठन्ति। [2]मधुसूदनः, [3]सूदः, [4]सूदिता-त्री, इति विशेषरूपाणि। सामान्यरूपाणि सर्वाण्यपि चौरादिक**केतयति**वत् (260) बोध्यानि।

(1911) "**सूर्क्ष आदरे**" (I-भ्वादिः-666.सक. सेट्. पर.)

**धातुकाव्य-सि.कौमुदी-काशकृत्स्नीयेषु** पठितः।

'ईर्ष्यायाम**ादरे** चार्थे क्रमात् सूर्क्ष्यति **सूर्क्षति**॥' (श्लो. 170) इति **देवः**। **धातुवृत्तौ** "—षूर्क्ष—' इति पठित्वा 'आदरानादरे' इति **क्वचित्** पठ्यते। तदसत्; 'सोमेन यक्ष्यमाणो नर्तून् **सूर्क्षन्** नक्षत्रम्' इति दर्शनात्। सोमेन यक्ष्यमाणो 'वसन्ते ब्राह्मणोऽग्नीनादधीत। उत्तरयोः फल्गुन्योरग्निमादधीत' इत्यादि[उदित]ऋतुनक्षत्राणि नाद्रियेत इति सूत्रार्थः। तथा—'अवहेडनम**सूर्क्षणम्**' (अमरः नाट्यवर्गे) इति दृश्यते। **सूर्क्षणम्**=आदरः ततोऽन्यद**सूर्क्षणम्** अनादरः" इति उक्तमत्र अनुसन्धेयम्। **क्षीरतरङ्गिण्याम्** 'सूर्क्ष्य अनादरे' **षान्तो**ऽयमिति **चन्द्रः**' इति च दृश्यते। **सायणेन** 'अनादरे' इति पाठो दूषितः। सर्वाण्यपि

1. अनेकाच्त्वात् यङोऽप्राप्तिः। अतः 'सूचि**सूत्रि**—' (वा. 3-1-22) इति यङ्। अषोपदेशत्वात् उत्तरखण्डे न षत्वम्।
2. मधुं सूदयतीति **मधुसूदनः**=विष्णुः। कर्मण्युपपदेऽणं बाधित्वा नन्द्यादिषु (3-1-134) पाठात् कर्तरि ल्युः।
3. सूदयतीति **सूदः**=पाचकः।
4. अनित्यण्यन्तत्वात् चुरादीनां णिजभावपक्षे अनुदात्तेत्त्वपक्षे '**सूद**दीपदीक्षश्च' (3-2-153) इति निषेधात् न युच्प्रत्ययः। 'तृन्' (3-2-135) इति तृन्नेव इति **केचित्**। वस्तुतो णिजभावपक्षे 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदस्यैवानुशासनात् न युचः प्रसक्तिः, न वा युचो निषेधस्येति बोध्यम्।

रूपाणि भौवादिकचूषतिवत् (552) बोध्यानि । ण्यति[A]सूक्ष्यम् ।

(1912) "**सूक्ष्यँ ईर्ष्यार्थः**" (I-भ्वादिः-509. अक. सेट्. पर.)

'ईर्ष्या=कामजमसहनम्' इति **क्षीरस्वामी**।

'**ईर्ष्याया**मादरे चार्थे क्रमात् **सूक्ष्यति** सूक्षति ॥' (श्लो. 170) इति **देवः**।

सूक्ष्यकः-सूक्ष्यकः-सूक्ष्यिका, सुसूक्ष्यिषकः-षिका, सोसूक्ष्यकः-क्ष्यिका ; सूक्ष्यिता-त्री, सूक्ष्ययिता-त्री, सुसूक्ष्यिषिता-त्री, सोसूक्ष्यिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि **दक्षति** (692) वत् ज्ञेयानि ।

(1913) "**सृ गतौ**" (I-भ्वादिः-935. सक. अनि. पर.)

अयं धातुः अर्थभेदेन अकर्मकः सकर्मकोऽपि दृश्यते ।

'**गतौ** ससर्ति **सरति** स्त्रु **शपो**र्धावति क्वचित् ।' (श्लो. 30) इति **देवः**।

सारकः-रिका, सारकः-रिका, [1]सिसीर्षकः-र्षिका, [2]सेस्रीयकः-यिका ; सर्त्ता-त्री, सारयिता-त्री, सिसीर्षिता-त्री, सेस्रीयिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि जौहोत्यादिक**पिपर्त्ति**वत् (1044) ज्ञेयानि । [3]धावन्-सरन्-न्ती, [4]सरकः, अति(ती)सारकी, [5]सूर्यः, [6]पुरःसरः-अग्रतःसरः-[B]अग्रेसरः,

1. सन्नन्ते 'अज्झनगमां सनि' (6-4-16) इति दीर्घे 'सन्यतः' (7-4-79) इतीत्वे रपरत्वे, 'हलि च' (8-2-77) इति दीर्घे, द्विर्वचने च रूपमेवम् ।
2. यङन्ते 'रीङ् ऋतः' (7-4-27) इति रीङादेशे रूपमेवम् ।
3. शतरि 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्त्ति—' (7-3-78) इत्यादिना प्रकृतेः धावादेशे **धावन्** इति भवति । '**सर्त्तेः** वेगितायां गतौ **धावा**देशमिच्छन्ति । अन्यत्र सरति अनुसरतीत्येव भवति' इति **काशिका** (7-3-78)। तेन **अनुसरन्-सरन्** इत्यप्यर्थविशेषे साधुरेव ।
4. '**सृ**ल्वः समभिहारे वुन्' (3-1-149) इति वुन्प्रत्यये रूपमेवम् । साधु सरतीति **सरकः**। **सरकः** पानपात्रमिति **केचित्**।
5. 'राजसूय**सूर्य**—' (3-1-114) इति क्यपि उत्वे च रूपम् । अथवा सुवते रुडागमे रूपमेवम् ।
6. पुरः सरतीति 'पुरोऽग्रतोऽग्रेषु **सर्त्तेः**' (3-2-18) इति टप्रत्यये रूपम् । एवं **अग्रतःसरः, अग्रेसरः** इत्यादौ । 'तत्पुरुषे कृति—' (6-3-14) इति सप्तम्या अलुक् । अत्र **न्यासकारात्रेयाभ्याम्** 'अग्रे इत्येकारान्तत्वं निपातनात्' इत्युक्तम् । 'अग्रस्सरति, अग्रेण सरतीत्यादावपि एकारान्तत्वं फलम्' इति च । एवं हि 'सवरुणावरुणा**ग्रसरं** रुचा' 'आयोधना**ग्रसरतां** त्वयि वीर जाते' इत्यादयः प्रयोगाश्चिन्त्याः स्युः ।

A. '**सूक्ष्य** त्वदीक्षा चिरकाङ्क्षिता नः ...... ।' धा. का. 1-85.
B. '**अग्रेसरो** जघन्यानां मा भूः **पूर्वसरो** मम ॥' भ. का. 5-97.



[1]पूर्वसरः, [2]परिसारी, [3]विसारी,[A] अनुसारी, [4]प्रसारी, [5]उदासारी, प्रत्यासारी, [6]सरणः, [7]सृमरः[B], सारणा, सारणी, [8]सृत्वरः-[C]सृत्वरी, [9]चन्दनसारः, अतीसारः, विसारः, [10]उपसरो गवाम्, [11]उपसर्या[D] गौः, [12]आसारः, [13]सारः, प्रसारः,

1. पूर्वः सरतीति कर्तृवाचिनि पूर्वशब्दे उपपदे 'पूर्वे कर्तरि' (3-2-19) इति टप्रत्ययो भवति । पूर्वं देशं सरतीति **पूर्वसारः**। अत्र कर्तृभिन्नार्थे अण् ।
2. 'संपृचानुरुध...सृ—' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्ययो भवति । तेन रूपमेवम् ।
3. विसरतीति=**विसारी**। णिनिप्रत्ययः । '**विसारिणो** मत्स्ये' (5-4-16) इति स्वार्थेऽण्प्रत्यये रूपम् । अणन्तस्यैव प्रयोगः ।
4. प्रशब्द उपपदे 'प्रे लप**सृ**—' (3-2-145) इति घिनुण्प्रत्ययः ।
5. 'उत्प्रतिभ्यामाङि **सर्त्तेः**—' (वा. 3-2-78) इति णिनिप्रत्यये रूपमेवम् । एवं **प्रत्यासारी** इत्यादावपि ।
6. 'जुचङ्क्रम्यदन्द्रम्य**सृ**—' (3-2-150) इति तच्छीलादिषु कर्तृषु युच्प्रत्ययः ।
7. '**सृ**घस्यदः क्मरच्' (3-2-160) इति तच्छीलादिषु कर्तृषु **क्मरच्**प्रत्यये रूपमेवम् ।
8. 'इण्नशिजि**सर्त्ति**भ्यः—' (3-2-163) इति तच्छीलादिषु कर्तृषु क्वरप्प्रत्ययः । 'टिड्ढाणञ्—' (4-1-15) इति ङीपि **सृत्वरी** इति रूपम् ।
9. '**सृ** स्थिरे' (3-3-17) इति स्थिरे कर्तरि घञ्प्रत्ययः । '**स्थिर** इति कालान्तरस्थायी पदार्थ उच्यते । स चिरं तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्त्ता' इति **काशिकायाम्** (3-3-17)। **अतीसारः** इत्यत्र 'व्याधिमत्स्यबलेष्विति वक्तव्यम्' (वा. 3-3-17) इति घञ् । 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घश्च । **अतीसारः**=व्याधिः । विविधं सरतीति **विसारो**=मत्स्यः । **सारो** बलम् । खदिरं सारयतीति **खदिरसारः** ; अन्तर्भावितण्यर्थोऽत्रायम् धातुः इति **भाष्ये** (3-3-17) स्पष्टम् ।
10. 'प्रजने **सर्त्तेः**' (3-3-71) इत्यप्प्रत्ययः । **उपसरो** गवाम्=प्रथमं स्त्रीगवीषु पुंगवानां गर्भाधानाय नियोजनम् **उपसरण**मुच्यते ।
11. '**उपसर्या** काल्या प्रजने' (3-1-104) इत्युपपूर्वात् यत्प्रत्ययान्तो निपात्यते ।
12. 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति करणाधिकरणयोर्घप्रत्ययः ।
13. 'भावे' (3-3-18) ; 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति भावे वाच्ये, कर्मवर्जिते कारके संज्ञायां विषये च घञ्प्रत्यये रूपमेवम् । एवं **प्रसारः, संसारः** इत्यादिषु च ज्ञेयम् ।

A. 'पतत्यधो धाम **विसारि** सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥' शि. व. 1-2.
B. '**सृमरो**ऽभङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ।' भ. का. 7-22.
C. 'कीर्तिं मनस्तापहृतं **विसृत्वरीं**...... ।' वा. वि. 1-47.
D. 'वृषो यथो**पसर्याया** गोष्ठे गोदण्डताडितः ॥' भ. का. 6-53.

संसारः, [1]परिसर्या, [2]सस्रिः ; [3]सारथिः, [4]सृकः, [5]सरण्डः, [6]सृणीकः, [7]सृमाकुः, [8]सरीमा, [9]अप्सरसः, [10]सरित्, [11]सरणिः , [12]सरट्, सरंटः, [13]सरयुः-सरयूः, इत्यादिकानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1914) " **सृ गतौ** " ( III-जुहोत्यादिः-1434. सक. अनि. पर.)

सर्वाण्यपि रूपाणि **विपर्ति**वत् (1044) ऊह्यानि ।

(1915) " **सृज विसर्गे** " (IV-दिवादिः-1178. सक. अनि. आत्म.)

'—**सर्गे सृज्यते** सृजतीति च ।' (श्लो. 62) इति **देवः** ।

सर्वाण्यपि रूपाणि भौवादिक**मृजू**धातुवत् (1302) ज्ञेयानि । [14]स्रष्टा,

---

1. परितः सरणं **परिसर्या** । 'इच्छा' (3-3-101) इत्यत्र 'परिचर्या**परिसर्या**—' (वा. 3-3-101) इति स्त्रियां भावे शे यकि टापि च रूपमेवम् । गुणोऽपि निपात्यते ।
2. 'भाषायां धाञ्कृञ्स्सृ—' (3-2-171) इति तच्छीलादिषु कर्तृषु किकिनौ, लिड्वद्भावात् द्विर्वचनं च ।
3. औणादिके [द. उ. 1-43) णथिन्प्रत्यये रूपमेवम् । णित्त्वात् उपधावृद्धिः ।
4. '**सृवृ**—' [द. उ. 3-19] इति कप्रत्ययः । किच्च भवति । **सृकः**=वायुः ।
5. औणादिके (द. उ. 5-9) अण्डन्प्रत्यये रूपमेवम् । **सरण्डः**=वायुः, भूतसंघातश्च ।
6. औणादिके (द. उ. 3-42) ईकन्प्रत्यये नुगागमे च रूपमेवम् । किच्च भवति । **सृणीकः**=वायुः ।
7. औणादिके (द. उ. 1-151) काकुप्रत्यये मुगागमे च रूपम् । **सृमाकुः**=मृगजातिः ।
8. '**हृभृधृसृ**—' (द. उ. 6-76) इति ईमनिन्प्रत्ययः च्छन्दसि विषये । **सरीमा**=कालः ।
9. अप्छब्द उपपदे धातोः असुन्प्रत्यये (द. उ. 9-101) रूपमेवम् । अद्भ्यः सृता इत्यप्**सरसः**=देवयोषितः ।
10. '**ह्रसृ**—' (द. उ. 6-3) इति इतिप्रत्यये रूपम् ।
11. '**अर्तिसृ**—' (द. उ.1-2) इत्यनिप्रत्यये णत्वे च रूपमेवम् । **सरणिः**=ईषद्गतिः पन्थाः ।
12. औणादिके (द. उ. 5-10) अडिप्रत्यये रूपम् ।
13. औणादिके (द. उ. 1-136) अयुप्रत्यये रूपम् , सरति सिसर्ति वा **सरयुः**=नदी वायुर्वा । **सरयूः**=इति दीर्घान्तोऽपि ।
14. '**सृजि**दृशोः—' (6-1-58) इति अमागमो भवति । लघूपधगुणापवादोऽयमागमः । 'व्रश्चभ्रस्ज**सृज**—' (8-2-36) इत्यादिना जकारस्य षकारः ; तृचस्तकारस्य ष्टुत्वेन टकारः ।



[1]पाणिसर्ग्या रज्जुः, [2]समवसर्ग्या, [3]स्रक् , [4]सृज्वा इमानि रूपाणि इति विशेषः । सनि [5]सिसृक्षकः-क्षिका इति रूपम् । यङि [6]सरीसृजकः-जिका इति रूपम् ।

(1916) " **सृज विसर्गे** " (VI-तुदादिः-1414. सक. अनि. पर.)

' ....**सर्गे** सृज्यते **सृजतीति** च ।' (श्लो. 62) इति **देवः** ।

मुण्डकोपनिषदि (1-1-7) **सृजते** इति प्रयोगात् आत्मनेपदमपि इति ज्ञेयम् ।

सर्जकः-जिका, सर्जकः-जिका, [7]सिसृक्षकः-क्षिका, सरीसृजकः-जिका ;

इत्यादीनि रूपाणि सर्वाण्यपि आदादिकशुद्ध्यर्थक**मृजू** (1302) धातुवत् ऊह्यानि ।

[8]सृज्यम्, [9]संसर्गी[A], [10]पाणिसर्ग्या रज्जुः, अवसर्गः-विसर्गः, उपसर्गः,

---

1. 'पाणौ **सृजे**र्ण्यत्—' (वा. 3-1-110) इति ण्यत्प्रत्ययः, ऋदुपधलक्षणस्य क्यपोऽपवादः । 'चजोः—' (7-3-52) इति कुत्वम् । पाणिभ्यां सृज्यते इति **पाणिसर्ग्या** रज्जुः ।
2. 'समवपूर्वाच्च' (वा. 3-1-110) इति सम्, अव इत्युपसर्गयोरुपपदयोः **सृजेः** ण्यत् भवति ।
3. 'ऋत्विक्दधृक्**स्रक्**—' (3-2-59) इति धातोः कर्मणि क्विन्प्रत्ययः अमागमश्च निपात्यते । तेन रूपमेवम् । सृजन्ति तामिति **स्रक्** माला ।
4. '**सृजे**रम् च' (द. उ. 6-67) इति क्वनिप्प्रत्ययः, अमागमश्च । सृजति सृज्यते वा **सृज्वा**=तन्तुसृक् । प्रत्ययस्य कित्वात् अमागमेऽप्राप्ते विधानार्थम् सूत्रे 'अम् च' इत्युक्तम् ।
5. 'हलन्ताच्च' (1-2-10) इति सनः कित्वात् अमागमो न, नापि गुणः । 'व्रश्चभ्रस्ज-**सृज**—' (8-2-36) इति जकारस्य षत्वे, 'षढोः कः सि' (8-2-41) इति तस्य ककारे, 'इण्कोः—आदेशप्रत्यययोः' (8-3-58 ; 59) इति सनः सकारस्य षकारे च रूपमेवम् ।
6. यङन्ते सर्वत्र 'रीग् ऋदुपधस्य च' (7-4-90) इति रीगागमः ।
7. 'हलन्ताच्च' (1-2-10) इति सनः कित्वान्नामागमः, नापि गुणः ।
8. 'ऋदुपधात्—' (3-1-110) इति क्यपि रूपमेवम् ।
9. 'संपृचानुरुधाङ्यमाङ्यसपरिसृ**संसृज**—' ( 3-2-142 ) इति तच्छीलादिषु कर्तृषु घिनुण्प्रत्यये 'चजोः—' (7-3-52) इति कुत्वे च रूपमेवम् ।
10. पाणिभ्यां सृज्यते इति **पाणिसर्ग्या** रज्जुः । 'पाणौ **सृजेः**—' (वा. 3-1-110) इति ण्यति, 'चजोः—' (7-3-52) इति कुत्वे च रूपमेवम् ।

A. '**संसर्गी** परिदाद्वीव शीतोऽप्याभाति शीकरः ।' भ. का. 7-8,

स्रष्टा, सृष्टिः[A], [1]स्रक्, [2]रज्जुः, इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1917) " **सृन्भु हिंसार्थः** " (I-भ्वादिः-757. सक. सेट्. पर.)

'षृन्भु—' इति **मैत्रेयःसायणौ**। '—भर्त्सनहिंसयोः' इति **काशकृत्स्नः**। 'सृन्भ—' इति **क्षीरस्वामिचन्द्रजैनकातन्त्रशाकटायनहेमचन्द्रादयः** पठन्ति। सर्वाण्यपि रूपाणि भौवादिक**तृम्फति**वत् (768) ज्ञेयानि। 'एतावपि अषोपदेशौ ; '**सृ**वर्जम्' (भाष्ये 6-1-64) इत्यनेनानर्थकस्यापि ग्रहणात्' इति **तरङ्गिण्या**मुक्तम्।

(1918) " **सृप्लृ गतौ** " (I-भ्वादिः-183. सक. अनि. पर.)

सर्पकः-र्पिका, सर्पकः-र्पिका, सिसृप्सकः-प्सिका, सरीसृपकः-पिका ;
[3]सर्प्ता-त्री-स्रप्ता-प्त्री, सर्पयिता-त्री, सिसृप्सिता-त्री, सरीसृपिता-त्री ;
इत्यादिकानि रूपाणि सर्वाण्यपि आदादिकशुद्ध्यर्थकमृजू(1302) धातुवज्ज्ञेयानि।
यङन्तात् पचाद्यचि-[4]सरीसृपः; [5]सृप्यः, [6]सर्पः, [7]पीठसर्पी, [8]सर्पिः, प्रियसर्पिष्कः, [9]सृप्रः, इमानि रूपाण्यधिकान्यत्रेति विशेषः।

---

1. सृजति तामिति 'ऋत्विक् दधृक्स्रक्—' (3-2-59) इति क्विन्प्रत्ययः अमागमश्च निपात्यते।
2. '**सृजे**रसुं च' (द. उ-1-100) इति धातोरुप्रत्ययः, असुं इति प्रकृतेः आगमः, आदिलोपश्च।
3. 'अनुदात्तस्य च ऋदुपधस्यान्यतरस्याम्' (6-1-59) इत्यनेन पाक्षिकोऽमागमः। अमो मित्त्वादन्त्यादचः परो भवति। अयं च अमागमः किद्भिन्नेषु प्रत्ययेष्वेव बोध्यः। अम्पक्षे **स्रप्ता-स्रप्त्री** इति रूपम्। अमभावपक्षे **सर्प्ता-सर्प्त्री** इति रूपम्। एवं तव्यदादिष्वपि रूपद्वयं बोध्यम्।
4. 'यङोऽचि च' (2-4-74) इति यङो लुकि 'न धातुलोपः—' (1-1-4) इति निषेधात् लघूपधगुणाभावः।
5. 'ऋदुपधाच्च—' (3-1-110) इति क्यपि रूपमेवम्।
6. सर्पतीति **सर्पः**। पचाद्यचि रूपमेवम्।
7. पीठेन सर्प्तुं शीलमस्येति 'सुप्यजातौ णिनिः—' (3-2-78) इति ताच्छील्ये णिनिप्रत्यये रूपमेवम्।
8. औणादिके (द. उ. 9-30) इसिप्रत्यये रूपमेवम्। **सर्पिः**=घृतम्।
9. 'ऋज्रेन्द्र—' (द. उ. 8-31) इत्यादिना रक्प्रत्यये रूपमेवम्। **सृप्रम्**=मधु, **सृप्रा**=नदी।

A. 'इयं दानवराज्यस्य पूः **सृष्टि**र्विश्वकर्मणः॥' भ. का. 7-67.



(1919) " **सृभु हिंसार्थः** " (I-भ्वादिः- .... सक. सेट्. पर.)

[1]**क्षीरस्वामि**सम्मतः पाठोऽयम्। सर्भति। 'षृभृ—' इति **सायणः**। सर्वाण्यपि रूपाणि **तर्णो**तिवत् (766) ज्ञेयानि।

(1920) " **सेकृ गतौ** " (I-भ्वादिः-81. सक. सेट्. आत्म.)

दन्त्यादिरयम् इति प्रायेण **सर्वे** पठन्ति। '**अन्ये** 'षेकृ' इति विकल्पेन षोपदेशकार्यार्थं पेठुः' इति **तरङ्गिण्याम्**। सर्वाण्यपि रूपाणि भौवादिक**केपति**वत् (261) ज्ञेयानि।

(1921) " **सेलृ गतौ** " (I-भ्वादिः- .... सक. सेट्. पर.)

"अत्र **क्वचित्** 'सेलृ' इत्यपि पठ्यते। **सेलति**स्तु दन्त्यादेः पाठः षोपदेशपर्युदासवाक्येऽनुपादानादनार्षः। मूर्द्धन्यादिस्तु 'सेलुः=श्लेष्मातकः' इत्यादिदर्शनाद् ग्राह्यः।" इति **माधवाचार्याः**। **तरङ्गिण्यां** 'शेलृ' इति पठित्वा '**केचित्** सेलृ....' इति दृश्यते। सर्वाण्यपि रूपाणि भौवादिक**केलति**वत् (262) ज्ञेयानि।

(1922) " **स्कन्दिर् गतिशोषणयोः** " (I-भ्वादिः-979. सक. अनि. पर.)

'—शोषणे' इति **स्वामी**। **अन्ये सर्वे** '—गतिशोषणयोः' इत्येव पठन्ति। स्कन्दकः-न्दिका, स्कन्दकः-न्दिका, [2]चिस्कन्त्सकः-त्सिका, [3]चनीस्कन्दकः-न्दिका ; इत्यादीनि रूपाणि सर्वाण्यपि '**णिजिर्**' (673) धातुवत् बोध्यानि।
निष्ठायाम् [4]विस्कन्नः, [5]स्कन्दः,

---

1. '...**सृ**वर्जम्' (भाष्यम् 6-1-64) इत्यत्र '**सृ**' इत्यनेनालाक्षणिकस्यानर्थकस्यापि ग्रहणम्-इति **क्षीरस्वाम्या**शयः।
2. सन्नन्ते 'शर्पूर्वाः खयः' (7-4-61) इति खयः शेषः। ककारस्य 'अभ्यासे चर्च' (8-4-54) इति चर्त्वेन चकारः। धातुरयमनिट्। धातुदकारस्य सनि परे 'खरि च' (8-4-55) इति चर्त्वेन तकारः। एवं सर्वत्र सन्नन्तेषु प्रक्रिया ज्ञेया।
3. यङन्ते, 'नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपद**स्कन्दाम्**' (7-4-84) इति अभ्यासे नीगागमः सर्वत्र बोध्यः।
4. निष्ठायाम्, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठातकार-धातुदकारयोर्नत्वम्। '**वेः स्कन्देरनिष्ठायाम्**' (8-3-73) इति पर्युदासात् न षत्वम्।
5. स्कन्दयति=शोषयति भक्तानां पापमिति, पचाद्यचि **स्कन्दः**=कार्तिकेयः।

[1]उत्कन्द:, [2]विष्कन्ता-विस्कन्ता, [3]परिष्कन्ता-परिस्कन्ता, [4]परिष्कण्ण:, परिस्कन्न:, [5]परिस्कन्द:, [6]स्कन्त्वा, प्रस्कन्द्य, [7]गेहावस्कन्दमास्ते । -गेहंगेहमवस्कन्दम् , गेहमवस्कन्दमवस्कन्दम् , गेहंगेहमवस्कन्द्य,

1. **उत्कन्दति**=शोषयति इति **उत्कन्दः** रोगविशेषः । उत्पूर्वकात् **स्कन्देः** पचाद्यच् । 'रोगाख्यायां ण्वुल् बहुलम्' (3-3-108) इति ण्वुलोऽपवादः । 'रोगे चेति वक्तव्यम्' (वा. 8-4-61) इति वचनात् **स्कन्देः** सकारस्य पूर्वसवर्णस्तकारः । 'सवर्णग्रहणसामर्थ्यात् इह (8-4-65) संख्यातानुदेशो न भवति; (तेन) सवर्णमात्रे लोपो विज्ञायते ।' इति **काशिकादि**षूक्तत्वात् एकस्य तकारस्य प्रयोगे न श्रवणम् इत्याहुः । वस्तुतस्तकारद्वयस्यैव '**उत्कन्दः**' इति श्रवणं न्याय्यं इति **भाष्यादिषु** स्पष्टमित्यलमत्र ।
2. विपूर्वकात् तृचि, धातुदकारस्य चर्त्वेन तकारे, 'झरो झरि सवर्णे' (8-4-65) इति तस्य लोपे, '**वेः स्कन्दे**रनिष्ठायाम्' (8-3-73) इति षत्वविकल्पे च रूपद्वयम् । 'झरो झरि—' (8-4-65) इत्यत्र 'अन्यतरस्याम्' इत्यनुवृत्तेर्लोपस्य पाक्षिकत्वं **विस्कन्त्ता—विष्कन्त्ता** इति च रूपद्वयमिष्टमिति ज्ञेयम् । एवं तव्यदादिष्वपि **विष्कन्तव्यम्—विस्कन्तव्यम्** इत्यादीनि रूपाण्यूह्यानि यथासम्भवम् ।
3. 'परेश्च' (8-3-66) इति षत्वविकल्पः । एवं तव्यदादिष्वपि बोध्यम् ।
4. 'निपरिभ्यां स्कन्देरनिष्ठायाम्' इत्यनुक्त्वा पृथग् 'परेश्च' (8-3-66) इति योगकरणात् **परिस्कन्नः—परिष्कण्णः** इत्यत्र परिपूर्वकात् स्कन्दतेर्निष्ठायां षत्वविकल्पो भवत्येवेति **काशिकादिषु** स्पष्टम् । तेनैवं रूपमिति बोध्यम् । निष्ठानत्वमुभयत्र समानम् । षत्वपक्षे णत्वमपि भवतीति विशेषः ।
5. परिपूर्वकात् **स्कन्दतेः** पचाद्यचि, प्राच्यभरतविषयत्वे वाच्ये '**परिस्कन्दः** प्राच्यभरतेषु' (8-3-75) इति निपातनात् षत्वाभावः । अन्यत्र **परिष्कन्दः** । **केचित्** परिपूर्वकात् **स्कन्दतेः** निष्ठायां निष्ठातकारलोपनिपातनमनेन सूत्रेण क्रियत इति व्याचख्युः ।
6. क्त्वायाम् , धातुदकारस्य चर्त्वे, 'झरो झरि—' (8-4-65) इति तकारस्य पाक्षिके लोपे च रूपमेवम् ।
7. 'विशिपतिपदि**स्कन्दां** व्याप्यमानासेव्यमानयोः' (3-4-56) इति णमुल् । क्रियया पदार्थानां अनवयवेन सम्बन्धः=**व्याप्यमानत्वम्** । तात्पर्यम्=**आसेवा** । द्रव्ये व्याप्तिः, क्रियायाम् आसेवा । 'तृतीयाप्रभृतीनि च' (2-2-21) इति समासविकल्पः । '**गेहावस्कन्द**मास्ते' इति समासेन व्याप्त्यासेवयोरुक्तत्वात् 'नित्यवीप्सयोः' (8-1-4) इति द्विर्वचनं न । असमासपक्षे व्याप्यमानतायां द्रव्यवचनस्य 'गेहंगेह**मवस्कन्द**मास्ते' इति द्विर्वचनम् । आसेव्यमानतायां तु 'गेह**मवस्कन्दमवस्कन्द**मास्ते' इति क्रियाया द्विर्वचनम् । "क्रियाभेदे क्त्वाऽपीष्यते इत्युक्तत्वात् 'गेहंगेह**मवस्कन्द्य**' इत्याद्यपि भवति" इति **माधवः** ।



[1]स्कन्धः, [2]कन्दुः, इमानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1923) "**स्कन्भुः**" (V-स्वादिः; IX-क्र्यादिः-सक. सेट्. पर.)

सौत्रोऽयं धातुः । 'स्तन्भुस्तुन्भु**स्कन्भु**स्कुन्भ्यः श्नुश्च' (3-1-82) इति 'वेः **स्कभ्नाते**र्नित्यम्' (8-3-77), 'ग्रसित**स्कभित**—' (7-2-34) इत्यत्र च उपात्तः । स्तम्भुधातुसहपाठात् प्रयोगे भौवादिक**स्कभि**धातुवत् (1924) रूपाणां सत्त्वाच्च प्रतिष्टम्भार्थकत्वमस्याहुः । स्कुन्भधातोराप्रवणार्थकत्वमस्यापि वक्तुं शक्यम् । 'स्कन्भु रोधनार्थः' इति **पदमञ्जरी** (7-2-34) । धातोरुदित्करणात् , तस्य च 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्प उपयोगात् श्नुश्नाप्रत्ययमात्रविषयकत्वमस्य—इति न । नोपधोऽयं धातुः । भौवादिकः **स्कभि**धातुस्तु इदित् आत्मनेपदी, अस्मात् भिन्नः । अषोपदेशोऽयम् । प्रतिबन्धार्थकत्वात् सकर्मकः, श्नुश्नाप्रत्यययोर्विधानात् [3]स्कभ्नुवन्-विस्कभ्नुवन्-ती, स्कभ्नन्-विष्कभ्नन्- ती इति शतरि रूपाणि । 'शेषात् कर्तरि—' (1-3-78) इति नियमितत्वात् - आत्मनेपदप्रवृत्तिनिमित्ताभावात् परस्मैपदमेव । 'वेः **स्कभ्नाते**र्नित्यम्' (8-3-77) इत्यत्र **काशिकादिषु** '[4]**विष्कम्भिता**, [A]**विष्कम्भितुम् , विष्कम्भितव्यम्**' इत्युदाहृतत्वात् इण्निषेधवचनाभावाच्च सेडयं धातुः । अत एव च उदित्करणमित्यप्यवधेयम् । '[5]विष्कभिते अजरे' । विष्कब्धः ।

1. '**स्कन्दे**श्च स्वाङ्गे' (द.उ.9-67) इत्यसुन्प्रत्यये धातुदकारस्य धकारादेशे च रूपम् ।
2. '**स्कन्दे**र्लोपश्च' (द. उ. 1-99) इत्युप्रत्यये, धात्वादिसकारस्य लोपे च रूपमेवम् ।
3. 'स्तन्भुस्तुन्भु**स्कन्भु**—' (3-1-82) इत्यादिना शतरि श्नुः श्ना च पाक्षिकत्वेन । यदा श्नुः—तदा 'अनिदितां—' (6-4-24) इत्युपधानकारलोपः, उवङ् । विपूर्वकात् षत्वप्रसक्त्यभावात् सकारस्यैव श्रवणम् ; यतः '**वेः स्कभ्नातेः**' (8-3-77) इति श्नाविकरणान्तस्यैव षत्वविधायके सूत्रोपादानम् - ततः यदा श्ना— तदा उपाधानकारलोपे, 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे षत्वे च **विष्कभ्नन्** इति रूपम् ।
4. '**वेः स्कभ्नातेः**–' (8-3-77) इत्यत्र क्रैयादिकस्यैव सूत्र उपादानात् तदन्तादेवेमानि षत्वघटितानि रूपाणि । यदा तु सौवादिकात् **स्कभ्नोतेः** तृजादयो भवन्ति तदानीं **विस्कम्भिता-त्री,** इत्यादीनि षत्वरहितानि रूपाणि यथासम्भवमूह्यानि ।
5. उदित्त्वेन क्त्वायामिड्विकल्पनात् 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधे प्राप्ते 'ग्रसित**स्कभित**—' (7-2-34) इत्यत्र निपातनात् इडागमश्छन्दसि । लोके तु इट् न ; **विष्कब्ध** इत्येव । अत्र उपधानकारलोपधत्वजश्त्वेषु रूपम् ।

A. '**विष्कम्भितुं** समर्थोऽपि नाचलद् ब्रह्मगौरवात् ॥' भ. का. 9. 76.

(1924) "**स्कभि प्रति(ष्टम्भे)बन्धे**" (I-भ्वादिः-387. सक. सेट्. आत्म.)
सर्वाण्यपि रूपाणि णिजन्तात् सन्नन्तं विना **चम्पयति**वत् (499) ज्ञेयानि।

(1925) " **स्कुञ् आप्रवणे** " (IX-क्र्यादिः-1478. सक. अनि. उभ.)
'—आवरणे' **इत्येके**। 'सौत्रोऽयमित्या**चार्याः**' इति **स्वामी**। **आप्रवणम्**= उद्धरणम्। '–आप्लवने' इति **मैत्रेयः**। '–आच्छादने' इति **काशकृत्स्नः**। स्कावकः-विका, स्कावकः-विका, चुस्कूषकः-षिका, चोस्कूयकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुङ्**धातुवत् (198) ऊह्यानि। 'स्तन्भु-स्तुन्भुस्कन्भुस्कुन्भु**स्कुञ्भ्यः श्नुश्च**' (3-1-82) इति वचनात् स्कुन्वन्-स्कुन्वती-स्कुन्वानः इति श्नुविकरणविशिष्टोऽपि शतरि, शानचि च प्रयोगोऽधिकोऽस्य। क्रमप्राप्तः श्नाप्रत्ययोऽपि भवत्येव, स्कुनन्-ती-स्कुनानः इति। कर्तरि क्तः-[A]स्कुतः।

(1926) " **स्कुदि आप्रवणे** " (I-भ्वादिः-9. सक. सेट्. आत्म.)
'**आप्रवणम्** उत्प्लवनमुत्प्लुत्य गमनं वा' इति **क्षीरतरङ्गिणी**।
'उद्धरणम् इति **भोजः**।' इति **धातुवृत्तौ**।
सर्वाण्यपि रूपाणि भौवादिक**कुन्थति**वत् (220) ज्ञेयानि। [1]स्कुन्दनः, [2]स्कुन्दा, इति विशेषः। [3]कुन्दम्।

(1927) " **स्खद स्खदने** " (I-भ्वादिः-768. सक. सेट्. आत्म.) [अ]
**घटादिः।**

---

1 'अनुदात्तेतश्च—' (3-2-149) इति युच्प्रत्ययः।
2. 'धातोरिदित्त्वेन उपदेशावस्थायां नुमो विधानाद् धातोर्गुरुत्वात्, 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारो लघूपधगुणाभावश्च।
3. पचाद्यचि सकारस्य बाहुलकात् लोपे रूपमिति **क्षीरस्वामी**।
[अ.] घटादिष्वेव द्विः **स्खदेः** पाठात् पूर्वपाठ आत्मनेपदार्थः-आत्मनेपदप्रकरणात्; उत्तरपाठस्तु 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदार्थ इति स्यात्। वस्तुतः पूर्वं पठितस्यैव **स्खदेः** उपसर्गविशेषवशात् मित्त्वामित्त्वव्यवस्थार्थं पुनः पाठः इति न्याय्यम्। **काशकृत्स्नधातुपाठे** तु '**स्खदिर्** अवत्यां च' इति घटादिषु पठ्यते। तस्यायमर्थः–**अवत्याम्**=अवधात्वर्थभूते रक्षणे **स्खदिर्**धातुर्मित्संज्ञकः। चकारात् पूर्वस्मिन् गणसूत्र उपात्तस्य 'परिवेषणे' इत्यर्थेऽपि मिदयमिति।
A. 'मोद**स्कुतो**ऽथ कबरीं प्रयुनन् सरामः' धा. का. 3-5.



'**स्खदिर्**—' इति **धातुकाव्यव्याख्यायां** (2-19) पाठः।
'**स्खदनम्**=विद्रावणम्' इति **स्वामी**. 'विदारणम्' इति **क्षीरस्वामी**।
स्खादकः-दिका, [1]स्खदकः-[2]अवस्खादकः-परिस्खादकः-[3]अपस्खादकः-[4]प्रस्खादकः-दिका, चिस्खदिषकः-षिका, चास्खदकः-दिका; इत्यादीनि रूपाणि यथासम्भवं भौवादिक**ज्वलति**वत् (940) ऊह्यानि। [A]अवस्खादितम्।

(1928) " **स्खल संचलने** " (I-भ्वादिः-544. (816) अक. सेट्. पर.)
**घटादिः।**
'प्रतिघातेऽप्यस्ति' इति **धा. का. व्याख्या** (1-70)। घटादिषु पठितोऽयं **भोजेन**। तेन मित्त्वात् णिजन्ते सर्वत्र ह्रस्वघटितरूपाणि ऊह्यानि। मित्त्वाभावे दीर्घघटितानि इति ज्ञेयानि। सर्वाण्यपि रूपाणि भौवादिक**कलति**वत् (171) ज्ञेयानि। शतरि-स्खलन्[B]।

(1929) " **स्तक प्रतिघाते** " (I-भ्वादिः-782. सक. सेट्. पर.)
**क्षीरस्वामि**सम्मतः पाठोऽयम्। सकारादिपाठो दूषितः **सायणेन**; षोपदेश-लक्षणविरुद्धत्वात् इति। सर्वाण्यपि रूपाणि **चकति**वत् (483) ज्ञेयानि।

(1930) " **स्तन शब्दे** " (I-भ्वादिः-827-A. अक. सेट्. पर.)
'स्यमुध्वन........' इत्यत्र '**स्तन**' इति **क्षीरस्वामिना** पठितम्। **सायण-दीक्षितादिभिः** स्वतन्त्रेण न पठ्यते।

---

1. धातोरस्य घटादिषु पाठात् मित्त्वे उपधाह्रस्वो णिजन्तेषु निरुपसृष्टेषु बोध्यः।
2. '**स्खदिरवपरिभ्यां च**' (ग. सू. भ्वादिः) इति निषेधप्रकरणे घटादिषु वचनात् अवपूर्वकात् परिपूर्वकाच्च **स्खदतेः** न मित्त्वम्।
3. 'अपावपरिभ्यः **स्खदेः**' (**बोधिन्यासे** एवं घटादिषु वचनमिति **धातुवृत्तिः**) इति पक्षे अत्रापि अपपूर्वकस्य **स्खदेः** मित्त्वनिषेधात् उपधाह्रस्वो नेति बोध्यम्।
4. "**स्खदेः** पूर्वं (=घटादिष्वेव इतः पूर्वं) पाठात् सामान्येन प्राप्तं मित्त्वं उपसृष्टात् यदि भवति तर्हि—अवाद्युपसृष्टादेव" इति मन्वानाः **क्षीरस्वाम्यादयः** प्रपूर्वकादपि मित्त्वाभावेन रूपमिच्छन्ति। तत्तु **काशिकादिषु** 'न' इत्यनुवर्त्य अवाद्युपसृष्टात् **स्खदे**रेव मित्त्वं न—अन्यत्र मित्त्वमस्त्येव—इति व्याख्यातत्वात् अनाकरमिति बोध्यम्।
A. 'इत्याद्य**वस्खादित**मानसास्ता बालाः **परिस्खादित**धैर्यबन्धाः।
दुष्टान् **अपस्खादयितुं** प्रयाते कृष्णे विलेपुः फणिता विमोहम्॥' धा. का. 2-19.
B. 'विरोधिनां विग्रहभेददक्षा मूर्तेव शक्तिः क्वचिद**स्खलन्ती**।' शि. व. 3-18.

सर्वाण्यपि रूपाणि प्रातिस्विकरूपाणि विना भौवादिक**ध्वनति**वत् (940) ज्ञेयानि ।

(1931) " **स्तन देवशब्दे** " (X-चुरादिः-1860. अक. सेट्. उभ.)

**अदन्तः** । ' —गर्जे ' इति **हेमचन्द्रः** । ' —अब्भ्रशब्दे ' इति **वोपदेवः** । ' शब्दे च देव**शब्दे च** स्तनति **स्तनयेत्** क्रमात् । ' (श्लो. 127) इति **देवः** । स्तनकः-निका, तिस्तनयिषकः-षिका ; इत्यादिकानि रूपाणि सर्वाण्यपि चौरादिक**कथयति**वत् (162) ज्ञेयानि । [1]स्तनयित्नुः[A] ।

(1932) " **स्तन्भु प्रतिघाते** " (V-स्वादिः,IX-क्र्यादिः-सक. सेट्. पर.)

' **स्तम्भुस्तुम्भु**—' (3-1-82) इति सूत्रे ' **स्तन्भेः**' (8-3-67), ' **स्तम्भु**-सिवु—' (8-3-114) इत्यत्र च उपात्तः सौत्रोऽयं धातुः । ' ष्टभि प्रतिघाते ' इति धातोः समानार्थकः । **केचित्** सहपठितस्य ' स्कुञ् ' धातोरर्थे आप्रवणे पठन्ति । धातोरुदित्करणात् क्त्वादिषु प्रत्ययेषु प्रयोगोऽस्यास्तीति ज्ञायते । एवम् , ' अवाच्चालम्बनाविदूर्ययोः ' (8-3-68) इत्यादिषु कार्यविधानात् , ' **स्तम्भु**-सिवु—' (8-3-114) इत्यत्र चङि षत्वनिषेधाच्च समस्तान्यपि तिङन्तकृदन्तरूपाण्यस्माद् भवन्तीति ज्ञायते ।

' **स्तभ्नाति स्तभ्नुयात्** स्तुभ्नात्यपि स्तुभ्नोति **सौत्रयोः** ॥
स्तम्भते प्रतिबन्धार्थे स्तम्भेऽर्थे स्तोभते शपि । '

इति **देवः** (श्लो. 142-3) । भौवादिकष्टभिधातुरात्मनेपदी । अयं तु ' शेषात् कर्तरि—' (1-3-78) इति शास्त्रात् परस्मैपदी । [2]स्तभ्नुवन्-ती, स्तभ्नन्-ती, अवष्टभ्य, [3]अवष्टब्धा सेना, अवष्टब्धा शरत् ,

---

1. बाहुलकात् , ण्यन्ते औणादिके (द. उ. 1-140) इत्नुच्प्रत्यये ' अयामन्ताल्वाय्येत्न्विष्णुषु ' (6-4-55) इति णेरयादेशे रूपमेवम् । **स्तनयित्नुः**=मेघः ।
2. शतरि, ' **स्तम्भुस्तुन्भु**—' (3-1-82) इति श्नुप्रत्ययः श्ना च । यदा श्नः- तदानीम् ' अनिदिताम्—' (6-4-74) इत्युपधानकारलोपे, उवङि च **स्तभ्नुवन्** इति रूपम् । यदा श्ना, तदा उपधानकारलोपे, ' श्नाऽभ्यस्तयोः—' (6-4-112) इत्याकारलोपे च **स्तभ्नन्** इति ।
3. ' अवाच्चालम्बनाविदूर्ययोः ' (8-3-68) इति अवपूर्वकादस्मात् षत्वम् । **आलम्बनम्**=आश्रयणम् । **अवष्टभ्य** इत्यत्र आलम्बने षत्वम् । अविदूरस्य भाव **आविदूर्यम्**=सामीप्यमित्यर्थः । ' **अवष्टब्धा** सेना ' इत्यस्य समीपमागता सेनेत्यर्थः ।

A. ' के मूढाः **स्तनयित्नु**निर्गदनवत्तूर्यध्वनिं कुर्वते.........॥' धा. का. 3-53.



[1]प्रतिस्तब्धः-निस्तब्धः, स्तम्भनम्-[2]उत्तम्भनम् , [3]विष्टम्भः इति विशेषरूपाणि । सामान्यरूपाणि सर्वाण्यपि **दम्भति**वत् (816) ज्ञेयानि ।

(1933) " **स्तिम आर्द्रीभावे** " (IV-दिवादिः-922. अक. अनि. पर.)

**सायण**सम्मतः पाठोऽयम् । **तरङ्गिण्यां ' ष्टिम '** इत्येव दृश्यते । **सि. कौमुद्यां** न दृश्यते । सर्वाण्यपि रूपाणि भौवादिक**किटति**वत् (190) ज्ञेयानि ।

(1934) " **स्तूप समुच्छ्राये** " (IV-दिवादिः-1233. अक. सेट्. पर.)

धातुरयं **क्षीरतरङ्गिण्यां** पठितः । ' **स्तूप** इति **कातन्त्राः** ; अन्ये च केचन वैयाकरणाः ' इति **काशकृत्स्नीये** । **धातुवृत्तौ** ' डिप क्षेपे ' इत्यत्र " इह क्वचित् ' स्तूप—' इति पठ्यते । तदनार्षम् ; ' स्त्यः प्रसारणमुच ' इति स्त्यायतेः पप्रत्यये यकारस्य उकारे संप्रसारणे दीर्घे च **स्तूप**शब्दव्युत्पादनात् । अत एव **आत्रेयमैत्रेयादयो**ऽपि न पठन्ति । " इत्युक्तमिहानुसन्धेयम् । ' स्तुप— ' इति **दुर्गः** इति **तरङ्गिण्याम्** । सर्वाण्यपि रूपाणि **कूजति**वत् (239) ऊह्यानि ।

(1934-A) " **स्तूप समुच्छ्राये** " (X-चुरादिः-अक. सेट्. उभ.)

**क्षीरस्वामि**सम्मतः पाठोऽयम् । **अन्ये** न पठन्ति । सर्वाण्यपि रूपाणि चौरादिक**कूलयति**वत् (244) ज्ञेयानि ।

(1935) " **स्तृक्ष गतौ** " (I-भ्वादिः-661. सक. सेट्. पर.)

' ष्टृक्ष ' इति **मैत्रेयादयः** । सर्वाण्यपि रूपाणि भौवादिक**तृक्षति**वत् (765) बोध्यानि । षोपदेशपाठे यङन्तेषु ' तरीष्टृक्षकः-क्षिका ' इत्यादीनि रूपाणि । दन्त्यादिपाठे तु ' तरीस्तृक्षकः-क्षिका ' इत्यादीनि इति विशेषः ।

---

1. प्रतिनिपूर्वकात् **स्तम्भेः** निष्ठायाम्, धत्वजश्त्वयोः, ' **प्रतिस्तब्धनिस्तब्धौ** च ' (8-3-112) इति निपातनात् षत्वं न । इतरोपसर्गेषु इगन्तेषु तु ' **स्तन्भेः** ' (8-3-67) इति षत्वे **अनुष्टब्धः** इति षत्वमेव ।
2. उत्पूर्वकात् ल्युटि ' उदः स्था**स्तम्भोः** पूर्वस्य ' (8-4-61) इति **स्तन्भु**सकारस्य पूर्वसवर्णस्तकारः । उपसर्गतकार-पूर्वसवर्णप्राप्ततकार-धातुतकाररूपास्त्रयस्तकाराः । ' झरो झरि—' (8-4-65) इति मध्यतकारस्य पाक्षिको लोपः ।
3. घञि ' **स्तन्भेः** ' (8-3-67) इति षत्वम् ।

(1936) **"स्तृञ् आच्छादने"** ( V-स्वादि:-1252. सक. अनि. उभ.)

'लक्षणया विक्षेपे' इति **धा. का. व्याख्या**—(2-68)।
'तृञः श्नि च्छादने प्वादेः स्तृणीते च स्तृणाति च।
श्नावृदन्तस्य तत्रैव स्तृणोति स्तृणुते स्तृञः॥' (श्लो. 35) इति **देवः**।
'स्तृ प्रीतिरक्षापालने' इति **वोपदेवः** इति **पा. धा. समीक्षा**। सनि—तिस्तीर्षकः-र्षिका, [1]तिस्तीर्षिता-त्री; यङि—तास्तरकः-रिका; विस्तृतः, [2]स्तीर्विः, [3]स्तरीः, [4]स्तरीमा इत्यादिकानि रूपाणि सर्वाण्यपि **कृणोति**वत् (245) बोध्यानि। **अष्टाध्याय्यां** ग्रहणानि सर्वाण्यपि दीर्घान्तस्य क्रैयादिकस्येति बोध्यम्।

(1937) **"स्तृहू हिंसायाम्"** (VI-तुदादि:-1349. सक. वेट्. पर.)

'षोपदेश इति **दुर्गः**' इति **तरङ्गिण्याम्**।
सर्वाण्यपि रूपाणि तौदादिकहिंसार्थक '**तृहू**' (777) धातुवज्ज्ञेयानि।

(1938) **"स्तृञ् आच्छादने"** (IX-क्र्यादि:-1484. सक. सेट्. उभ.)

**प्वादिः, ल्वादिश्च।**

'स्तृञः श्नि च्छादने प्वादेः स्तृणीते च स्तृणाति च।
श्नावृदन्तस्य............॥' (श्लो. 35) इति **देवः**।
'स्तृञ् आप्रवणे' इति **काशकृत्स्नः**। **पा. धा. समीक्षायां** 'स्तृञ्' इति ह्रस्वोपधेन **मैत्रेय-क्षीरस्वामि-सायणादयः** पठन्ति इत्युक्तम्। तन्न समीचीनम्।
स्तारकः-रिका, स्तारकः-रिका, तिस्तरीषकः-तिस्तरिषकः-षिका, तिस्तीर्षकः-र्षिका, तेस्तिरकः-रिका; स्तरीता-स्तरिता-त्री, स्तारयिता-त्री, तिस्तरीषिता-तिस्तरिषिता-तिस्तीर्षिता-त्री, तेस्तिरिता-त्री;
इत्यादिकानि रूपाणि सर्वाण्यपि क्रैयादिककृ (258) धातुवत् ऊह्यानि।

---

1. सन्नन्ते 'इको झल्' (1-2-9) इति सनः कित्वे 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, इत्वे रपरत्वे 'हलि च' (8-2-77) इति उपधायाः दीर्घे च रूपमेवम्।
2. औणादिके (द. उ. 1-24) क्विन्प्रत्यये रूपमेवम्। **स्तीर्विः**=अध्वर्युः, तृणजातिर्वा।
3. औणादिके (द. उ. 1-82) ईप्रत्यये रूपमेवम्। **स्तरीः**=मेघः, शय्या च।
4. औणादिके (द. उ. 6-76) ईमनिन्प्रत्यये रूपमेवम्। **स्तरीमा**=आच्छादनम्।



[1]मणिप्रस्तारः, [हविषाम्] प्रस्तरः, [2]पटस्य विस्तारः, शब्दविषये तु विस्तरः। [3]विष्टारः, [4]विष्टरः[A], [5]अवस्तारः, आस्तीर्णः, [6]स्तीर्णिः, स्तरी-मेघः शय्या च, स्तरीमास्तीर्य, इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1939) **"स्तेन चौर्ये"** (X-चुरादि:-1897. सक. सेट्. उभ.)

**अदन्तः।**

सर्वाण्यपि रूपाणि चौरादिक**केतयति**वत् (260) ज्ञेयानि। [7]स्तेयम्—स्तैन्यम्, स्तेनः, इति विशेषः। शतरि-स्तेनयन्[B] इति।

(1940) **"स्तोम श्लाघायाम्"** (X-चुरादि:-1923. सक. सेट्. उभ.)

**अदन्तः।**

समूहार्थकत्वमपि प्रयोगादस्य बोध्यम्। सर्वाण्यपि रूपाणि चौरादिक**गोमयति**वत् (433) ऊह्यानि।

(1941) **"स्त्यै शब्दसंघातयोः"** (I-भ्वादि:-910. अक. अनि. पर.)

'**शब्दसंघातयोर्धात्वोः स्त्यायत्येकस्य** सो न षः।' (श्लो. 7) इति **देवः**।
सर्वाण्यपि रूपाणि **कायति**वत् (263) ज्ञेयानि। प्रस्तीतम्-तः-तवान्, प्रस्तीमः,

---

1. 'प्रे स्त्रोऽयज्ञे' (3-3-32) इति प्रशब्द उपपदे यज्ञभिन्नविषये घञ्। यज्ञविषये हविषाम् **प्रस्तरः** इति अप्प्रत्यय एव।
2. 'प्रथने वावशब्दे' (3-3-33) इति वि इत्युपसर्गे उपपदे प्रथने गम्यमाने घञ्प्रत्ययः। शब्दविषये **विस्तरः**।
3. 'छन्दोनाम्नि च' (3-3-34) इति छन्दोविषये नाम्नि घञ्प्रत्यये, 'छन्दोनाम्नि च' (8-3-94) इति षत्वे च रूपमेवम्।
4. विस्तीर्यते इति **विष्टरः**। विपूर्वात् **स्तृ**धातोः 'ऋदोरप्' (3-3-57) इत्यप्-प्रत्यये 'वृक्षासनयो**र्विष्टरः**' (8-3-93) इति षत्वे च रूपमेवम्। **विष्टरः**= आसनम्, अश्वत्थवृक्षश्च।
5. 'अवेतॄस्त्रोर्घञ्' (3-3-120) इति करणाधिकरणयोर्घञ्।
6. '**ऋल्वादिभ्यः** क्तिन्—' (3-3-94) इति क्तिनस्तकारस्य नकारः। णत्वम् च।
7. 'स्तेनाद्यन्नलोपश्च' (5-1-125) इति भावकर्मणोः यत् प्रत्ययस्तद्धितः; नशब्दस्य लोपश्च। स्तेनस्य भावः कर्म वा **स्तेयम्**। 'स्तेनात्' इति **केचिद्** योगविभागं कुर्वन्ति। तेन पक्षे ष्यङ् भवति।

A. 'अपूपुजन् **विष्टर**पाद्यमाल्यैः आतिथ्यनिष्णा वनवासिमुख्याः।' भ. का. 2-26.
B. '...स्वामात्यान् कुणयन् भटांश्च गुणयन् नृणां मुदं **स्तेनयन्** ॥' धा. का. 3-57.

प्रस्तीमवान्। [1]स्त्येनः [A]स्त्यानम्, स्त्री, प्रसंस्तीतः, विशेषरूपाणि सर्वाणि भौवादिक-**स्त्यायति**वत् (1872) ज्ञेयानि।

(1942) "**स्थुड संवरणे**" (VI-तुदादिः-1388. सक. सेट्. पर.)

**कुटादिः**। 'स्थुड' इति **क्षीरस्वामिभट्टोजिदीक्षितौ**। **सायण**स्तु स्फुड इत्युक्तवान्। एवं **धा. का. व्याख्याने**ऽपि (2. 81)। सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि। शतरि-स्थुडन्।

(1943) "**स्थूल परिबृंहणे**" (X-चुरादिः-1904. अक. सेट्. आत्म.)

**आगर्वीयः, अदन्तश्च।**

**परिबृंहणम्**=पीनत्वमिति **स्वामी**। सर्वाण्यपि सामान्यरूपाणि चौरादिक-**कूटयति**वत् (240) ज्ञेयानि। अचि स्थूलः, [2]स्थविष्ठः, स्थवीयान् इति विशेषः।

(1944) "**स्निट स्नेहने**" (X-चुरादिः-अक. सेट्. उभ.)

**क्षीरस्वामि**सम्मतः पाठोऽयम्। **अन्ये** न पठन्ति। 'स्मिट' इत्ये**के** इति च **तरङ्गिण्या**मुक्तम्। 'स्मिट' इत्यस्य पाठभेदः इति **सर्वे**। सर्वाण्यपि रूपाणि चौरादिक**कीटयति**वत् (194) ज्ञेयानि।

(1945) "**स्पदि किञ्चिच्चलने**" (I-भ्वादिः-14. अक. सेट्. आत्म.)

सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि। [B]स्पन्दितुम्, स्पन्दिता, [3]स्पन्दनः, स्पन्दः, [4]स्पन्दयन् इति विशेषः।

(1946) "**स्पर्ध सङ्घर्षे**" (I-भ्वादिः-3. अक. सेट्. आत्म.)

'—संहर्षे' इति **वोपदेवः**। '**संघर्षः**=पराभिभवेच्छा। पराभिभवस्य धात्वर्थेनोपसंग्रहादकर्मकत्वम्। उक्तं च—

'धातोरर्थान्तरे वृत्तेः धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥' (वाक्यपदीयम् 3-88) इति॥

1. औणादिके (द. उ. 5-12) इनच्प्रत्यये रूपमेवम्।
2. '**स्थूलदूर**—' (6-4-156) इति यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति। इष्ठन्प्रत्यये **स्थविष्ठः**, ईयसुन्प्रत्यये **स्थवीयान्** इति विवेकः।
3. 'अनुदात्तेतश्च—' (3-2-149) इति युच्प्रत्ययः।
4. 'निगरण**चलनार्थेभ्यः**' (1-3-87) इति ण्यन्तात् परस्मैपदमेव।

A. 'रायद्वयस्**त्यान**रुचौ रयेऽपि.........।' धा. का. 2-31.
B. 'स्वमन्दिरात् **स्पन्दितु**मेव नाशकत्......॥' धा. का. 1-3.



सर्वाण्यपि रूपाणि भौवादिक**कुर्दति**वत् (230) ज्ञेयानि। स्पर्धः, [1]स्पर्धितमनेन, [2]स्पर्धनः, [3]स्पर्धालुः[A], [4]स्पर्धा, [5]प्रस्पर्धी इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1947) "**स्पश बाधनस्पर्शनयोः**"

(I-भ्वादिः-887. सक. सेट्. उभ.)

'**बाधने स्पर्शने** चार्थे हिक्कादौ **स्पशते स्पशेत्**॥' (श्लो. 166) इति **देवः**। '—बाधन**स्पाशनयोः**' **स्पाशनं**—ग्रन्थनम्' इति **स्वामी**। '—ग्रन्थ-बाधयोः' इति **वोपदेवः**। "'—बाधन**स्पशनयोः**' **पशे**त्ये**के**। **पषे**त्यन्ये। हिंसार्थं दोषसूचनं स्पश [र्श]नम्" इति **धा. का. व्याख्या** (2-27)।

"अत्र **स्वामी** '**पष** इत्ये**के** इति, तेन पाषण्डः पाषाणः (इति सिद्धौ)" इत्याह। **दुर्गशाकटायनयो**रप्ययमेव पक्षः। अनयोः पाठे 'प्रति**स्पशो** विसृजस्तूर्णितमः' (ऋक् 4-4-3) 'यतो व्रतानि **पस्पशे**' (ऋक्. 3-22-19) 'अपसर्पश्चरः **स्पशः**' (नामलिङ्गानुशासने क्षत्रवर्गे) 'शब्दविद्येव नो भाति राज-नीतिर**पस्पशा**' (शिशुपालवधे 2-112), इत्यादिप्रयोगोऽनुगुणः। **पाषण्डपाषाण**-प्रयोगस्तु '(पष) अनुपसर्गात्' (ग. सू. चुरादिः) इति कथादेर्भविष्यति। यद्वा—'पष बन्धने' इति युजादेः। अस्ति चायं युजादौ। यद्वक्ष्यति चुरादौ '**पश** बन्धने' इत्यत्र **मैत्रेयः**—'**पष** बन्धने इति युजादावे**के** पठन्ति' इति। अत्र **स्वामिकाश्यपादयः**—**पाशादि** (4-2-49) दर्शनात् **पशे**ति पठन्ति। **पाशादयो**ऽपि चौरादिकेन बन्धनार्थेनापि सिद्धाः। **पशु**शब्दस्तु **पशे**र्व्युत्पादयिष्यते। पसेति दन्त्यान्तसौत्रो धातुः" इति **माधवेनो**क्तम् अत्र अनुसन्धेयम्। सर्वाण्यपि रूपाणि भौवादिक**काशति**वत् (178) ज्ञेयानि।

1. 'क्तोऽधिकरणे च—' (3-4-76) इति कर्तृभावाधिकरणेषु क्तप्रत्ययः।
2. 'अनुदात्तेतश्च—' (3-2-149) इति तच्छीलादौ युच्प्रत्ययः।
3. 'अत्र स्पर्धां लात्यादत्ते मितद्र्वादित्वाद् (वा. 3-2-180) डुः' इति **धा. का. व्याख्यायाम्** (1-2)।
4. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः।
5. णिनिप्रत्यये रूपमेवम्।

A. '......**स्पर्धालु**धीगाधितकार्यबाधिनम्।' धा. का. 1-2.

[1]पस्पशा, पस्पश:=उपोद्घात: । 'सेयमुभयत:स्पाशा रज्जुः' (भाष्ये 6-1-68)
[2]स्पष्टः[A]-स्पाशितः, इति विशेषरूपाणि ।

(1948) " **स्पश ग्रहणसंश्लेषणयोः** "

(X-चुरादि:-1681. सक. सेट्. आत्म.) **आकुस्मीयः** ।

'स्पृश—' इति **जैन-शाकटायन-हेमचन्द्रादयः** ।

'**ग्रहणे श्लेषणे** चार्थे चुरादौ **स्पाशयेत** णौ' (श्लो. 167) **देवः** ।

सर्वाण्यपि रूपाणि चौरादिक**ग्रामयति**वत् (442) ऊह्यानि । निष्ठायाम्, 'वा दान्तशान्तपूर्णदस्त**स्पष्ट**—' (7-2-27) इति निपातनात् स्पष्टः-स्पाशितः इति रूपद्वयम् । ल्यपि—[B]प्रस्पाश्य ।

(1949) " **स्पृ प्रीतिपालनयोः** "

(V-स्वादि:-1259. अक. अनि. पर.) छान्दसः ।

'**प्रीति**र्बलम्, पालनं=जीवनम् इति **स्वामी**' इति **माधवः** । "'**स्मृ** प्रीतिबलनयोः' बलनं जीवनम् । '**स्पृ इत्येके**'" इति **क्षीरतरङ्गिण्याम्** ।

सर्वाण्यपि रूपाणि **चिपर्त्ति**वत् (1044) ज्ञेयानि ।

(1950) " **स्पृश संस्पर्शने** " (VI-तुदादि:-1422. सक. अनि. पर.)

सर्वाण्यपि रूपाणि तौदादिक**मृशति**वत् (254) ज्ञेयानि ।

[3]व्योमस्पृक्, जलस्पृक्, दिविस्पृक्-हृदिस्पृक्, मन्त्रस्पृक्, [4]स्पर्शः,

---

1. यङ्लुगन्तादचि टाप् । 'संज्ञापूर्वको विधिरनित्यः' (परि-94) इति नाभ्यासस्य दीर्घः ।
2. 'वा दान्तशान्तपूर्णदस्त**स्पष्ट**—' (7-2-27) इति निष्ठायां ण्यन्तात् इडभावो निपातितः विकल्पेन । तेन रूपद्वयम् ।
3. '**स्पृशो**ऽनुदके क्विन्' (3-2-58) इति सुबन्त उपपदे क्विन्प्रत्यये रूपमेवम् । घृतं स्पृशति **घृतस्पृक्**, मन्त्रेण स्पृशति **मन्त्रस्पृक्**, जलेन स्पृशति **जलस्पृक्** । **दिविस्पृक् हृदिस्पृक्** इत्यत्र 'हृद्द्युभ्यां उपसंख्यानम्' (वा. 6-3-9) इति वचनात् सप्तम्या अलुक् ।
4. 'पदरुजविश**स्पृशो** घञ्' (3-3-16) इति कर्तरि घञ् । '**स्पृश** उपताप इति वक्तव्यम्' (वा. 3-3-16) इति वचनात् स्पृशतीति **स्पर्शः** उपतापः । ततोऽन्यत्र पचाद्यच्—**स्पर्शः** । 'अनुदके' इत्युक्तत्वात् उदके उपपदे कर्तरि 'कर्मण्यण्' (3-2-1) इत्यणि **उदकस्पर्शः** इति भवति ।

A. '**स्पष्टं** बहिः स्थितवतेऽपि निवेदयन्तः......।' शि. व. 5-67

B. '**प्रस्पाश्य** मुष्टिमभितर्जयते प्रभत्स्यों मल्लो बिबस्तयिषुरेनमगन्धनीयम् ।' धा. का. 3-34.



[A]शीतस्पर्शः, [1]पृष्ठम्, [2]पार्श्वम् इति विशेषः ।

(1951) " **स्पृह ईप्सायाम्** " (X-चुरादि:-1872. सक. सेट्. उभ.) **अदन्तः** ।

सर्वाण्यपि रूपाणि '**गृह ग्रहणे**' (425) इति धातुवत् ज्ञेयानि । [3]स्पृहयालुः,[B] [4]पुष्पेभ्यः स्पृहयन्-न्ती, [5]स्पृहयाय्यः इति विशेषः ।

(1952) " **स्फर चलने** " (VI-तुदादि:-1389. (पा.) अक. सेट्. पर.)

**क्षीरस्वामी** एवं पठति । **अन्ये सर्वे न** पठन्ति । '**स्फुरणे संचलने दीप्तौ**' इति **बोपदेवः** । स्फरः, स्फारः । सर्वाण्यपि रूपाणि तौदादिक**कुरति**वत् (229) बोध्यानि ।

(1953) " **स्फल चलने** " (VI-तुदादि:-1389. (पा.) अक. सेट्. पर.)

**जैनशाकटायनः** 'स्फल चपले' इति पठति । **क्षीरस्वामिप्रभृतयः केचिदेव** धातुममुं पठन्ति । रूपाणि सर्वाण्यपि तौदादिक**कुरति**वत् (229) बोध्यानि ।

(1954) " **स्फायी वृद्धौ** " (I-भ्वादि:-487. अक. सेट्. आत्म.)

स्फायकः-यिका, [6]स्फावकः-विका, पिस्फायिषकः-षिका, पास्फायकः-यिका ;

---

1. औणादिके (द. उ. 6-37) थक्प्रत्यये निपातनात् सकारलोपः । 'व्रश्च—' (8-2-36) इत्यादिना शकारस्य षत्वम् । ष्टुत्वम् । **पृष्ठम्**=शरीरैकदेशः ।
2. औणादिके (द. उ. 10-13) श्वण्प्रत्यये सकारलोपे च रूपमेवम् ।
3. '**स्पृहि**गृहि—' (3-2-158) इत्यादिना तच्छीलादिषु कर्तृषु आलुच्प्रत्यये 'अयामन्ताल्वा—' (6-4-55) इति णेरयादेशे च रूपमेवम् ।
4. अत्र '**स्पृहे**रीप्सितः' (1-4-36) इति ईप्सितस्य संप्रदानत्वम् । तेन 'पुष्पेभ्यः' इत्यत्र चतुर्थी ।
5. औणादिके (द. उ. 8-1.) आय्यप्रत्यये आयादेशे च रूपमेवम् । **स्पृहयाय्यः**= स्पृहणशीलः ।
6. '**स्फायो** वः' (7-3-41) इति णौ परतः यकारस्य वकारे रूपमेवम् ।

A. 'काकुत्स्थपादपच्छायां **शीतस्पर्श**मुपागमत् ॥' भ. का. 7-32.

B. '**स्पृहयालुं** कपिं स्त्रीभ्यो निद्रालुमदयालुवत् ।' भ. का. 7-21.

[1]स्फीतम्-[A]तः, स्फातः, स्फातिः, [2]स्फिरम् [3]स्फारम् इत्यादिकानि रूपाणि सर्वाण्यपि **चमरति**वत् (258) ज्ञेयानि ।

(1955) " **स्फिट अनादरे** " (X-चुरादिः-1572. सक. सेट्. उभ.)

' **स्फिट स्नेहने** ' इति ' **क्वचित् कोशे** दृश्यते ' इत्युक्त्वा ' तद् **धनपाल-शाकटायनमैत्रेयदेवादिभिश्चिरन्तनैः** व्याख्यातृभिर्न लिख्यते ' इति च **माधवीये** प्रोक्तम् । ' स्मिट ' इत्यस्य पाठान्तरमिदमिति **केचित्** ।
सर्वाण्यपि रूपाणि चौरादिक**कीटयति**वत् (194) ज्ञेयानि । संस्फोटकस्तुमुलयुद्धम् ।

(1956) " **स्फिट्ट हिंसायाम्** " (X-चुरादिः-1635. सक. सेट्. उभ.)

अयं धातुः **क्षीरतङ्गिण्यां** न दृश्यते । सर्वाण्यपि रूपाणि चलनार्थक**कड्डयति**वत् (156) ज्ञेयानि ।

(1957) " **स्फुट विकसने** " (I-भ्वादिः-260. अक. सेट्. आत्म.)

'—विशरणे ' इति **वोपदेवः** ।

' क्रमाद् **विकासे** शशपोः, स्फुटति **स्फोटते** पदे । ' (श्लो. 70) इति **देवः** । **क्षीरतरङ्गिण्यां** धातुरयं न दृश्यते । सन्नन्ते सर्वत्र ' रलो व्युपधात्— ' (1-2-26) इति कित्त्वविकल्पनात् रूपद्वयं ज्ञेयम्—पुस्फोटिषकः-पुस्फुटिषकः-षिका । एवं शुद्धे क्त्वायामपि । सर्वाण्यपि रूपाणि **कुकति**वत् (197) ज्ञेयानि ।

---

1. ' **स्फायः स्फी—** ' (6-1-22) इति निष्ठायां **स्फी**भावः । ' ईदित्त्वं **स्फाये**रादेशानित्यत्वे लिङ्गम्—**स्फातः**' इति **क्षीरस्वामी** । अयं भावः—"यदि निष्ठायां नित्यं ' **स्फी** ' भावः स्यात्तर्हि ईदित्त्वमनर्थकं स्यात् । ईदित्त्वस्य तु '**श्वीदितो निष्ठायाम्** ' (7-2-14) इति निष्ठायामिट्प्रतिषेध एव फलम् , नान्यत् । तस्माद् व्यर्थं सत् ज्ञापयति ' **स्फी** ' भावोऽनित्यः इति । तथा सति ' **स्फाती**भवति ' इति प्रयोगोऽप्युपपद्यते । एवं च सति ' **स्फाती**भवति इत्येतदपि क्तिन्नन्तस्यैव रूपं न निष्ठान्तस्य ' इति **काशिकावचनं** (6-1-22) क्लिष्टकल्पनामात्रम् । **धातुवृत्तिकार**स्तु अनुदात्तत्वार्थमीदित्करणमाह—तदप्यसत् , अनुदात्तत्वार्थं तु अन्यत्रेवेहाप्यकारस्यानुबद्धुं शक्यत्वात्" इति **युधिष्ठिरमीमांसकः क्षीरतरङ्गिणीटिप्पणे**ऽवोचत् । अत एव ' **स्फी**भावो वेति **केचित्-स्फातः** ' इति **प्रक्रियाकौमुद्युक्त**मपि संगच्छते ।
2. औणादिके (द. उ. 8-27) किरच्प्रत्यये, टिलोपे च रूपमेवम् ।
3. ' **स्फायि—** ' (द. उ. 8-31) इत्यादिना रक्प्रत्यये रूपम् ।

A. ' प्रक्नोपयन्तं मुरलीं महीभरक्षमायं बल**स्फीत**सुपीनदोर्युगम् । ' धा. का. 1-63.



(1958) " **स्फुट विकसने** " (VI-तुदादिः-1373. अक. सेट्. पर.)

**कुटादिः** ।

' क्रमाद् **विकासे** शशपोः **स्फुटति** स्फोटते पदे ।' (श्लो. 70) इति **देवः** । सर्वाण्यपि रूपाणि कौटिल्यार्थक**कुटति**वत् (204) बोध्यानि । अस्य धातोः कुटादित्वात् , ' रलो व्युपधात्— ' (1-2-26) इति सन्नन्ते कित्त्वविकल्पो न । णमुलि-[A]अङ्गुलिस्फोटम् । **स्फोटः**=शाब्दिकसंमतं शब्दस्वरूपम् , रोगविशेषश्च ।

(1959) " **स्फुट भेदने** " (X-चुरादिः-1723. सक. सेट्. उभ.)

' **स्फोटयेत्** स्फोटतीति द्वे **भेदे** विशरणे क्रमात् । ' (श्लो. 71) इति **देवः** । सर्वाण्यपि रूपाणि चौरादिक**कुहयति**वत् (237) ज्ञेयानि ।

(1960) " **स्फुटिर् विशरणे** " (I-भ्वादिः-329. अक. सेट्. पर.)

' स्फोटयेत् **स्फोटती**ति द्वे भेदे **विशरणे** क्रमात् ।' (श्लो. 71) इति **देवः** । ' अयं पाठो **मैत्रेयादीनाम्** ' इति **माधवः** । '—स्फुट ' इति **चन्द्रः** । '—विशरणे विकासे च ' इति **काशकृत्स्नः** । सर्वाण्यपि रूपाणि **कुण्ठति**वत् (209) ज्ञेयानि ।

(1961) " **स्फुड संवरणे** " (VI-तुदादिः-1391. सक. सेट्. पर.)

**कुटादिः** ।

' **मैत्रेयेण** न पठ्यते । **आत्रेयादय**स्तु पठन्ति ' इति **माधवः** । **पा. धा. समीक्षायाम्** तु '**स्फुड** संवरणे, **मैत्रेयसायणचन्द्रादयः** पठन्ति ' इत्युक्तम् । अनयोः परस्परविरोधो दृश्यते । **तरङ्गिण्यां** धातुरयं न दृश्यते । अपि तु ' **स्थुड** ' इति दृश्यते । सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (240) ज्ञेयानि ।

(1962) " **स्फुडि परिहासे** " (X-चुरादिः-1537. सक. सेट्. उभ.)

' **स्फुडि**— ' इति पठित्वा ' **स्फुटि** इति प्रथमान्तं **केचित्** पठन्ति । तस्यार्थः परिहासः—इति **दुर्गः** ' इति **सायणः** । ' पुडि ' इति पठित्वा ' स्फुटि इति **दुर्गः** । ' स्पुडि परिघाते इति **एके** ' इति **क्षीरतरङ्गिण्याम्** । शतरि [B]प्रस्फुण्डयन् । सर्वाण्यपि रूपाणि **कुण्ठयति**वत् (210) ज्ञेयानि ।

---

A. ' वदन् बह्वङ्**गुलिस्फोटं** भ्रूविक्षेपं विलोकयन् ॥ ' भ. का. 5.63.

B. ' **प्रस्फुण्डयन्** अपि तमप्युपलक्ष्य कंसः— ॥' धा. का. 3-13.

(1963) " **स्फुर स्फुरणे** " (VI-तुदादि:-1389. अक. सेट्. पर.)

**कुटादिः ।**

' चलने ' इति **न्यासे** (6-1-47)। एवं **क्षीरस्वाम्यपि**। ' स्फर इत्येके ' इति **माधवः** । ' —स्फुरणे संचलने दीप्तौ च ' इति **मैत्रेयः** । ' स्फूर्तौ चले ' इति **वोपदेवः** ।

स्फोरकः-रिका, स्फोरकः-रिका, पुस्फुरिषकः-षिका, पोस्फुरकः-रिका ; विस्फूः, विष्फूः, [A]विस्फुरन्, [1]विस्फारः, इत्यादिकानि सर्वाण्यपि रूपाणि तौदादिक**कुरति**वत् (229) ज्ञेयानि। अस्य धातोः कुटादित्वात् सन्नन्ते ' रलो व्युपधात् —' (1-2-26) इति कित्वविकल्पो न। तेन एकमेव रूपमिति ज्ञेयम् । [2]निःष्फारः-निःस्फारः-निष्फारः-निस्फारः-विष्फारः-विस्फारः ।

(1964) " **स्फुर्छा विस्तृतौ** " (I-भ्वादि:-213. अक. सेट्. पर.)

' —विस्मृतौ ' इति **धा. का. व्याख्या** (1-29)। ' स्मुर्च्छा ' इति **स्वामी** । सर्वाण्यपि रूपाणि **मूर्छति**वत् (1288) **कूजति**वच्च (239) ज्ञेयानि ।

(1965) " **स्फुल संचलने** " (VI-तुदादि:-1390. अक. सेट्. पर.)

**कुटादिः ।**

'—संचये च ' इति **जैनशाकटायनौ**। '—स्फुरणे संचये च ' इति **काशकृत्स्नकातन्त्रहेमचन्द्रादयः**। **स्फुलिङ्गः**=अग्निकणः । [B]विस्फुलन्-विष्फुलन्-न्ती, इत्यत्र ' **स्फुरतिस्फुलत्योः**— ' (8-3-76) इति वा षत्वम्। तेन रूपद्वयम्। [3]स्फालः, [4]निःष्फालः-निःस्फालः-निष्फालः-निस्फालः-विष्फालः-विस्फालः ।

(1966) " **टु ओ स्फूर्जा वज्रनिर्घोषे** "

(I-भ्वादि:-235. अक. सेट् पर.)

---

1. घञि '**स्फुरति**स्फुलत्योर्घञि' (6-1-47) इत्यात्वमत्रेति ज्ञेयम् ।
2. '**स्फुरति**स्फुलत्योर्निर्निविभ्यः ' (8-3-76) इति षत्वं विकल्पेन भवति। तेन प्रत्येकं रूपद्वयम् ।
3. ' स्फुरति**स्फुलत्यो**र्घञि' (6-1-47) इति घञि आत्वम् ।
4. ' स्फुरति**स्फुलत्योर्निर्निविभ्यः**' (8-3-76) इति षत्वविकल्पः। तेन प्रत्येकं रूपद्वयम् ।

A. ' अबध्नादपरिस्कन्दं ब्रह्मपाशेन **विस्फुरन्** ॥' भ. का. 9-75.

B. ' धाम स्वं **स्फुरितो** जगाम धनुषः पार्श्वं क्षणाद**स्फुलन्** ॥' धा. का. 2-81



' —**वज्रनिष्पेषे** ' । वज्रनिष्पेषोऽशनिनिर्घोषः ' इति **स्वामी**। स्फूर्जः, 'ओदितश्च' (8-2-45) इति निष्ठानत्वे णत्वे च [1]स्फूर्ग्णः। [2]स्फूर्जितमनेन, स्फूर्ग्णम् , प्रस्फूर्जितः, प्रस्फूर्ग्णः इत्यत्र 'विभाषा भावादि—' (7-2-17) इति विकल्पितेट्। ' ट्वितोऽथुच् ' (3-3-89) इत्यथुचि [A]स्फूर्जथुः इति। इतराणि सर्वाण्यपि रूपाणि भौवादिक**कुर्दति** (230) वत् ज्ञेयानि। [3]स्फूर्जन्-स्फुर्जन् ।

(1967) " **स्मिट अनादरे** " (X-चुरादि:-1573. सक. सेट्. उभ.)

' —स्नेहे च ' इति **वोपदेवः** ।

' **स्निट** स्नेहने। स्नेटयति । **स्मिट इत्येके** ' इति **क्षीरस्वामी** । ' स्मिट अनादरे ' इति पठित्वा "—स्मिङ् इत्येके ' इति **मैत्रेयः** । **शाकटायनस्तु**—' **स्मिट गतौ** ' इति टान्तप्रकरणे पपाठ " इति **माधवः** । " 'स्मिङ् ईषद्धसने ' ' **स्मिट** अनादरे ' ' स्मिङ् इत्येके ' इति **मैत्रेयरक्षितः** " इति पुरुषकारः ( **दैव**श्लोके 15)। सर्वाण्यपि रूपाणि **चेतयति**वत् (522) ज्ञेयानि। ' ईषद्धासे स्मयेतेति स्माययेतेत्यनादरे ॥' (देवश्लो. 15)। ' **स्मिङ्** ' इति इसि पक्षे ' ष्मिङ् ' धातुवत् (1888) रूपाणि बोध्यानि।

(1968) " **स्मील निमेषणे** " (I-भ्वादि:-519. सक. सेट्. पर.)

**निमेषणं**=संकोचः । " श्मील निमेषणे। श्मीलस्थाने ' क्ष्मील ' इति **चान्द्राः**।" इति **क्षीरस्वामी** । सर्वाण्यपि रूपाणि भौवादिक**कीलति**वत् (195) ऊह्यानि ।

---

1. ' आदितश्च ' (7-2-16) इति अनिड्त्वम् । निष्ठानत्वे, ' चोः कुः ' (8-2-30) इति धातुजकारस्य कुत्वे णत्वे च रूपमेवम्। **माधवीयधातुवृत्तौ ' स्फूर्णवान् स्फूर्णमनेन** ' इति गकाररहितः प्रयोगो लक्ष्यते ; अत्र कवर्गस्य लोपप्रसक्त्यभावात् नूनं सोऽपपाठ इति बोध्यम् ।
2. ओदित्त्वेन निष्ठानत्वप्रसक्तेः धातोर्निष्ठायामनिट्त्वे सिद्धे पुनरादित्करणात् ज्ञापकात् 'विभाषा भावादिकर्मणोः ' (7-2-17) इति भावे आदिकर्मणि च विकल्पितेट्कत्वं ज्ञाप्यते। तेन रूपद्वयमत्र।
3. शतरि **स्फूर्जन्** इति रूपम्। अस्य दीर्घोपदेशेन ' उपधायां च ' (8-2-78) इति दीर्घस्य अनित्यत्वं ज्ञाप्यते, तेन पक्षे **स्फुर्जन्** इति दीर्घरहितप्रयोगोऽपि भवतीति **केचित्**—इति **मैत्रेयरक्षितेन** प्रतिपादितमिति **माधवः**।

A. ' श्रुत्वा **विस्फूर्जथु**प्रख्यं निनादं परिदेविनी।' भ. का. 5-53.

(1969) "स्मृ आध्याने" (I-भ्वादिः-807. सक. अनि. पर.)

घटादिः ।

चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादो घटादिषु। **आध्यानम्** = उत्कण्ठापूर्वकं स्मरणम् । सर्वाण्यपि रूपाणि **कृणतिवत्** (245) ऊह्यानि । अस्य धातोः घटादिपाठात् , 'घटादयो मितः' (ग. सू. भ्वादिः) इति मित्त्वात् ह्रस्वे, ण्यन्ते सर्वत्र ह्रस्वघटितरूपाणि इति विशेषः । स्मरिष्यन् इत्यत्र 'ऋद्धनोः स्ये' (7-2-70) इतीट् ।

[1]मातुः [A]सुस्मूर्षमाणः इत्यत्र तु 'ज्ञाश्रुस्मृदृशां सनः' (1-3-57) इति सन्नन्तादात्मनेपदं भवति । सनः कित्त्वे, 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युत्वे रपरत्वे च रूपमेवम् । अप्राप्तस्य तङ एव विधानमत्र ।

(1970) "स्मृ चिन्तायाम्" (I-भ्वादिः-933. सक. अनि. पर.)

सर्वाण्यपि रूपाणि **कृणतिवत्** (245) ऊह्यानि । संज्ञायां घप्रत्यये स्मरः; स्मरणम्, विस्मृतिः, इति विशेषः । सुस्मूर्षमाणः । स्मारः, 'हलश्च' (3-3-121) इति संज्ञायां घञि अपस्मारः-रोगविशेषः; 'रोगाख्यायां—' (3-3-108) इत्यस्य बाधकोऽयम् । कृवसौ सस्मरिवान् इत्यत्र 'ऋतश्च संयोगादेः—' (7-4-10) इति गुणः ।

(1971) "स्मृ प्रीतिपालनयोः" (V-स्वादिः-1259. अक. अनि. पर.)

'स्पृ' इत्यस्य पाठान्तरमिदम् इति **केचित्** । 'अयं छान्दसः' इति **स्वामिकाश्यपौ** इति **माधवः** । 'स्मृ प्रीतिबलनयोः' इति **क्षीरस्वामी** । सर्वाण्यपि रूपाणि **पिपर्तिवत्** (1044) ज्ञेयानि ।

(1972) "स्यन्दू प्रस्रवणे" (I-भ्वादिः-761. अक. वेट्. आत्म.)

अर्थभेदेन सकर्मकोऽकर्मकोऽपि कविभिः प्रयुज्यते । स्यन्दकः-न्दिका, स्यन्दकः-न्दिका, सिस्यन्त्सकः-न्त्सिका, सिस्यन्दिषकः-षिका, सास्यन्दकः-न्दिका; इत्यादिकानि रूपाणि सर्वाण्यपि **कृपूधातुवत्** (252) ज्ञेयानि; प्रातिस्विकरूपाणि विना । ऊदित्त्वात् 'स्वरतिसूति—' (7-2-44) इत्यादिना वलादेरार्धधातुकस्य इड्विकल्पः । स्यन्दिता-[1]स्यन्ता इति । [2]स्यन्दित्वा-स्यन्त्वा, [3]स्यन्नः, [4]स्यन्दनः, [5]अनुष्यन्दमानः, [A]विष्यन्दमानः, परिष्यन्दमानः, अभिष्यन्दमानः, निष्यन्दमानः, अनुस्यन्दमानः, विस्यन्दमानः, परिस्यन्दमानः, अभिस्यन्दमानः, निस्यन्दमानः, णिनिप्रत्यये [B]निष्यन्दी, [6]स्यदः, अश्वस्यदः, गोस्यदः, [7]स्यन्त्स्यन्, [8]सिन्धुः, स्यन्दस् २-[C]स्यन्त्वा २, इत्यादिकानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

1. 'अधीगर्थदयेशां कर्मणि' (2-3-52) इति कर्मणि शेषे षष्ठी ।

A. 'रामं **सुस्मूर्षमाणो**ऽसौ कपिर्विरहदुःखितम् ॥' भ. का. 8.34.



(1973) "स्यम वितर्के" (X-चुरादिः-1694. अक. सेट्. आत्म.)

**आकुस्मीयः** । 'स्यल—' इति **न्यासकारः** (6-2-133) ।

'स्यमेः स्यमति शब्दार्थे **वितर्के स्यामयेत णौ** ॥' (श्लो. 148) इति **देवः** ।

स्यामकः-मिका, सिस्यामयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि **कलयतिवत्** (176) ज्ञेयानि । युचि [D]स्यामनः ।

1. ऊदित्त्वात् इड्विकल्पः । इडभावपक्षे धातुदकारस्य चर्त्वेन तकारः । तस्य 'झरो झरि—' (8-4-65) इति पाक्षिको लोपः । एवं तव्यदादिष्वपि बोध्यम् ।
2. ऊदित्वात् इड्विकल्पः । इडभावपक्षे 'क्त्वि स्कन्दि**स्यन्दोः**' (6-4-31) इति नलोपो निषिध्यते । 'न क्त्वा सेट्' (1-2-18) इति सेटः क्त्वायाः कित्त्वनिषेधात् उपधानकारलोपो न ।
3. निष्ठायाः 'यस्य विभाषा' (7-2-15) इत्यनिट्त्वम् । निष्ठातकारधातुदकारयोः नत्वम् ।
4. 'अनुदात्तेतश्च—' (3-2-149) इति युच्प्रत्ययः ।
5. 'अनुविपर्यभिनिभ्यः **स्यन्दते**रप्राणिषु' (8-3-72) इति सकारस्य विकल्पेन मूर्द्धन्यादेशः । **अनुस्यन्दमानः** मत्स्यः, जलं वा । अत्र न षत्वम् । 'अप्राणिषु' (8-3-72) इत्युक्तेः ।
6. '**स्यदो** जवे' (6-4-28) इति जवेऽभिधेये घञ् नलोपो वृद्ध्यभावश्च निपात्यते । अन्यत्र **घृतस्यन्दः** इत्येव; न नलोपादिकम् ।
7. 'वृद्भ्यः स्यसनोः' (1-3-92) इति परस्मैपदं वा । 'न वृद्भ्यः चतुर्भ्यः' (7-2-59) इतीण्निषेधः ।
8. औणादिके (द. उ. 1-96) उप्रत्यये संप्रसारणे च रूपमेवम् । स्यन्दतेऽर्थमिति **सिन्धुः**=समुद्रः, नदविशेषश्च ।

A. '**विष्यन्दमान**रुधिरो रक्त**विस्यन्द**पाटलान् ।' भ. का. 9-74.

B. 'सार्धं शशाङ्ककिरणाहतचन्द्रकान्त-
**निष्यन्दि**नीरनिकरेण कृताभिषेकाः ।' शि. व. 4-58.

C. '**स्यन्त्वा स्यन्त्वा** दिवश्शम्भोः मूर्ध्नि स्कन्त्वा भुवं गतम् ।' भ. का. 22-11.

D. '**अस्यामनः** क इव गूरयतेऽत्र मुष्टिम्...... ॥' धा. का. 3-35.

(1974) “**स्यमु शब्दे**” (I-भ्वादिः-826. अक. सेट्. पर.)[अ]

‘स्यमेः **स्यमति** शब्दार्थे वितर्के स्यामयेत णौ ॥’ (श्लो. 148) इति **देवः**। स्यामकः-मिका, स्यामकः-मिका, सिस्यमिषकः-षिका, [1]सेसिमकः-मिका; इत्यादीनि रूपाणि सर्वाण्यपि **ध्वनति**वत् (940) ज्ञेयानि। स्यमित्वा-स्यान्त्वा, स्यान्तः, स्यमन्तको मणिः-बाहुलकात् औणादिके झच्प्रत्यये ‘झोऽन्तः’ (7-1-3) इत्यन्तादेशे संज्ञायां कनि च रूपमिति विशेषः। औणादिके (द. उ. 3-15) किकन्प्रत्यये **सिमीका**-सूक्ष्मा कृमिजातिः। समीका-क्रिमिः इति **स्वामी**। क्वसौ-[2]स्येमिवान्-सस्यमिवान् इति।

(1975) “**स्रकि गत्यर्थः**” (I-भ्वादिः-84. सक. सेट्. आत्म.)

सर्वाण्यपि रूपाणि **कङ्कति**वत् (140) ज्ञेयानि। खल्प्रत्यये [A]दुःस्रङ्कः।

(1976) “**स्यल वितर्के**” (X-चुरादिः, अक. सेट्. आत्म.)

**न्यासकारः** ‘नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः’ (6-2-133) इत्यत्र “**स्यल** वितर्के’—अस्माच्चुरादिणिजन्तात् पचाद्यचि **स्यालशब्दो**ऽन्तोदात्तः।’ इति व्युत्पादितवान्। तदिहानुसन्धेयम्।

(1977) “**स्रन्भु विश्वासे**” (I-भ्वादिः-757, (393). सक. सेट्. आत्म.)

तालव्यादिः दन्त्यादिश्चायं इति **सि. कौमुद्याम्**। ‘स्रन्भु प्रमादे (भ्वादिः 393) प्रमादोऽवलेपः’ इति **तरङ्गिण्यां** दृश्यते। **पुरुषकारेणा**पि (श्लो. 185) उद्धृतोऽयं पाठः। विस्रम्भमाणः। विपूर्व एव विश्वास इति ज्ञापनार्थो विपूर्वस्य प्रयोगः। [B]विस्रम्भी ‘वौ कषलसकत्थ**स्रम्भः**’ (3-2-143) इत्यादिना घिनुण्प्रत्ययः। ‘स्रन्हु इति **कौशिकः**’ इति **स्वामी**।

---

[अ] **पुरुषकारे** (देवश्लो. 148) ‘स्यमयेत् इति हेतुमण्णिचि—’ इत्युक्तम्। घटाद्यन्तर्गतत्वाभावात् कथं मित्त्वं इति न ज्ञायते।

1. ‘स्वपि**स्यमि**व्येञां यङि’ (6-1-19) इति संप्रसारणे द्विर्वचने अभ्यासस्य गुणे च रूपमेवम्। एवं यङन्ते सर्वत्र बोध्यम्।

2. अत्र ‘फणां च सप्तानाम्’ (6-4-125) इति एत्वाभ्यासलोपौ वा।

A. ‘दुः**स्रङ्क**माश्रङ्क्य हरेः पदं जनः प्रश्लङ्कते कुत्र रुजं क शङ्कते।’ धा. का. 1-12.

B. ‘विकत्थी याचते प्रत्त**मविस्रम्भी** मुहुर्जलम्।’ भ. का. 7-11.



(1978) “**स्रंसु अवस्रंसने**” (I-भ्वादिः-754. सक. सेट्. आत्म.)

‘अस्रंसिष्ट स्रंसते चाद्युतादेः ते च द्वे स्तां अस्रसच्च द्युतादेः।’ (श्लो. 185) इति **देवः**। ‘अधःपतने’ इति **मैत्रेयः**।

यङि [1]सनीस्रंसकः, क्विपि-[2]उखास्रत्, [3]स्रस्त्वा-स्रंसित्वा, [4]स्रस्तिः-[5]विस्रसा, इमानि रूपाण्यधिकान्यत्रेति विशेषः।

(1979) “**स्रिवु गतिशोषणयोः**” (IV-दिवादिः-1109. सक. सेट्. पर.)

सर्वाण्यपि रूपाणि **दीव्यति**वत् (838) ज्ञेयानि। [6]स्रूतम्-[A]स्रूतः-स्रूतवान्, स्रूः-स्रुवौ-स्रुवः, [7]स्रीव्यन्-न्ती, [8]स्रूतिः, सनि-[9]सिस्रेविषकः-सुस्रूषकः; सेस्रिवकः इति विशेषरूपाणि।

(1980) “**स्रु गतौ**” (I-भ्वादिः-940. सक. अनि. पर.)

‘—स्रुतौ च **द्रुमे**। श्रु स्रु गताविति**येके**’ इति **धा. का. व्या.** (2-34)। स्रावकः-विका, स्रावकः-विका, [10]सुस्रूषकः-षिका, सोस्रूयकः-यिका; स्रोता-त्री, स्रावयिता-त्री, सुस्रूषिता-त्री, सोस्रूयिता-त्री;

---

1. यङन्ते सर्वत्र ‘नीग्वञ्चु**स्रंसु**—’ (7-4-84) इत्यादिना अभ्यासे नीगागमो बोध्यः।
2. उखायाः स्रंसते इति ‘क्विप् च’ (3-2-76) इति क्विप्। उपधानकारलोपः। ‘वसु**स्रंसु**—’ (8-2-72) इति पदान्तसकारस्य दकारः।
3. उदित्त्वादिड्विकल्पः। इट्पक्षे कित्त्वाभावात् नलोपाभावः।
4. ‘क्तिन् आबादिभ्यः’ (वा. 3-3-94) इति क्तिन्।
5. ‘विपूर्वकादस्मात् भिदादेः (3-3-104) आकृतिगणत्वात् अङि नलोपे **विस्रसा**-जरा’ इति **प्रक्रियासर्वस्वम्**।
6. निष्ठायाम्, ‘ज्वरत्वर**स्रिवि**—’ (6-4-20) इत्यूठि रूपमेवम्। **काशिकायां स्रिवि**स्थाने ‘श्रिवि’ इति पठितम्। ‘यस्य विभाषा’ (7-2-15) इत्यनिट्त्वम्।
7. शतरि ‘हलि च’ (8-2-77) इति उपधाया दीर्घः।
8. क्तिनि, ऊठि, ‘तितुत्र—’ (7-2-9) इतीण्निषेधः।
9. इवन्तत्वेन ‘सनीवन्तर्ध—’ (7-2-49) इतीड्विकल्पः। इडभावे ‘हलन्ताच्च’ (1-2-10) इति सनः कित्त्वे ‘ज्वरत्वर**स्रिवि**—’ (6-4-20) इत्यादिनोपधावकारयोरूठि द्विर्वचने च रूपमेवम्।
10. सनि ‘इको झल्’ (1-2-9) इति सनः कित्वान्न गुणः। ‘अज्झनगमां सनि’ (6-4-16) इति दीर्घः।

A. ‘दीव्यन् देवो विचित्रस्युवमथ रजकं प्रैक्षता**स्रूतम**ग्रे।’ धा. का. 2-56.

इत्यादिकानि रूपाणि सर्वाणि **द्रवति**वत् (883) ज्ञेयानि । [1]स्रावयन्, स्रावयिष्यन्; [2]स्रूः, स्रवः, [3]आस्रावः[A], संस्रावः, [4]प्रस्रावः, [5]प्रस्रावी, [6]स्रुत्, स्रुतिः, परिस्रुत्, [7]सुस्रावयिषुः-सिस्रावयिषुः, [8]स्रुक्-स्रुवः, [9]स्रोतः, इमानि रूपाणि अस्य धातोः विशेषेण भवन्तीति ज्ञेयम् ।

(1981) "**स्रेकृ गत्यर्थः**" (I-भ्वादिः-82. सक. सेट्. आत्म.)

सर्वाण्यपि रूपाणि भौवादिक**चेलति**वत् (555) ज्ञेयानि । " **अन्ये** 'षेकृ' इति विकल्पेन षोपदेशकार्यार्थं पेठुः " इति **क्षीरतरङ्गिण्याम्** ।

(1982) "**स्वन शब्दे**" (I-भ्वादिः-827. सक. सेट्. पर.)

**फणादिः ।**

सर्वाण्यपि रूपाणि **ध्वनति**वत् (940) ज्ञेयानि । स्वनः, [10]स्वानः, प्रस्वनी,

---

1. '**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो** णेः' (1-3-86) इति ण्यन्तादपि परस्मैपदमेव भवति । 'णिचश्च' (1-3-74) इत्यस्यापवादोऽयम् ।
2. स्रवतीति **स्रूः** । 'क्विपि **स्रु**द्रुपरिव्रजां दीर्घश्च इति **केचित्**' इति **प्रक्रिया-कौमुदी** ।
3. 'श्याद्व्यधा**स्रुसंस्रु**—' (3-1-141) इत्यादिना आङ्समुपसृष्टाद् अस्माण्णः कर्तरि । **संस्रावः** इत्यत्रापि एवमेव । अत्र '**आश्रुसंश्रु**' इति पठित्वा श्रुधातोरेव णप्रत्यय इति **केचित्** ।
4. 'प्रे द्रुस्तु**स्रुवः**' (3-3-27) इति प्रशब्द उपपदे घञ्प्रत्ययः ।
5. प्र उपपदे 'प्रे लपसृ—' (3-2-145) इति घिनुण्प्रत्यये रूपमेवम् ।
6. संपदादित्वात् स्त्रियां भावे क्विप् । ततः तुकि रूपमेवम् इति **प्रक्रियासर्वस्वम्** ।
7. ण्यन्तात् सनि '**स्रवति**शृणोति—' (7-4-81) इत्यभ्यासोकारस्य इकारादेशो विकल्पेन भवति । तेन रूपद्वयमिति ज्ञेयम् ।
8. स्रवति अस्मादिति '**स्रुवः** कः' 'चिक् च' (प. उ. 2-63,64) इति क-चिकौ प्रत्ययौ भवतः । 'एतौ भीमादित्वात् (3-4-74) अपादाने ।' इति **धातुवृत्तिः** ।
9. औणादिके (द. उ. 9-62) असुन्प्रत्यये तुडागमे च रूपमेवम् । शोभनं स्रवतीति **स्रोतः** ।
10. '**स्वन**हसोर्वा' (3-3-62) इति अप्प्रत्ययो भवति विकल्पेन । अबभावे घञ् । घञ्पक्षे **स्वानः** इति । उपसृष्टात्तु **प्रस्वानः** इत्येव ।

A. 'अवश्यायकणा**स्रावा**श्चारुमुक्ताफलत्विषः ।
कुर्वन्ति **चित्तसंस्रावं** चलत्पर्णाग्रसंभृताः ॥' भ. का. 6-81.



प्रस्वानः, [1]निस्वनः-निस्वानः, [2]स्वान्तम्, [A]स्वनितो-मृदङ्गः, [3]आस्वानितम्-आस्वनितः इति विशेषरूपाणि । ण्यन्तात् शतरि-[B]स्वनयन् ।

(1983) "**स्वन अवतंसने**" (I-भ्वादिः-817. सक. सेट्. पर.)

**घटादिः ।**

'**दुर्गः** एवं पठति' इति **स्वामी** । [C]विष्वणः, 'वेश्च **स्वनो** भोजने' (8-3-69) इति भोजनार्थे स्वनतेः सकारस्य मूर्द्धन्यादेशे रूपमेवम् । अवतंसनार्थे **घटादौ** मित्त्वार्थं पुनः पाठः । तेन ण्यन्ते सर्वत्र ह्रस्वः इति विशेषः । सर्वाण्यपि रूपाणि **ध्वनति**वत् (940) ज्ञेयानि ।

(1984) "**स्वर आक्षेपे**" (X-चुरादिः-1864. सक. सेट्. उभ.)

**कथादिः, अदन्तश्च ।**

स्वरकः-रिका, सिस्वरयिषकः-षिका; स्वरयिता-त्री, सिस्वरयिषिता-त्री; इत्यादिकानि रूपाणि सर्वाण्यपि **चहयति**वत् (515) ज्ञेयानि । स्वरः-सुस्वरः, सुस्वरी इति विशेषः । औणादिके (द. उ. 1-95) उप्रत्यये **स्वरुः**=वज्रमित्यर्थः ।

(1985) "**स्वर्त गत्यां च**" (X-चुरादिः-सेट्. उभ.)

'**चकारात्** कृच्छ्रजीवने । स्वर्तयति इति । षोपदेशः इति **नन्दी** । श्वभ्र गतौ च इति **दौर्गाः** ।' इति **क्षीरतरङ्गिण्याम्** । 'श्वर्त' इति तालव्यान्तत्वेन **माधवेन** पठितः । सर्वाण्यपि रूपाणि **गन्धयति**वत् (375) ज्ञेयानि ।

(1986) "**स्वद[दे] आस्वादने**" (I-भ्वादिः-19. सक. सेट्. आत्म.)

'**आस्वादनं**-जिह्वया लेहः' इति **स्वामी** । 'ष्वर्द—' इति **पुरुषकारः** ।

---

1. 'नौ गदनदपठ**स्वनः**' (3-3-64) इति निशब्द उपपदे वा अप्प्रत्ययः । तेन रूपद्वयम् ।
2. 'क्षुब्ध**स्वान्त**—' (7-2-18) इत्यादिना निष्ठायामनिट्त्वं निपात्यते, मनोऽभिधीयते चेत् । अन्यत्र **स्वनितो** मृदङ्गः । इदं च ण्यन्तात् निष्ठायामिति **केचित्** ।
3. आङ्पूर्वादस्मात् 'रुष्यमत्वरसंघुषा**स्वनाम्**' (7-2-28) इति निष्ठायामिड्-विकल्पः । आङ्पूर्वस्य **स्वने**र्मनोऽभिधानेऽपि परत्वादयं विकल्पः; 'क्षुब्ध**स्वान्त**—' (7-2-18) इति निपातनं बाधते ।

A. 'राम**स्वनित**सङ्काशः **स्वान** इत्यवदत् स ताम् ॥' भ. का. 5-55.
B. '......स नन्दसूनुः **स्वनयन्** कलापम् ॥' धा. का. 2-13.
C. 'अविषीदन्नवष्टब्धान् व्यष्टभ्नात्पर**विष्वणान्** ॥' भ. का. 9-72.

'**आस्वादनेऽर्थे स्वदते** स्वादयेदिति शबणिचोः।' (श्लो. 103) इति **देवः**। '—संवरणे' इति **क्षीरस्वामी**। **आस्वादन**मनुभवः। अत्रायं सकर्मकः। '**स्वदन्ति** देवा उभया निहव्या' (ऋक्-7-2-2) इति दर्शनात् छन्दसि सकर्मकः परस्मैपद्यपि। सर्वाण्यपि रूपाणि **कर्जति**वत् (169) ऊह्यानि। निष्ठायाम् [A]स्वर्दितः।

(1987) "**स्वाद आस्वादने**" (I-भ्वादिः-28. सक. सेट्. आत्म.)

'**आस्वादने**ऽर्थे स्वदते स्वादयेदिति शबणिचोः।' (श्लो. 103) इति **देवः**। स्वादकः-दिका, स्वादकः-दिका, सिस्वादिषकः-षिका, सास्वादकः-दिका ; इत्यादिकानि रूपाणि सर्वाण्यपि भौवादिक**कासति**वत् (188) ज्ञेयानि। 'अनुदात्तेतश्च—' (3-2-149) इति युच्प्रत्यये स्वादनः इति। आस्वादः, आस्वादितः, आस्वादनम्, आस्वादित्वा, आस्वाद्य इति विशेषः।

(1988) "**स्वृ शब्दोपतापयोः** (I-भ्वादिः-932. अक. वेट्. पर.)

स्वारकः-रिका, स्वारकः-रिका, सिस्वारिषकः-सुस्वूर्षकः-र्षिका, सेस्त्रीयकः-यिका ; [1]स्वरिता-स्वर्ता-त्री, स्वारयिता-त्री; सिस्वरिषिता-त्री, सुस्वूर्षिता-त्री, सेस्त्रीयिता-त्री ; इत्यादिकानि रूपाणि सर्वाण्यपि जौहोत्यादिक**पिपर्त्ति**वत् (1044) ज्ञेयानि। [2]स्वृतः-स्वृतम्, निस्वृत्, स्वरितव्यम्-स्वर्तव्यम्, निस्वारी, [3]स्वरः, [4]अनुस्वारः, स्वरितुम् - स्वर्तुम्, [5]स्वरणः, [6]स्वरमाणः, [7]सिस्वरिषुः-सुस्वूर्षुः, [8]स्वरिष्यन्, [9]संस्वरमाणः, [10]स्वरुः इत्यादिकानि रूपाण्यधिकान्यत्रेति विशेषः।

---

1. '**स्वरति**सूतिसूयति—' (7-2-44) इतीड्विकल्पे रूपद्वयम्।
2. निष्ठायाम्, 'श्र्युकः क्किति' (7-2-11) इतीण्निषेधः।
3. 'क्षुब्धस्वान्त—' (7-2-18) इति सूत्रे '**स्वर**' इति निर्देशात् अचि रूपमेवम्। इति **धा. का. व्याख्या** (2-23)।
4. अनुपूर्वकात् अस्मात् घञ्प्रत्यये रूपमेवम्।
5. 'चलन**शब्दार्थात्**—' (3-2-148) इति युचि रूपमेवम्।
6. 'ताच्छील्यवयोवचनशक्तिषु—' (3-2-178) इति यथासम्भवं चानश्प्रत्ययः।
7. 'सनीवन्तर्धभ्रस्जदम्भुश्रि**स्वृ**—' (7-2-49) इतीड्विकल्पे रूपमेवम्।
8. '**स्वरति**सूति—' (7-2-44) इति वैकल्पिकमिटं बाधित्वा, 'ऋद्धनोः स्ये' (7-2-70) इति नित्यमिडागमोऽत्र। एवं संपूर्वकादात्मनेपदेऽपि **संस्वरिष्यमाणः** इति नित्यमिडागमो बोध्यः।
9. 'विदिप्रच्छि**स्वरतीना**मुपसंख्यानम्' (वा. 1-3-29) इति सम्पूर्वकादस्मात् आत्मनेपदम्।
10. औणादिके (द. उ. 1-95) उप्रत्यये रूपमेवम्। **स्वरुः**=यूपे छिद्यमाने प्रथमं पतितः शकलः।

A. 'मुदा स चेतो ददे चिरं हरौ **स्वादा**त्सुरैः **स्वर्दित**मङ्गलोर्दने।' धा. का. 1-4.



(1989) "**हट दीप्तौ**" (I-भ्वादिः-312. अक. सेट्. पर.)

हाटकः-टिका, हाटकः-टिका, जिहटिषकः-षिका, जाहटकः-टिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कखति**वत् (141) बोध्यानि। अत्र 'कुहोश्चुः' (7-4-62) इति सन्नन्ते यङन्ते च अभ्यासे झकारः। तस्य 'अभ्यासे चर्च' (8-4-54) इति जकारः। एवं हकारादिषु सर्वेष्वपि धातुषु सन्नन्तयङन्तयोर्बोध्यम्। [1]हाटकम्।

(1990) "**हठ प्लुतिशठत्वयोः**" (I-भ्वादिः-335. अक. सेट्. पर.)

'बलात्कारे इत्येके' इति **धातुकाव्यव्याख्या** (1-44)। पचाद्यचि हठः। रूपाणि सर्वाणि भौवादिक**कठति**वत् (148) ज्ञेयानि।

(1991) "**हद पुरीषोत्सर्गे**" (I-भ्वादिः-977. अक. अनिट्. आत्म.)

हादकः-दिका, [2]जिहत्सकः-त्सिका, जाहदकः-दिका ; हन्नः-निष्ठातकारधातुदकारयोर्नकारः। इत्यादीनि रूपाणि सर्वाण्यपि आदादिक**द्वेष्टि**वत् (889) बोध्यानि।

(1992) "**हन हिंसागत्योः**" (II-अदादिः-1012. सक. अनि. पर.)

[3]घातकः-तिका, [4]घातकः-तिका, [5]जिघांसकः-सिका, [6]जेघ्नीयकः-यिका,

---

1. 'संज्ञायाम्' (3-3-109) इति ण्वुल्। बाहुलकात् क्लीबत्वम्। **हाटकं** सुवर्णम्।
2. 'खरि च' (8-4-55) इति चर्त्वेन धातुदकारस्य तकारः।
3. 'ण्वुल्तृचौ' (3-1-133) इति ण्वुल्। '**हो हन्ते**र्ञ्णिन्नेषु' (7-3-54) इति हन्तेर्हकारस्य कुत्वम्। सोष्मणो घोषवतो नादवतो महाप्राणस्य हकारस्य तादृश एव घकार आदेशो भवति। इदमुत्तरत्रापि ञित्-णित्-प्रत्ययेषु नकारे च परत्र भवति। '**हनस्तो**ऽचिण्णलोः' (7-3-32) इति धातुनकारस्य तकारः।
4. णिजन्तेऽपि सर्वत्र **हन्ते**र्हकारस्य कुत्वं घकारः, नकारस्य तकारश्च पूर्ववत् बोध्यः।
5. सन्नन्ते 'अज्झ**न**गमां सनि' (6-4-16) इति दीर्घः, द्विर्वचनादिकम्, अभ्यासे 'कु**हो**श्चुः' (7-4-62) इति चुत्वेन जकारः, 'अभ्यासाच्च' (7-3-55) इति उत्तरखण्डे कुत्वम्। नकारस्यानुस्वारः। एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या।
6. '**हन्ते**र्हिंसायां यङि घ्नीभावो वक्तव्यः' (वा. 7-1-30) इति वचनात् यङि विवक्षिते सति हिंसार्थेऽस्य **घ्नी**भावः, द्विर्वचनादिकम्। हलादिशेषः। 'अभ्यासे चर्च' (8-4-54) इति अभ्यासे जकारः। 'गुणो यङ्लुकोः' (7-4-82) इति गुणः।

[1]जङ्घनकः-निका ;

हन्ता-त्री, घातयिता-त्री, जिघांसिता-त्री, जेघ्नीयिता-जङ्घनिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गच्छति**वत् (376) बोध्यानि। [2]हनिष्यन्-न्ती-ती, [3]आहनिष्यमाणः, [4]प्रणिघ्नन्-[5]व्यतिघ्नन्-आघ्नन्-चौरस्य [6]निप्रघ्नन्-न्ती, [7]हत्वा-हतः-हतवान्-हतिः, [8]पद्धतिः, पदोपहतः, [9]पुत्रहतः-पुत्त्रहतः, [10]कुमारिहता,

---

1. गत्यर्थत्वे तु धातोः ‘नुगतोऽनुनासिकान्तस्य’ (7-4-85) इति नुगागमः। नुकः ‘पदान्तवत्’ इत्यतिदेशात् अनुस्वारः उपलक्ष्यते। ‘अभ्यासाच्च’ (7-3-55) इत्युत्तरखण्डेऽपि हकारस्य कुत्वेन घकारः। एवं सन्नन्ते सर्वत्र बोध्यम्।
2. ‘**ऋद्धनोः** स्ये’ (7-2-70) इतीडागमः स्यप्रत्यये परतः।
3. ‘आङो यम**हनः**’ (1-3-28) इति अकर्मकादस्मात् आत्मनेपदम्। ‘अकर्मकात्’ (1-3-26) इत्युक्तेः ‘चोरमाघ्नन्’ इत्यत्र परस्मैपदमेव। ‘**आजघ्ने** विषमविलोचनस्य वक्षः’ (किरातार्जुनीये 17-63) ‘**आहध्वं** रघूत्तमम्’ (भ[illegible]) इत्यादिषु सकर्मकस्थलेषु आत्मनेपदं चिन्त्यमेवेति **माधवाचार्याः**। परे [illegible] तत्र-तत्राश्रित्य समाहितवन्तः। ‘एत्य’ इति अध्याहृत्य वक्षः, रघूत्तमं वा एत्य—इति **हरदत्तो** व्याचख्यौ।
4. शतरि, शपो लुकि, शतुः सार्वधातुकत्वेन ङिद्वद्भावात् ‘गमहनजनखनघसां लोपः क्ङिति अनङि’ (6-4-98) इति **हन्ते**रुपधाकारस्य लोपः। ‘**हो हन्तेः—**’ (7-3-54) इति कुत्वेन घकारः। ‘**नेर्ग**दनदपतपदघुमास्यतिहन्ति—’ (8-4-17) इति उपसर्गस्थान्निमित्तादुत्तरस्य नेः णत्वम्।
5. ‘न **गतिहिंसार्थेभ्यः**’ (1-3-15) इति कर्मव्यतीहारात्मनेपदनिषेधः, धातोः हिंसार्थकत्वात् गत्यर्थत्वात् च।
6. ‘जासि**निप्रहण**—’ (2-3-56) इति चोरस्य षष्ठी।
7. ‘अनुदात्तोपदेश—’(6-4-37) इत्यादिना झलादिषु क्ङित्प्रत्ययेषु क्त्वा-क्तिन्-क्त-क्तवतुप्रभृतिषु अनुनासिकलोपः।
8. पादाभ्यां हन्यते=गम्यते इति **पद्धतिः**। अत्र धातोर्गत्यर्थकम्। क्तिन्। ‘हिमकाषि-**हतिषु** च’ (6-3-54) इति पादशब्दस्य पद्भावः। बाह्वादित्वात् (4-1-96) ङीषि **पद्धती** इत्यपीति **माधवः**। ‘**पदोपहतः**’ इत्यत्र तु ‘पादस्य पद् आज्यातिगो-**पहतेषु**’ (6-3-52) इति पदादेशः।
9. ‘वा **हत**जग्धपरेषु’ (वा. 8-4-48) इति पुत्रतकारस्य हतशब्दे परे वा द्वित्वम्।
10. कुमारी चासौ हता चेति कर्मधारये ‘घरूपकल्पचेलड्ब्रुवगोत्र**हतेषु**—’ (6-3-43) इति कुमारीशब्दस्य ह्रस्वः। कुमार्या हता इति समासे तु न ह्रस्वः—**कुमारीहता** इत्येव।



[1]स्त्रीहता-स्त्रिहता-ब्रह्मबन्धूहता-ब्रह्मबन्धुहता, [2]लक्ष्मीहता, [3]विदुषिहता-विदुषीहता-श्रेयसीहता-श्रेयसिहता, विद्वद्धता-श्रेयोहता, [4]महद्धता, [5]अन्तर्हत्य, [6]कणेहत्य-मनोहत्य, [7]घात्यः-वध्यः, [8]ब्रह्महत्या-असिहत्या, [9]अश्वहत्या, ‘[10]हत्याशतं पानसहस्रम्’ (श्रुतिः) [11]घनाघनः, [12]शत्रुहः, [13]दार्वाघाटः,

---

1. ‘नद्याः शेषस्यान्यतरस्याम्’ (6-3-44) इति ह्रस्वविकल्पः।
2. ‘कृन्नद्याः प्रतिषेधः’ (वा. 6-3-44) इति प्रतिषेधान्न ह्रस्वः।
3. ‘उगितश्च’ (6-3-45) इति पूर्वपदस्य ह्रस्वविकल्पः। विद्वच्छ्रेयसोः पुंवद्भावोऽपि **वृत्तिकार**वचनादत्रेति बोध्यम्।
4. महच्छब्दस्यापि पुंवद्भावोऽत्र **आत्रेयेणो**क्त इति **माधवः**।
5. ‘**अन्तर**परिग्रहे’ (1-4-65) इति ‘अन्तर्’ इत्यस्य गतित्वम्। ‘कुगतिप्रादयः’ (2-2-18) इति समासे ल्यपि ‘वा ल्यपि’ (6-4-38) इति व्यवस्थितविभाषा-विज्ञानात् नान्तानिटोऽस्य धातोर्नकारलोपो नित्यः। **अन्तर्हत्य** मध्ये हत्वा इत्यर्थः। परिग्रहार्थे तु ‘**अन्तर्हत्वा** मूषिकां गतः श्येनः’ इत्यत्र न गतित्वम्। तेन न ल्यप्। स्वभावादयं योगः **हन्ति**विषयकः।
6. ‘कणेमनसी श्रद्धाप्रतीघाते’ (1-4-66) इति कणे, मनसि इत्यनयोः गतित्वम्। सप्तम्यन्तप्रतिरूपके इमे। पूर्ववत् समासे ल्यप्। कणेशब्दोऽभिलाषार्थकः, मन-सिशब्दोऽपीति **न्यासपदमञ्जर्यौ**। ‘**कणेहत्य मनसिहत्य** वा पयः पिबति।’ अभिलाषनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः। निरुक्तभिन्नार्थत्वे तु **कणे हत्वा, मनसि हत्वा** इत्येव। इदमपि सूत्रं स्वभावात् **हन्ति**विषय एव प्रवृत्तम्।
7. ‘**हनो** वा **वध** च’ (वा. 3-1-97) इति कर्मणि यत्, प्रकृतेर्वधादेशश्च। **वध्यः** वधकर्मीभूतः। पक्षे ण्यति, कुत्वे तकारे च **घात्यः**। दिगादित्वात् (4-3-54) यतैव सिद्धमिति **भगवान् कात्यायनः**।
8. ‘**हनस्त** च’ (3-1-108) इति भावार्थे सुप्यनुपसर्गे उपपदे **हन्तेः** क्यप्। नकारस्य तकारश्च। एवं **भ्रूणहत्या** इत्यादिकमपि। स्त्रीत्वं स्वभावात्।
9. **अश्वहत्या**शब्दोऽपि पूर्ववत् **हन्तेः** क्यपि नकारस्य तकारादेशे सिद्धः। **केचिन्नेदं** पठन्तीति **माधवः**।
10. अत्र श्रुतिवाक्ये छान्दसत्वात् निरुपपदादपि **हन्तेः** क्यप् इति **माधवीये** स्पष्टम्।
11. ‘**हन्ते**र्घत्वं च’ (वा. 6-1-12) इति वचनात् हन्तेः पचाद्यचि द्वित्वम्, पूर्वोत्तर-खण्डयोर्घकारो हकारस्य, पूर्वखण्डे आक् आगमश्च। ‘**घनाघनः**=वर्षुकमेघः, हन्ता च’ इति **प्रक्रियासर्वस्वम्**। ‘**घनाघनः** क्षोभणश्चर्षणीनाम्’(तै. सं.4-6-4-1)।
12. शत्रुं वध्यात् इत्याशीरर्थे गम्ये ‘आशिषि **हनः**’ (3-2-49) इति कर्मण्युपपदे डप्रत्ययः। डित्त्वात् टिलोपः। एवं **तिमिरहः, अरातिहः** इत्याद्यपि।
13. ‘दारा**वाहनो**ऽण् अन्तस्य च टः संज्ञायाम्’ (वा. 3-2-49) इति दारुशब्द उपपदे आङ्पूर्वात् **हन्तेः** कर्तरि अण्, नकारस्य टकारः—संज्ञायाम्। अन्त्यस्य प्रत्ययस्य णित्वात् धातोर्घः। **दार्वाघाटः** पक्षिविशेषः, यस्य चञ्चूरुभयत्र प्रतिरूढा कुद्दालवत्। अन्यत्र तु **दार्वाघातः** इत्येव।

दार्वाघातः, [1]चार्वाघाटः-चार्वाघातः, [2]वर्णसङ्घाटः-वर्णसङ्घातः, [3]क्लेशापहः-तमोऽपहः, 'स्रगियं यदि [4]जीवितापहा' ज्वरापहा, निश्शेषजाड्यापहा, [5]जघ्निवान्-जघन्वान्, [6]तिमिहः-अरातिहः, वराहः-पटहः-कलहः, [7]अभ्याघाती, [8]कुमारघाती-शीर्षघाती, [9]ज्यायाघ्नः, पतिघ्नी,

---

1. चारु आहन्तीति **चार्वाघाटः—चार्वाघातो** वा। 'चारौ वा' (वा. 3-2-49) इति पूर्ववत् कर्तरि अण्, अन्त्यस्य टकारविकल्पः। प्रत्ययस्य णित्त्वात् धातोर्घकारः।
2. वर्णान् संहन्तीति **वर्णसंघाटः वर्णसंघातो** वा। 'कर्मणि समि च' (वा. 3-2-49) इति पूर्ववत् अणादिकम्।
3. 'अपे क्लेशतमसोः' (3-2-50) इति क्लेशतमसोरुपपदयोः अपपूर्वकात् **हन्तेः** डः। डित्त्वात् टिलोपः।
4. अत्र 'क्विप् च' (3-2-76) इति क्विप्। सुपि 'सौ च' (6-4-13) इति दीर्घे, नलोपः। स्त्रियाम, 'ऋन्नेभ्यः—' (4-1-5) इति नान्तत्वलक्षणङीब् न भवति, 'बह्वादिषु (ग.सू. 4-1-45) ङीष्विकल्पार्थं '**हन्**' इति पाठात्' इति **माधवः**। इयमेव गतिः **ज्वरापहा, निश्शेषजाड्यापहा** इत्यादिष्वपि। **क्षीरस्वामी** तु 'अन्येभ्योऽपि' इति डप्रत्यये परिखेत्यादिवत् साधितवान्।
5. लिटः क्वसौ, 'विभाषा गम**हन**विदविशाम्' (7-2-68) इति वा इडागमः। इट्पक्षे **जघ्निवान्** इति, इडभावपक्षे **जघन्वान्** इति च रूपम्। घत्वोपधाकारलोपादिकं पूर्ववत् बोध्यम्।
6. 'अन्येभ्योऽपि—' इति डप्रत्यये **क्षीरस्वामी** एतान् साधयति। तादृशं वचनं न दृश्यते। गमेर्डप्रत्ययविधायकं वचनमस्य विवक्षितमिति भाति। वरं आहन्तीति **वराहः**। पटे हन्यते इति **पटहः**। कलं=माधुर्यं हन्तीति **कलहः**।
7. '**सम्पृच............मुषाभ्याहन**श्च' (3-2-142) इति ताच्छीलिको घिनुण्। घत्वतत्वे च।
8. 'कुमारशीर्षयोर्णिनिः' (3-2-51) इति णिनिप्रत्ययः। घत्वतत्वे च। अत्रैव निपातनात् शिरसः शीर्षादेशः। 'कुत्सित इति वक्तव्यम्' (वा. 3-2-93) इति वचनादत्र कुत्सा द्योत्या।
9. 'लक्षणे जायापत्योष्टक्' (3-2-52) इति टक्प्रत्ययो लक्षणवति कर्तरि। सूत्रे 'लक्षणे' इति लक्षणवतो निर्देशः। 'गम**हन**—' (6-4-98) इति उपधाकारलोपः। घत्वम्। **जायाघ्नः** तिलकालकविशेषवान्। यस्य हस्तादिषु जायामरणलक्षयितृ तिलाकारं कालकं विद्यते स एवमुच्यते। एवं यस्याः स्त्रियाः पाणौ पतिहननसूचिका रेखा विद्यते सोच्यते **पतिघ्नी** पाणिरेखा इति। **जायाघ्नः पतिघ्नी** इत्यत्र विशेष्यवशात् नियतलिङ्गता।



[1]श्लेष्मघ्नम्-मधु, [2]आखुघातः, [3]कृतघ्नः, [4]गोघ्नः, [5]हस्तिघ्नः-कपाटघ्नः-कवाटघ्नः, [6]पाणिघः-ताडघः, [7]पितृव्यघाती, [8]ब्रह्महा-भ्रूणहा-वृत्रहा, [9]वृत्रघ्नः-वृत्रघ्णः, [10]घातुकः-घातुकी, [11]वधकः,

---

1. 'अमनुष्यकर्तृके च' (3-2-53) इति टक्। पूर्ववत् प्रक्रिया। **श्लेष्मघ्नम्** मधु, **पित्तघ्नं** जम्बीरफलम्, **वातघ्नः** शाकविशेषः।
2. आखुं हन्तीत्यर्थे 'कर्मण्यण्' (3-2-1) इत्यण्। घत्वतत्वे च।
3. अत्र 'कप्रकरणे मूलविभुजादिभ्यः—' (वा. 3-2-5) इति कप्रत्यये, उपधाकारलोपे, घत्वे च रूपमिति **केचित्। माधव**स्तु कृतं हन्तीत्यर्थे 'कृत्यल्युटो बहुलम्' (3-3-113) इति बहुलग्रहणात् टक्प्रत्ययमवादीत्। एवमेव **क्रियमाणघ्नः, करिष्यमाणघ्नः, शत्रुघ्नः** इत्यादिष्वपि गतिः। टकि **कृतघ्नी** इति; के **कृतघ्ना** इति च स्त्रियां भवेत्।
4. गौर्हन्यतेऽस्मै इति **गोघ्नः**=अतिथिः। 'दाश**गोघ्नौ** सम्प्रदाने' (3-4-73) इति सूत्रे निपातनादेव सम्प्रदाने टक्प्रत्ययः। अजन्तोऽयमिति **प्रक्रियासर्वस्वम्**।
5. हस्तिहनने शक्त एवमुच्यते। 'शक्तौ हस्ति**कपाटयोः**' (3-2-54) इति **हन्ते**ष्टक्। **हस्तिघ्नो** भटः। **कपाटघ्नः** चोरः। अशक्तौ यो विषादिभिर्हस्तिं हन्ति सः **हस्तिघातः**। एवम्—यः कुठारादिभिर्बहुभिः साधनैः कपाटं हन्ति स उच्यते **कपाटघात** इति। उभयत्र 'कर्मण्यण्' (3-2-1) इत्यण्। '**—कवाटयोः**' इति सूत्रे पाठभेदः।
6. '**पाणिघताडघौ** शिल्पिनि' (3-2-55) इति निपातनात् **हन्ते**ष्टकि टिलोपे, घत्वे च रूपम्। पाणिं हन्तीति **पाणिघः** हस्तेनैव तालवाद्यप्रावीण्यप्रदर्शयिता। **ताडं**=हनुं हन्तीति **ताडघः** मुखेनैव वाद्यविशेषवादयिता।
7. पितृव्यं हतवान् **पितृव्यघाती**। 'कर्मणि **हनः**' (3-2-86) इति **हन्ते**र्भूते णिनिः।
8. **हन्तेः** 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (3-2-87) इति क्विप्। **हन्ते**रेव, ब्रह्मादिष्वेव, क्विबेव, भूते एव इति चतुर्विधोऽत्र सूत्रे नियमः। ब्रह्म हतवान् **ब्रह्महा**। भ्रूणं=गर्भं हतवान् **भ्रूणहा**। वृत्रं हतवान् **वृत्रहा** इन्द्रः। 'सौ च' (6-4-13) इति दीर्घः। एवं नियमाङ्गीकारात् **हिमहा, केशिहा, कालनेमिनिहा** इत्यादिषु 'क्विप् च' (3-2-76) इति सार्वत्रिकः क्विप्।
9. द्वितीयाबहुवचनान्तमिदम्। अत्र 'प्रातिपदिकान्तनुम्विभक्तिषु च' (8-2-154) इति णत्वविकल्पः।
10. 'लषपतपदस्थाभूवृष**हन**—' (3-2-154) इति उकञ् ताच्छीलिकः। घत्वतत्वे। स्त्रियां **घातुकी**।
11. 'बहुलं तण्य**वधक**—' (वा. 2-4-54) इति वचनात् ण्वुलि प्रकृतेः **वधा**देशः। सोऽयमकारान्तादेशः। यद्वा हलन्तत्वेऽपि 'जनि**वध्यो**श्च' (7-3-15) इति वृद्धिनिषेधः।

[1]वधः, [2]विघ्नः, [3]अभ्रघनः, [4]अन्तर्घनः-अन्तर्घणः, [5]प्रघणः-प्रघाणः, [6]उद्घनः, [7]अपघनः, [8]अयोघनः, विघनः, द्रुघनः-द्रुघणः, [9]स्तम्बघ्नः-स्तम्बघनः, [10]परिघः-पलिघः, [11]प्रतिघः,

---

1. '**हनश्च वधः**' (3-3-76) इति भावेऽप्प्रत्यये प्रकृतेर्वधादेशः।
2. 'घञर्थे कविधानं स्थास्नापाव्यधि**हनि**युध्यर्थम्' (वा. 3-3-58) इति कप्रत्ययः। विशेषेण हन्तीति **विघ्नः**।
3. 'मूर्तौ **घनः**' (3-3-77) इति हन्तेरप्प्रत्यये प्रकृतेर्घनादेशः; काठिन्ये गम्ये। **मूर्तिः**=काठिन्यम्। **अभ्रघनः**=अभ्रस्य काठिन्यमित्यर्थः। **घनं** दधि। विशेषणविशिष्टवस्तुनोऽपि मूर्तिशब्देन ग्रहणमिति **प्रक्रियासर्वस्वम्**।
4. '**अन्तर्घनो** देशे' (3-3-78) इति निपातनात् देशे वाच्ये अन्तःपूर्वकादस्मात् अप्प्रत्यये प्रकृतेर्घनादेशः। **अन्तर्घनः**=वाहीकग्रामविशेषः। अन्तः मध्ये हन्यतेऽत्रेति वृत्तिः। '**अन्तर्घणः**' इति कृतणत्वं **केचित्** सूत्र एव पठन्ति। तेषां, '**अन्तः**शब्दस्य अङ्किविधिणत्वेषु उपसर्गत्वं वक्तव्यम्' (वा. 1-4--65) इत्युक्त्यैव सिद्धं णत्वम्-इति भावः।
5. 'अगारैकदेशे **प्रघणः प्रघाणश्च**' (3-3-79) इति निपातनात् साधुः। बाह्यप्रकोष्ठकेऽलिन्दे वा वाच्ये प्रपूर्वकाद्धन्तेः अप्प्रत्यये प्रकृतेः घनादेशः '**प्रघाणः**' इत्यत्र दीर्घः, णत्वं च निपातनलभ्यानि। '**प्रघणः**' इत्यत्र तु 'हन्तेरत्पूर्वस्य' (8-4-22) इति णत्वं सिद्धमेव।
6. उत् उपरि यस्य निधाय अन्यत् काष्ठादिकं तक्ष्यते तस्मिन्=अत्याधाने विवक्षिते '**उद्घनोऽत्याधानम्**' (3-3-80) इति निपातनात् पूर्ववत् घनादेशादिकम्।
7. अप हन्यते इति '**अपघनोऽङ्गम्**' (3-3-81) इति निपातनात् साधुः।
8. अयः **हन्यते** येन सः **अयोघनः** कूटः। विहन्यते येन सः **विघनः**=समीकरणसाधनम्। द्रुः हन्यते येन सः **द्रुघनः**=कुठारादिः। 'करणेऽयोविद्रुषु' (3-3-82) इति हनोऽप्प्रत्यये घनादेशः। '**द्रुघणः**' इति **केचित्**। तदानीम्, 'पूर्वपदात् संज्ञायामगः' (8-4-3) इति, अरीहणादिषु (4-2-80) '**द्रुघणः**' इति पाठाद्वा णत्वमत्रेति ज्ञेयम्।
9. स्तम्बशब्द उपपदे करणे **हनः** कप्रत्ययः; अप् च। 'स्तम्बे क च' (3-3-83) इति कप्रत्यये **स्तम्बघ्नः**। अप्प्रत्यये तु **स्तम्बघनः** इति। दात्रादिकमेवमुच्यते—येन स्तम्बः तृणविशेषो हन्यते। विस्तरस्तु **माधवीये** द्रष्टव्यः।
10. '**परौ घः**' (3-3-84) इति परावुपपदे करणे **हन्तेर**प्प्रत्ययः, घश्च प्रकृतेः सर्वादेशः। परि हन्यते इति **परिघः**=अर्गलम्। '**परेश्च घाङ्कयोः**' (8-2-22) इति लत्वविकल्पः। तेन **पलिघः** इत्यपि।
11. '**प्रतिघः**' इति बाहुलकात्-इत्या**त्रेयः**—इति **माधवः**। **प्रतिघः** कोपः। ''अन्येभ्योऽपि—' (3-2-101) इति डप्रत्यये न्यङ्क्वादित्वात् कुत्वमिति' **भानुदीक्षितः**।



[1]पर्वतोपघ्नः, उपघ्नः, [2]सङ्घः-उद्घः, [3]सङ्घातः, [4]हेतिः, [5]निघः, [6]निघ्नः, [7]समूलघातं हन्ति, [8]पाणिघातं वेदिं हन्ति, [9]दण्डोपघातं गाः शातयति, [10]प्रहणनम्, इतीमानि विशेषरूपाणि। जङ्घा, जघनम्, परिघातनः, हनुः, हनु[नू]मान्, हनूः, हिमम्, हेमन्तः, अंहतिः, घातिः, अहिः, अनेहा, घोरः, हंसः, इमे औणादिकाः।

(1993) "**हम्म गतौ**" (I-भ्वादिः-467. सक. सेट्. पर.)

**हम्मतिः**-धात्वर्थनिर्देशे इक्प्रत्ययः। गत्यर्थानां ज्ञानार्थत्वात् **अहम्मतिः**=अज्ञानम्। सर्वाण्यपि रूपाणि भौवादिक**कम्रति**वत् (268) बोध्यानि।

---

1. **उपघ्नः**=प्रत्यासन्नः '**उपघ्न** आश्रये' (3-3-85) इति निपातनात् **हन्तेर**प्प्रत्यये उपधालोपः। पर्वतेनोपहन्यते=गम्यते इति **पर्वतोपघ्नः**। अत्र धातोः गत्यर्थकत्वम्।
2. समुद्ध्यां परस्य **हन्तेः** अप्प्रत्यये संघे प्रशंसायां च गम्यमाने सति '**संघोद्घौ** गणप्रशंसयोः' (3-3-86) इति निपातनात् घत्वम्। संहननं **संघः**=प्राणिसमुदायः। भावेऽप्। अन्यत्र **संघातः**। उद्धन्यते=उत्कृष्टतया ज्ञायत इति गत्यर्थानां ज्ञानार्थत्वात् **उद्घः**=प्रशस्तः, कर्मण्यण्। अन्यत्र **उद्घातः**।
3. संपूर्वकात् अस्मात् घञि घत्वतत्वयोः **संघात**शब्दः साधुः। घ-घञोः प्रत्यययोरपवादोऽत्रेति मन्वान **आत्रेयः** 'हन्त्यर्थाश्च' (ग. सू. चुरादिः) इति चुरादिपाठात्, णिजन्तात् **संघात**शब्दनिष्पत्तिमाहेति **माधवः**।
4. हन्तीति **हेतिः**। हन्यतेऽनेनेति वा 'ऊतियूतिजूतिसाति**हेति**—' (3-3-97) इति निपातनात् नलोपे, प्रकृत्यकारस्येकारे च **हेतिः** इति **माधवः**।
5. '**निघो** निमितम्' (3-3-87) इति निपातनात् निपूर्वकादस्मात् अप्प्रत्यये साधुः। निमितम्=समन्तात् मितम्, समारोहपरिणाहमित्यर्थः। निर्विशेषं हन्यन्ते इति **निघाः** वृक्षाः, शालयश्च।
6. **निघ्नः** आयत्तः, अधीनः। निपूर्वकादस्मात्, बाहुलकात्, 'घञर्थे कविधानम्—' (वा. 3-3-58) इति वा कप्रत्ययः।
7. '**समूला**कृतजीवेषु **हन्**—' (3-4-36) इति यथासंख्यं समूले उपपदे णमुल्। 'कषादिषु यथाविधि—' (3-4-46) इति वचनात् णमुल्प्रयोजकस्यैव **हन्तेर**नुप्रयोगः। 'कृन्मेजन्तः' (1-1-39) णमुलन्तमव्ययम् इति।
8. 'करणे **हनः**' (3-4-37) इति णमुल्। पाणिना हन्तीत्यर्थः। कषादित्वात् (3-4-46) पूर्वप्रयुक्तस्यैवानुप्रयोगः।
9. 'हिंसार्थानां च समानकर्मकाणाम्' (3-4-48) इति णमुल्।
10. '**हन्तेरत्पूर्वस्य**' (8-4-22) इति णत्वम्।

(1994) **"हय गतौ"** (I-भ्वादिः....सक. सेट्. पर.)

'भक्तिशब्दयोः इत्येके' इति **धातुकाव्यव्याख्या** (1-66)। हयति=विशेषेण त्वरया गच्छतीति **हयः**=अश्वः। पचाद्यच्। गौरादित्वात् (4-1-4) ङीषि **हयी** बडवा। क्विपि-वलिलोपे तुकि **हत्**। सर्वाण्यपि रूपाणि भौवादिक**कायति**वत् (263) बोध्यानि।

(1995) **"हर्य गतिकान्त्योः"** (I-भ्वादिः-514. सक. सेट्. पर.)

**हर्या**-स्त्रियामकारप्रत्ययः। **हर्यतः**-यज्ञः। औणादिके (द. उ. 6-14) ऽतच्प्रत्यये सिद्धम्। सर्वाण्यपि रूपाणि भौवादिक**गर्हति**वत् (385) बोध्यानि।

(1996) **"हल विलेखने"** (I-भ्वादिः-837.सक. सेट्. पर.) **ज्वलादिः।**

**विलेखन्**=कर्षणम्। **हालः**-ज्वलित्यादित्वात् कर्तरि णप्रत्ययः। सम्यक् लिखन् यस्स उच्यते। संज्ञायां घप्रत्यये **हलः**=सीरः। हालिकः- हलं वहति यः सः। **हलिः**-औणादिक इन्प्रत्यये सिद्धम्। हलानां समूहः-**हल्या**। सर्वाणीतराणि रूपाणि भौवादिक**चलति**वत् (510) बोध्यानि।

(1997) **"हसे हसने"** (I-भ्वादिः-721. अक. सेट्. पर.)

[1]व्यतिहसन्-न्ती, [2]हसः-हासः, प्रहासः, [3]व्यावहासी, [4]हस्तः, हस्नः, इति विशेषरूपाणि। सामान्यरूपाणि सर्वाणि **कख** (141) धातुवत् बोध्यानि।

(1998) **"ओ हाक् त्यागे"** (III. जुहोत्यादिः-1090. सक. अनि. पर.)

'गतौ **त्यागे** यथासंख्यं जिहीते च **जहाति** च।' (श्लो. 11.) इति **देवः।**

---

1. 'प्रतिषेधे **हसादीना**मुपसंख्यानम्' (वा. 1-3-15) इति कर्मव्यतीहारत्वप्रयुक्तात्मनेपदनिषेधात् परस्मैपदं शता।
2. अनुपसृष्टादस्मात् पक्षे '**स्वनहसोर्वा**' (3-3-62) इति अप्। पक्षे **हासः।** सोपसृष्टात् तु '**प्रहासः**' इति।
3. 'कर्मव्यतिहारे णच् स्त्रियाम्' (3-3-43) इति णच् स्त्रियाम्। 'णचस्त्रियामञ्' (5-4-14) इति अञ्। ङीप्। **व्यावहासी**=परस्परं हास इत्यर्थः। स्त्रीत्वं स्वाभाव्यात्।
4. '**हसिमृ**—' (द. उ. 6-7) इत्यादिना तन्प्रत्ययः। 'तितुत्र—' (7-2-9) इति इण्निषेधः। **हस्तः**= करः, एतन्नामको नक्षत्रविशेषो वा।



[1]हित्वा, [2]हीनः-सार्थात् हीनः, हीनवान्, [3]विहाय, [4]जहत्, [5]हायनाः-व्रीहयः, [6]हानिः, [7]शर्धं-जहाः-माषाः [8]पूर्वापहाणा-अपरापहाणा, सम्प्रहाणा, [9]जहकः, [10]अहः, [11]कलहः, [12]निहाका इति विशेषः। सामान्यरूपाणि, जौहोत्यादिक**ददाति**वत् (830) बोध्यानि।

---

1. '**जहातेश्च क्त्वि**' (7-4-43) इति 'हि' इति प्रकृतेरादेशः।
2. 'घुमास्थागापा**जहाति**सां हलि' (6-4-66) इति धात्वाकारस्य ईकारः। ओदित्त्वात् निष्ठानत्वम्। 'सार्थात् हीनः' इत्यत्र 'अपादाने चाहीयरुहोः' (5-4-55) इति पञ्चम्यास्तसिल्निषेधः। 'मन्त्रो **हीनः** स्वरतो वर्णतो वा' (पाणिनीयशिक्षा) इत्यत्र तु आद्यादित्वात् (वा. 5-4-44) तसिप्रत्यय इति **कैयटः** (पस्पशायाम्)। विस्तरस्तु **माधवीयादिषु** द्रष्टव्यः।
3. 'न ल्यपि' (6-4-69) इति ईकारनिषेधः।
4. शतरि, 'श्लौ' (6-1-10) इति द्विर्वचनम्। धातोः कित्त्वात् अभ्यासे 'दीर्घोऽकितः' (7-4-83) इति दीर्घनिषेध इति **केचित्**—इति **क्षीरतरङ्गिणी**; तन्न। तत्र सूत्रे 'अकितः' इति न धातुककारो विवक्षितः; किंतु प्रत्ययस्य कित्त्वमेवेत्यास्तां तावत्। 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः।
5. '**हश्च** व्रीहिकालयोः' (3-2-148) इति ण्युट्। जहाति उदकमिति **हायनः** संवत्सरसाध्यो व्रीहिविशेषः। जहाति जीर्णमिति **हायनो**=वत्सरः।
6. 'ग्लाज्या**हाभ्यो** निः' (वा. 3-3-95) इति निप्रत्ययः। ईत्वं न। **केचित्तु** '**हीनिः**' इत्येव वदन्ति।
7. शर्धं जहाति हापयतीति वा **शर्धंजहाः**= माषाः। शर्धोऽपानशब्दः। 'वातशुनीतिलशर्धेषु अजधेट्**जहातीनाम्**—' (वा. 3-2-28) इत्युपसंख्यानात् खश्। शित्त्वात् शप्। तस्य श्लुः। 'श्लौ' (6-1-10) इति द्विर्वचनम्। 'श्नाभ्यस्तयोः—' (6-4-112) इत्याकारलोपः। पूर्वपदस्य 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुम्।
8. पूर्वान् अपरांश्च जहातीत्यर्थः। बाहुलकात् कर्तरि ल्युट्। अजादि (4-1-4) पाठात् टाप्। णत्वम्। '**सम्प्रहाणा**' इत्यपि अजादिषु पठन्तीत्या**त्रेयादि**मतमिति **माधवः।**
9. जहातीति **जहकः** त्यागी, कालपुरुषश्च। '**जहातेर्द्वे** च' (द. उ. 3-6) इति क्वुन्, द्वित्वं च।
10. 'नञि **जहातेः**' (द. उ. 6-52) इति कनिन्प्रत्यये आकारलोपः। अहः=दिनम्।
11. 'कलं जहातीति **कलहः**। 'सुपि—' (3-2-5) इति कप्रत्ययः। आकारलोपः।' इति **क्षीरस्वामी।**
12. 'नौ हः' (द. उ. 3-22) इति कन्। **निहाका** गोधा।

(1999) **“ओ हाङ् गतौ”** (III-जुहोत्यादिः-1089. सक. अनिट्. आत्म.)

‘**गतौ** त्यागे यथासंख्यं **जिहीते** च जहाति च ।’ (श्लो. 11) इति **देवः** ।

हायकः-यिका, हापकः-पिका, जिहासकः-सिका, जाहायकः यिका ;
हानः-हानवान्, हायनः, हानिः इत्यादीनि रूपाणि जौहोत्यादिक**ददाति**वत् (830) बोध्यानि ।

(2000) **“हि गतौ वृद्धौ च”** (V-स्वादिः-1257. सक-अक. अनि. पर.)

हायकः-यिका, हायकः-यिका, [1]जिघीषकः-षिका, [2]जेघीयकः-यिका ;
इत्यादीनि रूपाणि सर्वाणि **पि**धातुवत् (991) बोध्यानि । [3]प्रहिण्वन्-ती, [4]प्रजिघाययिषन्-न्ती, [5]सहितम्-संहितम्, संहिता, [6]हयः-हयी, [7]हेतिः, [8]हेतुः, इति विशेषरूपाणि ।

(2001) **“हिक्क अव्यक्ते शब्दे”** (I-भ्वादिः-861. अक. सेट्. उभ.)

भौवादिक**कड्डति**वत् (156) सर्वाणि रूपाणि बोध्यानि । [9]हिक्का ।

---

1. सनि ‘**अज्झनगमां सनि**’ (6-4-16) इति दीर्घः । ‘**हेरचङि**’ (7-3-56) इति अभ्यासादुत्तरस्य कुत्वेन घकारः । एवं सन्नन्तेऽत्र धातौ सर्वत्र बोध्यम् ।
2. यङन्तेऽपि ‘हेरचङि’ (7-3-56) इति कुत्वं बोध्यम् ।
3. शतरि, स्वादित्वात् श्नुप्रत्ययः, गुणनिषेधः । ‘**हिनुमीना**’ (8-4-15) इति णत्वम् ।
4. ण्यधिकस्यापि ‘**हेरचङि**’ (7-3-56) इति कुत्वम् । अत्र णिजन्तात् सन् । तदन्तात् शता ।
5. सम्पूर्वकात् अस्मात् निष्ठायाम् ‘**समो वा हिततयोः**’ (वा. 6-1-144) इति समो मकारस्य लोपविकल्पः । ‘**संहिता**’ इति तु ‘क्तिच्क्तौ च संज्ञायाम्’ (3-3-74) इति क्तान्तः वेदसंहितावाचिका ।
6. पचाद्यचि **हयः**=अश्वः । अतिशयेन गच्छतीत्यर्थः । **हयी** इति तु गौरादिङीषन्तः ।
7. ‘ऊतियूतिजूतिसाति**हेति**कीर्तयश्च’ (3-3-97) इति निपातनात् क्तिनि प्रकृतेर्गुणः । **हेतिः**=आयुधम् ।
8. औणादिके (द. उ. 1-125) तुन्प्रत्यये रूपम् । **हेतुः**=कारणम् ।
9. ‘गुरोश्च हलः’ (3-3-103) इति अप्रत्ययः स्त्रियाम् । **हिक्का**=वायोः बलात्कारेण मुखात् निस्सारणम् , यस्याः भाषायाम् ‘விக்கல்’ इति नाम ।



(2002) **“हिट आक्रोशे”** (I-भ्वादिः-317. (पा) सक. सेट्. पर.)

‘हिठ’ इति **केचित्** । भौवादिक**केटति**वत् (190) सर्वाणि रूपाण्यूह्यानि ।

(2003) **“हिडि गत्यनादरयोः”** (I-भ्वादिः-268. सक. सेट्. आत्म.)

भौवादिक**कण्ठति**वत् (209) रूपाणि बोध्यानि । **हिडिम्भः**=असुरविशेषः ; औणादिकोऽयम् ।

(2004) **“हिल भावकरणे”** (VI-तुदादिः-1361. अक. सेट्. पर.)

**भावकरणम्**=अभिप्रायसूचनम् । **हेला**=परविषयकानादररूपभावसूचनम् । भिदादिपाठात् अङ् । गुणो बाहुलकात् । इतराणि सर्वाण्यपि रूपाणि तौदादिक**किलति**वत् (193) बोध्यानि ।

(2005) **“हिवि प्रीणनार्थः”** (I-भ्वादिः-591. सक. सेट्. पर.)

भौवादिक**जिन्वति**वत् (604) सर्वाणि रूपाण्यूह्यानि ।

(2006) **“हिष्क हिंसायाम्”** (X-चुरादिः-1686. सक. सेट्. उभ.)

**आकुस्मीयः ।**

क्वाचित्कोऽयं पाठो धातुकोशेषु । सर्वाण्यपि रूपाणि चौरादिक**चित्रयति**वत् (525) ऊह्यानि ।

(2007) **“हिसि हिंसायाम्”** (VII-रुधादिः-1456. सक. सेट्. पर.)

[1]हिंसकः, [2]हिंस्रः, [3]हिंसा, [4]हिंसन्-ती, [5]सिंहः इति विशेषरूपाणि । सामान्यरूपाणि **कुंशयति**वत् (232) बोध्यानि ।

---

1. ‘निन्द**हिंस**—’ (3-2-146) इति ताच्छीलिको वुञ् । **हिंसकः**=क्रूरः ।
2. ‘नमिकम्पिस्म्यजसकम**हिंस**दीपो रः’ (3-2-167) इति ताच्छीलिको रप्रत्ययः । ‘नेड् वशि कृति’ (7-2-8) इतीण्निषेधः ।
3. ‘गुरोश्च हलः’ (3-3-103) इति स्त्रियामकारप्रत्ययः ।
4. शतरि ‘रुधादिभ्यः—’ (3-1-78) इति श्नम् विकरणप्रत्ययः । ‘श्नसोरल्लोपः’ (6-4-111) इति अकारलोपः । ‘श्नान्नलोपः’ (6-4-23) इति प्रत्ययनकारलोपः। इदित्वात् नुम् तु सर्वत्र श्रूयत एव । सर्वत्र प्रयोगेषु इदित्त्वप्रयुक्तनुमः ‘नश्चापदान्तस्य झलि’ (8-3-24) इत्यनुस्वारः ।
5. पचाद्यचि हिनस्तीति **सिंहः** । ‘**सिंहो** वर्णविपर्ययात्’ इत्युक्तेः पृषोदरादित्वात् (6-3-109) वर्णयोर्विपर्ययः ।

(2008) “**हिसि हिंसायाम्**” (X-चुरादिः-1830. सक. सेट्. उभ.)

**आधृषीयः।**

इदित्त्वादेवास्य णिज्विकल्पे सिद्धे युजादिषु (चुरादौ) पाठः चिन्त्यप्रयोजन इति **माधवादयः**। रूपाणि सर्वाण्यपि **कुंशयति**वत् (232) ऊह्यानि।

(2009) “**हु दानादनयोः**”

(III-जुहोत्यादिः-1083. सक. अनिट्. पर.)

‘दानादानयोः’ **इत्येके**। दानमत्र ‘चोदित आधारे हविःप्रक्षेपः’ इति **माधवः**। ‘जीव’ धातौ प्राणस्येव अत्रापि दाने हविषो अन्तर्भावात् अकर्मकत्वं **केचिद**ङ्गीचक्रुः। ‘तृतीया च होश्छन्दसि’ (2-3-3) इत्यत्र **भाष्ये** तु ‘जुहोतिः प्रक्षेपे वर्तते’ इत्युक्तम्। ‘अग्निषु हूयमानेषु’ इत्यादिषु प्रीणनार्थकत्वमपि **भाष्यसम्मतम्**। [1]होता, क्षीरहोता, [2]जुह्वद् ब्राह्मणः, [3]जुहूः, [4]हाव्यम्, [5]होमः, [6]होत्रम् - अग्निहोत्रम्, होत्रा, [7]हविः इति विशेषरूपाणि। सामान्यरूपाणि जौहोत्यादिक**ह्रि**धातुवत् (189) बोध्यानि।

(2010) “**हुडि वरणे**” (I-भ्वादिः-269. सक. सेट्. आत्म.)

**वरणम्**-स्वीकारः। ‘हरणम्’ इति **मैत्रेयः**। **हुण्डी**=धनप्रक्षेपस्थानम्।

1. ‘ऋत्विक्षु चानुपसर्गस्य’ (वा. 3-2-135) इति ताच्छीलिकस्तृन्। ‘अप्तृन्—’ (6-4-11) इत्यादिना सर्वनामस्थाने दीर्घः। **होता**=ऋत्विग्विशेषः। **क्षीरहोता** इति तु याजकादित्वात् (2-2-9) समासे साधुः।
2. शतरि, ‘**जुहोत्यादिभ्यः—**’ (2-4-75) इति शपः श्लुः। ‘श्लौ’ (6-1-10) इति द्विर्वचनम्। ‘हुश्नुवोः सार्वधातुके’ (6-4-87) इत्यजादिक्ङित्प्रत्ययत्वे शतुः अत्रापि यण्। ‘नाभ्यस्ताच्छतुः’ (7-1-78) इति नुम्निषेधः।
3. ‘द्युतिगमि**जुहोतीनां** द्वे च’ (वा. 3-2-168) इति करणे क्विप्, द्वित्वं च। जुहृत्यनयेति **जुहूः**-स्रुक्।
4. ‘ओरावश्यके’ (3-1-125) इति ण्यत्। अवश्यं होतव्यं यत् देवार्हमेव हविः, तदुच्यते **हाव्य**मिति। अजन्तत्वलक्षणयतोऽपवादः।
5. औणादिके (द. उ. 7-26) मन्प्रत्यये **होमः**=अग्नौ पूजितस्य द्रव्यस्य प्रक्षेपः।
6. ‘**हुयामा—**’ (द. उ. 8-84) इति त्रन्प्रत्ययः। ऋत्विग्वाचको **होत्रा**शब्दस्तु स्वभावात् स्त्रीलिङ्गः इति ‘**होत्राभ्यश्छः**’ (5-1-135) इत्यत्र **पदमञ्जरी**।
7. औणादिके इसिप्रत्यये रूपम्। हूयते इति **हविः**=देवतोद्देशेन मन्त्रसंस्कृतं दधिपयआज्यादिकं द्रव्यम्।



**हुण्डिका**=मुद्रा। भौवादिक**कुण्ठति**वत् (209) रूपाण्यूह्यानि।

‘भ्वादावेव **द्रमिडाः** ‘हुडि सङ्घाते’ इति पठन्ति, **आर्यास्तु** न पठन्ति;’ इति **काश्यप**मतप्रदर्शनपूर्वकं **माधवीये** प्रतिपादितम्।

(2011) “**हुड्ड गतौ**” (I-भ्वादिः-352. सक. सेट्. पर.)

‘**हौडतीति गतौ** होडेहोडतेऽनादरे पुनः।’ (श्लो. 86) इति **देवः**। भौवादिक**तोडति**वत् (738) सर्वाण्यपि रूपाण्यूह्यानि।

(2012) “**हुर्छा कौटिल्ये**” (I-भ्वादिः-211. सक. सेट्. पर.)

‘**कौटिल्यम्**=अपसारणम्’ इति **मैत्रेयः**। हूर्छा, [1]हूः-हुरौ-हुरः, [2]हूर्णः-हूर्णवान्, हूर्णमनेन-हूर्छितमनेन, इति विशेषः। सामान्यरूपाणि **कूजति**वत् (239) बोध्यानि।

(2013) “**हुल गतौ**” (I-भ्वादिः-844. सक. सेट्. पर.)

**ज्वलादिः।**

‘हिंसासंवरणयोश्च’ इति **मैत्रेयः**। होलः। ज्वलितयादित्वात् (3-1-140) कर्तरि णप्रत्ययः। गौरादिपाठात्, संज्ञायां घञन्तात् स्त्रियां ङीषि-**होली**=औत्तर-क्रीडाविशेषः। भौवादिक**कोलति**वत् (231) इतररूपाण्यूह्यानि।

(2014) “**हूड्ड गतौ**” (I-भ्वादिः-353. सक. सेट्. पर.)

भौवादिक**तोडति**वत् (738) सर्वाणि रूपाण्यूह्यानि।

(2015) “**हृ प्रसह्यहरणे**”

(III-जुहोत्यादिः-1097. सक. अनि. पर.)

‘**प्रसह्यहृत्यां हरणे जिहर्ति** हरते हरेत्॥’ (श्लो. 27) इति **देवः**। अयं छान्दसः इति ‘अर्तिपिपर्त्योश्च’ (7-4-77) इत्यत्र **भाष्ये** स्पष्टम्। ‘अयं स्रुवो **अभिजिहर्ति** होमान्’ (आपस्तम्बश्रौतसूत्रे 4-7-2)। **कातन्त्रीयास्तु** भाषायामपि धातुममुं पठन्ति। सर्वाण्यपि रूपाणि जौहोत्यादिक**गरति** (420) वत् बोध्यानि।

1. क्विपि ‘राल्लोपः’ (6-4-21) इति छकारस्य लोपः। ‘र्वोरुपधायाः—’ (8-2-70) इति दीर्घः। सर्वत्र प्रयोगे पदान्तत्वनिबन्धनः, उपधादीर्घोऽस्य द्रष्टव्यः।
2. निष्ठायाम्, ‘आदितश्च’ (7-2-16) इतीण्निषेधे, राल्लोपे, ‘रदाभ्यां—’ (8-2-42) इति निष्ठानत्वम्। णत्वम्। भावे, आदिकर्मणि च धातोरिण्निषेधविकल्पः।

(2016) " हृञ् हरणे " (I-भ्वादिः-899. सक. अनि. उभ.)

'प्रसह्यहृत्यां **हरणे** जिहर्ति **हरते** **हरेत्** ॥' (श्लो. 27) इति **देवः** ।

**हरणम्**=प्रापणम्, स्वीकारः, स्तैन्यम्, नाशनं च ।

[1]हारयन् भारं देवदत्तं यज्ञदत्तो गच्छति, [2]संप्रहरमाणा राजानः, 'ततः [3]सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ', पैतृकमश्वाः [4]अनुहरमाणाः, मातृकं गावोऽनुहरमाणाः, शतस्य [5]व्यवहरन्-न्ती, [6]प्रतिहर्ता, [7]हरिष्यन्-न्ती, हरिष्यमाणः, [8]अवहारः, [9]अंशहरः, [10]भारहारः, [11]कवचहरः, [12]पुष्पाहरः,

---

1. 'हृक्रोरन्यतरस्याम्' (1-4-53) इति अणौ कर्तुः णौ कर्मसंज्ञा ; तेन देवदत्तशब्दात् द्वितीया ।
2. हरतेर्हिंसार्थत्वेऽपि 'न गतिहिंसार्थेभ्यः' (1-3-15) इति आत्मनेपदनिषेधो न भवति । 'हृवह्योरप्रतिषेधः' (वा. 1-3-15) इति वचनात् ।
3. अत्र युद्धाभिमुख्यमात्रमर्थः, न तु कर्मव्यतीहारः-तेन परस्मैपदम् । विस्तरस्त्वत्र **माधवीये** द्रष्टव्यः ।
4. '**हरते**र्गतताच्छील्ये' (वा.1-3-21) इति आत्मनेपदम् । **गतं**=प्रकारः, तस्य स्वभावः ताच्छील्यम् । पितृगुणमश्वाः, मातृगुणं गावश्च लभन्ते इति वाक्यार्थः । '**गतिताच्छील्ये**' इति **न्यासकारक्षीरस्वामिनौ** । **गतिः**=गमनम् । अर्थात् वेगादिकं गृह्यते ।
5. कर्मणः '**व्यवहृ**पणोः समर्थयोः' (2-3-57) इति शेषे षष्ठी 'शतस्य' इति ।
6. 'तृन्विधौ ऋत्विक्षु चानुपसर्गस्य' (वा. 3-2-135) इति वचनात् अत्र च सोपसर्गत्वात् 'ण्वुल्तृचौ' (3-1-133) इति तृच् । प्रति**हर्ता**=ऋत्विग्विशेषः ।
7. धातोरनिट्त्वेऽपि स्ये '**ऋद्ध**नोः स्ये' (7-2-70) इतीडागमः ।
8. अवहरतीति **अवहारः**=ग्राहः, ग्रहो वा । 'श्याद्व्यधास्रुसंस्रुवतीणवसावहृ—' (3-1-141) इति कर्तरि णप्रत्ययः ।
9. अंशं हरतीति **अंशहरः** । '**हरते**रनुद्यमनेऽच्' (3-2-9) इति अच्प्रत्ययः । **अनुद्यमनम्**=अनुपेक्षणम्, यस्य हरणेन शारीरक उद्यमः=प्रयत्नो न भवति तदुच्यते ।
10. शारीरक उद्यमे विवक्षिते तु 'कर्मण्यण्' (3-2-1) इति अत्र अण्प्रत्ययः । उपपदसमासः । वृद्धिः ।
11. 'वयसि च' (3-2-10) इति कर्मोपपदादस्मात् वयसि गम्ये **हरते**रच्प्रत्ययः । **कवचहरः**=कवचधारणयोग्यवयोविशिष्ट इत्यर्थः ।
12. आङ्पूर्वात्, कर्मोपपदात् अस्मात् ताच्छील्ये गम्ये 'आङि ताच्छील्ये' (3-2-11) इति अच् । **पुष्पाहरः**=यः पुष्पविक्रयादिभिः, मालाग्रथनादिभिश्च पुष्पैकजीवी, स उच्यते । एवं **तृणाहरः, दर्भाहरः, शाकाहरः** इत्याद्युदाहार्यम् ।



[1]दृतिहरिः-नाथहरिर्वा पशुः, [2]संहारः, अवहारः, [3]हारः, [4]हारा, [5]आहारः, [6]हरः-पश्यतोहरः, [7]हरिः-हरिणी, हरितः, हृदयम्, हरिमाणः, हरीमा, प्रहिः, हरेणुः, इति विशेषरूपाणि । सामान्यरूपाणि भौवादिक**भरति**वत् (1170) बोध्यानि ।

(2017) " हृष तुष्टौ " (IV-दिवादिः-1229. अक. सेट्. पर.)

'.......क्रमतोऽलीके **तुष्टौ** हर्षति **हृष्यति** ।' (श्लो. 176) इति **देवः** ।

" 'हृषु' इति **नन्दी, स्वामी च** "-इति **माधवः** । **क्षीरस्वामी** 'हृष' इत्येव पपाठ । [8]हृष्टः, हृषितः, [9]संहृष्टानि-संहर्षितानि लोमानि । हृष्टश्चैत्रः, हृष्टाः

---

1. दृतिशब्दे नाथशब्दे च कर्मभूते उपपदे सति पशौ विशेष्ये, '**हरते**र्दृतिनाथयोः पशौ' (3-2-25) इतीन्प्रत्ययः । **दृतिः**=चर्मभस्त्रिका हरतीति **दृतिहरिः**=श्वा । **नाथः**=नासारज्जुं हरतीति **नाथहरिः**=पशुः ।
2. संह्रियन्तेऽनेन, अत्र इति वा **संहारः**=युद्धम्, प्रलयश्च । 'अध्यायन्यायोद्याव**संहाराश्च**' (3-3-122) इति निपातनात् घञ् । सूत्रे चकारस्यानुक्तसमुच्चयार्थकत्वात् **अवहारः** इत्यपीति **काशिका** । **अवहारः**=चोरः । घापवादो घञ् । उपसर्गेण धातोरर्थाः भिद्यन्ते ; तथाचोक्तं **पूर्वैः**—
" उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
**विहाराहारसंहारप्रहारपरिहारवत्** ॥ " इति ।
3. 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति घञ् । ह्रियते पश्यतां मनोऽनेनेति **हारः**=मुक्तादिसरः ।
4. भिदादि (3-3-104) पाठात् स्त्रियामङि, 'ऋदृशोऽङि—' (7-4-16) इति गुणे, गणपाठादेव दीर्घे च रूपम् । हरणं **हारा** ।
5. आह्रियन्तेऽस्मात् रसाः इति **आहारः** भोजनम् । एवम् **अभ्यवहारः** इत्यपि । अत्र 'अकर्तरि च—' (3-3-19) इति घञ् ।
6. हरति पापादिकमिति **हरः**=शिवः । पचाद्यच् । प्रणतार्तिं हरतीति **प्रणतार्तिहरः** । अत्र '**हरते**रनुद्यमने—' (3-2-9) इति अच् । पश्यन्तं अनादृत्य हरतीति **पश्यतोहरः**-कस्यचित्संज्ञा । 'षष्ठी चानादरे' (2-3-38) इति षष्ठी । 'षष्ठ्या आक्रोशे' (6-3-21) इति षष्ठ्या अलुक् ।
7. हरति नतानां क्लेशादीन् इति **हरिः**=विष्णुः । अत्र '**हरते**र्दृतिनाथयोः पशौ' (3-2-25) इत्यत्र योगविभागेन इन्प्रत्ययः । **केचित्** तु योगविभागे **भाष्यादि**प्रमाणाभावात् औणादिके इन्प्रत्यये साधयन्ति ।
8. धातोः सेट्त्वेऽपि 'विस्मितप्रतिघातयोश्च' (वा. 7-2-29) इति वचनात् इड्विकल्पो निष्ठायाम् । अनिट्पक्षे तकारस्य ष्टुत्वेन टकारः । विस्मितत्वं विषण्णत्वं च दन्ताः सूचयन्तीति भावः ।
9. '**हृषे**र्लोमसु' (7-2-29) इति लोमसु वाच्येषु निष्ठाया इड्विकल्पः । प्राप्तविभाषेयम् । 'लोमानि अङ्गजानि, केशाश्च' इति **वृत्तिः** । तुष्टिं लोमानि सूचयन्तीत्यर्थः ।

दन्ताः, हृषिता वा। [1]हर्षयित्नुः। [2]हर्षुलः। हर्षः-श्रीहर्षः, प्रहर्षी। सामान्यरूपाणि भौवादिक**रेषति**वत् (1408) बोध्यानि।

(2018) **" हृषु अलीके "** (I-भ्वादिः-709. अक. सेट्. पर.)

'....क्रमतोऽलीके तुष्टौ हर्षति हृष्यति।' (श्लो. 176) इति **देवः**। '**अलीकम्**=आनन्दः' इति **काशकृत्स्नधातुपाठकन्नडव्याख्या**। [3]हृष्टः, [4]हृष्टे लोम हृषितं वा, 'भयसंहृष्टरोमाणः' (भट्टिः-9.22), [5]हृष्टो दन्तः, हृषितो वा, [6]हृष्यम्। सामान्यरूपाणि सर्वाणि **पोषति**वत् (1026) बोध्यानि।

(2019) **" हेठ विबाधायाम् "** (I-भ्वादिः-266. अक. सेट्. आत्म.)

**विबाधनम्**=शाठ्यम्। 'अमुं परस्मैपदिष्वपि **केचित्** पठन्ति' इति **माधवः**। सौवादिक**तेकृ**धातुवत् (716) रूपाणि ऊह्यानि। 'हेठ' इति क्र्यादिष्वपि गृह्णातेः पूर्वं **केचित्** पठन्ति। तेषां [7]हेठ्नन् इति शतरि रूपमिति विशेषः।

(2020) **" हेड वेष्टने "** (I-भ्वादिः-778. सक. सेट्. पर.) **घटादिः**।

'हेडतेऽनादरे हेडेद्वेष्टने हिडयेन्मिथः॥' (श्लो. 85) इति **देवः**। हेडकः-डिका, हेडकः-डिका, हिहेडिषकः-षिका, हेहेडकः-डिका; इत्यादीनि रूपाणि भौवादिक**केलति**वत् (262) यथासम्भवमूह्यानि। अनादरार्थकस्य भौवादिकस्यैव मित्त्वार्थं परस्मैपदार्थं च घटादिषु पाठ इति **केचित्**।

(2021) **" हेडृ अनादरे "** (I-भ्वादिः-284. सक. सेट्. आत्म.)

'**हेडतेऽनादरे हेडे**द्वेष्टने हिडयेन्मिथः॥' (श्लो. 85) इति **देवः**। सर्वाणि रूपाणि भौवादिक**केलति** (262) वत् यथासम्भवमूह्यानि।

---

1. णिजन्तात् औणादिके इत्नुच्प्रत्यये रूपमेवम्।
2. '**हृषेरुलच्**' (द. उ. 8-106) इत्युलच्प्रत्ययः। **हर्षुलः**=सन्तुष्टः।
3. धातोरुदित्त्वात् क्त्वायामिड्विकल्पः। तेन निष्ठायामिण्निषेधः।
4. निष्ठायामस्य धातोः इटः प्राप्त्यभावात् '**हृषेर्लोमसु**' (7-2-29) इति लोमसु वाच्येषु इड्विकल्पो विधीयते। अत्राप्राप्तविभाषा।
5. '**हृष्टो** दन्तः' इत्यत्र भग्न इत्यर्थः। 'विस्मितप्रतिघातयोश्च' (वा. 7-2-29) इति इड्विकल्पः।
6. 'ऋदुपधात्—' (3-1-110) इति क्यप्।
7. शतरि 'क्र्यादिभ्यः—'(3-1-81) इति श्ना विकरणप्रत्ययः। 'श्नाऽभ्यस्तयोः—' (6-4-112) इत्याकारलोपः।



(2022) **" हेषृ अव्यक्ते शब्दे "** (I-भ्वादिः-621. अक. सेट्. आत्म.)

स्वभावादयं अश्वशब्दे वर्तते। हेषा-स्त्रियामकारप्रत्ययः। 'अव्यक्ते शब्दे' इति धातुपाठे बहुत्र पठितम्। लोकप्रयोगानुसारेण तेषां प्रतिनियतविषयत्वं बोध्यम्। तथाहि—" कौक्षे कर्दति, पर्दते गुदरवे, रेषेति वार्के रवे[हसे], बुक्केति श्वरवे भषेति, हयजे हेषेति **हेषेति** च॥' इति **केशवस्वामी**—" इति **माधवीये** प्रतिपादितम्। यथासम्भवं **केपति**वत् (261) रूपाण्यूह्यानि।

(2023) **" होडृ अनादरे "** (I-भ्वादिः-285. सक. सेट्. आत्म.)

'होडतीति गतौ होडेद्**होडतेऽनादरे** पुनः।' (श्लो. 86) इति **देवः**। भौवादिक**द्राखति**वत् (879) सर्वाणि रूपाण्यूह्यानि। अनीयर्प्रत्यये-अहोडनीयः। '**अहोडनीयान्** पशुपाल्यानसौ—' (धा. का. 1-38)।

(2024) **" होडृ गतौ "** (I-भ्वादिः-354. सक. सेट्. पर.)

होडन्-न्ती, इति शतरि रूपम्। '....प्रहूडितान् **होडद्**रोडद्यभिक्षुकैः।' (धा. का. 1-46)। भौवादिक**खोरति**वत् (363) रूपाण्यूह्यानि। 'हौडृ—' इति **क्षीरतरङ्गिणी**।

(2025) **" ह्नुङ् अपनयने "**

(II-अदादिः-1082. सक. अनिट्. आत्म.)

प्रायेणायं निपूर्वकः, अपपूर्वकोऽपि। देवदत्ताय [1]निह्नुवानः। ह्नावकः-विका, ह्नावकः-विका, जुह्नूषकः-षिका, जोह्नूयकः-यिका; ह्नोता-त्री, ह्नावयिता-त्री, जुह्नूषिता-त्री, जोह्नूयिता-त्री; इत्यादिकानि रूपाणि **वनूङ्** (266) धातुवत् यथासम्भवमूह्यानि।

(2026) **" ह्मल चलने "** (I-भ्वादिः-806. सक. सेट्. पर.)

ह्मालकः-लिका, [2]ह्मलकः-प्रह्मलकः-ह्मालकः-लिका, जिह्मलिषकः-षिका, जाह्मलकः-लिका; इत्यादीनि रूपाणि भौवादिक**क्मरति**वत् (268) यथासम्भवमूह्यानि।

---

1. 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (1-4-34) इति देवदत्तस्य सम्प्रदानत्वात् चतुर्थी। ज्ञीप्स्यमानः=बोधयितुमभिप्रेतः। देवदत्तविषयकं अपह्नवं बोधयितुमिच्छतीत्यर्थः।
2. 'ज्वलह्वलह्मलनमाम् अनुपसर्गाद् वा' (ग. सू. भ्वादिः) इति णौ मित्त्वविकल्पः। सोपसृष्टे तु नित्यं मित्त्वम्।

(2027) "ह्गे संवरणे" (I-भ्वादि:-787. सक. सेट्. पर.) **घटादि:**।
**संवरणम्**=तिरोधानम् इति **धा. का. व्याख्या** (2-8)। रूपाणि सर्वाणि भौवादिक**स्खदति**वत् (142) बोध्यानि। घटादित्वेन मित्वात् णिजन्ते ह्रस्वः।

(2028) "ह्रस शब्दे" (I-भ्वादि:-731. अक. सेट्. पर.)
धातूनामनेकार्थकत्वात् **ह्रासः** इत्यत्र अपक्षयोऽर्थः। [1]ह्रस्वम्। रूपाणि सर्वाणि भौवादिक**कशति**वत् (1384) बोध्यानि।

(2029) "ह्राद अव्यक्ते शब्दे"

(I-भ्वादि:-26. अक. सेट्. आत्म.)

**अव्यक्तशब्द:**=वाद्यादिघोषः। [2]नूपुरह्रादः, [3]ह्रदः, माहिकिह्रदः, [4]ह्रादिनी, [5]निर्ह्रादः। सामान्यरूपाणि भौवादिक**गाधति**वत् (394) यथासम्भवमूह्यानि।

(2030) "ह्री लज्जायाम्"

(III-जुहोत्यादि:-1085. अक. अनिट्. पर.)

'**ह्रीष्**—' इति **केचित्**। [6]ह्रीः, [7]ह्रीणः-ह्रीतः-ह्रीणवान्-ह्रीतवान्, [8]ह्रेपकः-

---

1. '**ह्रस्वं** लघु' (1-4-10) इति निर्देशात् वप्रत्यये, 'नेड् वशि कृति' (7-2-8) इतीण्निषेधे च साधुः। अत्र अल्पत्वं धात्वर्थः।
2. घञन्तोऽयम्। नूपुरस्याव्यक्तशब्द इत्यर्थः।
3. पचाद्यचि पृषोदरादित्वात् (6-3-109) ह्रस्वे रूपमेवमिति **केचित्**। 'कन्थापलद-नगरग्रामह्रदोत्तरपदात्—' (4-2-142) इत्यत्र निर्देशात् ह्रस्व इति **परे**। **माहिकिह्रदः** वाहीकदेशेषु ग्रामविशेषः।
4. ग्रह्यादित्वात् (3-1-134) णिनिप्रत्यये, स्त्रियां ङीपि च रूपमेवम्। **ह्रादिनी**=वज्रम्।
5. **निर्ह्रादः** वज्रघोषः। संज्ञायां घञ्।
6. क्विपि रूपमेवम्।
7. 'नुदविदोन्दत्राघ्रा**ह्रीभ्यो**ऽन्यतरस्याम्' (8-2-56) इति निष्ठानत्वविकल्पः। नत्वपक्षे णत्वम्।
8. णिजन्तात् ण्वुलि रूपमेवम्। 'अर्तिह्री—' (7-3-36) इत्यादिना पुगागमः। '**पुगन्त**लघूपधस्य च' (7-3-86) इति गुणः। एवं ण्यन्तरूपेषु सर्वत्राप्यस्य धातोः प्रक्रिया ज्ञेया।



पिका, [1]जिह्रियत्-ती [2]ह्रीकः-ह्लीकः, इति विशेषः। सामान्यरूपाणि '**डु क्रीञ्**' धातुवत् (274) बोध्यानि।

(2031) "ह्रीच्छ लज्जायाम्" (I-भ्वादि:-210. अक. सेट्. पर.)
दैवादिक**क्लिश्यति**वत् (287) सर्वाण्यपि रूपाण्यूह्यानि।

(2032) "ह्रेषृ अव्यक्ते शब्दे" (I-भ्वादि:-622. अक. सेट्. आत्म.)
स्वभावादयमश्वशब्दे वर्तते। ह्रेषा=अश्वध्वनिः। 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः स्त्रियाम्। भौवादिक**गेषति**वत् (429) सर्वाणि रूपाण्यूह्यानि।

(2033) "ह्लगे संवरणे" (I-भ्वादि:-788. सक. सेट्. पर.) **घटादि:**।
सर्वाणि रूपाणि भौवादिक**स्खदति**वत् (142) बोध्यानि।

(2034) "ह्लप व्यक्तायां वाचि" (X-चुरादि:-1659. अक. सेट्. उभ.)
चौरादिक**क्षापयति**वत् (282) रूपाणि सर्वाणि बोध्यानि।

(2035) "ह्लस शब्दे" (I-भ्वादि:-712. अक. सेट्. पर.)
भौवादिक**रसति**वत् रूपाण्यूह्यानि। घञि ह्लासः। 'तोसहासविहीनशङ्कजनित-**ह्लासात्** रसद्विक्तटम्॥' (धा. का. 1-88)।

(2036) "ह्लादी सुखे च" (I-भ्वादि:-27. अक. सेट्. आत्म.)
चकारात् पूर्वधात्वर्थः 'अव्यक्तशब्दे' इति अनुषज्यते। [3]आह्लन्नः-आह्लन्नवान्, [4]आह्लत्तिः। रूपाणि **गाधति**वत् (394) यथासम्भवमूह्यानि।

(2037) "ह्वल चलने"

(I-भ्वादि:-931. अक. सेट् पर.) **घटादि:**।

---

1. शतरि श्लौ, द्विर्वचने, 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधे इयङादेशे च रूपम्।
2. 'ह्रियः कन्, [कुग्] रश्च लो वा' (द. उ. 1-153) इति कन्प्रत्ययः। बाहुलकात् कनः ककारस्य न इत्संज्ञा। पक्षे धातुरेफस्य लकारोऽपि। **ह्लीकः**—लज्जाविशिष्टः।
3. '**श्वीदितः**—' (7-2-14) इति निष्ठायामिण्निषेधः। '**ह्लादो** निष्ठायाम्' (6-4-95) इति निष्ठायां ह्रस्वे निष्ठातकारधातुदकारयोर्नत्वे च रूपमेवम्।
4. क्तिनि रूपमेवम्। '**ह्लादः**—' (6-4-95) इत्यत्र योगविभागात् क्तिन्यपि ह्रस्व इति **काशिकादिषु** स्पष्टम्। **भाष्ये** योगविभागो न दृश्यते।

ह्वालकः-लिका, ह्वलकः-प्रह्वलकः-ह्वालकः-लिका, जिह्वलिषकः-षिका, जाह्वलकः-लिका ; इत्यादीनि रूपाणि भौवादिक**कलथति**वत् (280) यथासम्भवमूह्यानि ।

(2038) "**ह्वृ कौटिल्ये**" (I-भ्वादिः-931. अक. अनि. पर.)

ह्वारकः-रिका, ह्वारकः-रिका, [2]जुह्वूर्षकः-र्षिका, जाह्वरकः-रिका; इत्यादीनि रूपाणि यथासम्भवमूह्यानि। [3]उपह्वरः। [4]ह्वरिष्यन्-न्ती ।

## (2039) "ह्वेञ् स्पर्धायां शब्दे च"

(I-भ्वादिः-1008. अक. अनि. उभ.)

ह्वायकः-यिका, [5]ह्वायकः-यिका, [6]जुहूषकः-षिका, [7]जोहूयकः-यिका ;
ह्वाता-ह्वात्री, ह्वाययिता-त्री, जुहूषिता-त्री, जोहूयिता-त्री ;
इत्यादीनि रूपाणि सर्वाण्यपि **वयति**वत् (1640) बोध्यानि ।
[8]जुहावयिषुः, [9]निह्वयमानः, संह्वयमानः-उपह्वयमानः-विह्वयमानः, [10]आह्वयमानो

---

1. '**ज्वलह्वल**—' (ग. सू. भ्वादिः) इत्यादिना णिजन्ते मित्त्वविकल्पः । सोपसृष्टात् तु नित्यं मित्त्वम् ।
2. सन्नन्ते 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'उद् ओष्ठ्यपूर्वस्य' (7-1-102) इति दीर्घे च रूपमेवम् ।
3. पचाद्यचि रूपमेवम् । **उपह्वरः**=एकान्तवार्ता ।
4. '**ऋद्धनोः** स्ये' (7-2-70) इतीडागमः ।
5. 'आदेचः—' (6-1-45) इत्यात्वे, 'शाच्छासाह्वा—' (7-3-37) इति णिजन्ते सर्वत्र युगागमः । आदन्तलक्षणपुकोऽपवादः ।
6. 'अभ्यस्तस्य च' (6-3-33) इति सम्प्रसारणम्, पूर्वरूपम्, 'हलः' (6-4-2) इति दीर्घः । धातोरधुना उकारान्तत्वात् 'इको झल्' (1-2-9) इति सनः कित्त्वम् । तेन गुणो न । एवमेव सन्नन्ते सर्वत्र प्रक्रिया ।
7. यङन्तेऽपि 'अभ्यस्तस्य च' (6-3-33) इति सम्प्रसारणादिकं बोध्यम् । उत्तरखण्डे 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
8. ण्यन्तात् सनि उप्रत्यये '**ह्वः** सम्प्रसारणम्' (6-1-32) इति सम्प्रसारणे च रूपमेवम् ।
9. '**निसमुपविभ्यो ह्वः**' (1-3-30) इति आत्मनेपदम् ।
10. '**स्पर्धायामाङः**' (1-3-31) इति आत्मनेपदम् । स्पर्धमान आह्वानं करोतीत्यर्थः । "अत्र स्पर्धा धात्वर्थस्य शब्दनस्य हेतुतया विषयः" इति **काशिकादिषु** स्पष्टम् ।



मल्लो मल्लम्, [1]आह्वः-प्रह्वः, [2]आहूयमानः, आहूतः-आहूतवान्, हूत्वा-आहूय, [3]स्वर्गाह्वायः, [4]आह्वयः, [5]निहवः-अभिहवः-विहवः [6]आहवः, [7]हवः, [8]आहावः, [9]आह्वाः, [10]आहूतिः-संहूतिः, इति विशेषरूपाणि ।

---

1. 'सर्वत्र प्रसारणिभ्यो डः' (वा. 3-2-48) इति वचनात् कर्तरि आदन्तत्वलक्षणकप्रत्ययस्यापवादो डप्रत्ययः । डित्त्वात् टिलोपः । **भाष्ये** तु 'आतोऽनुपसर्गे कः' (3-2-3) इत्यत्र कप्रत्यये सम्प्रसारणे, यणि **आह्वः** इत्यपीति साधितम् ।
2. यगन्ताच्छानचि 'वचिस्वपियजादीनां किति' (6-1-15) इति सम्प्रसारणे '**हलः**' (6-4-2) इति दीर्घे च रूपम् । एवं क्त्वा-ल्यप्-क्तादिष्वपि प्रक्रियोह्या ।
3. 'ह्वावामश्च' (3-2-2) इति कर्मण्युपपदेऽण्प्रत्ययः । आदन्तलक्षणकप्रत्ययापवादः ।
4. बाहुलकात् **आह्वयः** इति **क्षीरस्वामी** । अत्र 'इच्छा' (3-3-101) इति सूत्रे **प्रक्रियासर्वस्वम्** ।
'बाहुलकाद् **आह्वयतेः** शः पुंस्त्वं चेति भाषते **स्वामी** ।
शित्वादात्वाभावः, शपि सति पररूपम्—**आह्वयो** नाम ॥' इति ।
नामेति । '**आह्वयः**' इत्यनेन **नाम**=अभिधानमुच्यत इत्यर्थः ।
5. '**ह्वः सम्प्रसारणं च न्यभ्युपविषु**' (3-3-72) इति भावेऽप्प्रत्यये सम्प्रसारणादिकम् ।
6. अप्प्रत्यये, 'आङि युद्धे' (3-3-73) इति सम्प्रसारणम् । **आहवः**=युद्धः ।
7. 'भावेऽनुपसर्गस्य' (3-3-75) इति सम्प्रसारणम् । अप् ।
8. '**निपानमाहावः**' (3-3-74) इति निपातनात् साधुः । उपकूपं जलाशये विवक्षिते भावेऽप्प्रत्यये सम्प्रसारणवृद्धी निपातनात् । **आहावः**=यत्र गावो जलाशये पानार्थमाहूयन्ते स प्रदेशः ।
9. '**आतश्चोपसर्गे**' (3-3-106) इत्यङि '**आतो** लोप इटि च' (6-4-64) इत्याकारलोपः । **आह्वा** नाम ।
10. अत्र बाहुलकात् स्त्रियां क्तिन् । 'आतश्चोपसर्गे' (3-3-106) इत्यङोऽपवादः ।

---

**॥ शुभं भूयात् ॥**